र्तव्या । जाग्रत्समये त्वभावितस्मर्तव्येति । सर्वाः स्मृतयः प्रमाणविपर्ययविकल्पनिद्रास्मृतीनामनुभवात्प्रभवन्ति । सर्वाश्चैता वृत्तयः सुखदुःखमोहात्मिकाः । सुखदुःखमोहाश्च क्लेशेषु व्याख्येयाः । सुखानुशयी रागः । दुःखानुशयी द्वेषः । मोहः पुनरविद्येति । एताः सर्वा वृत्तयो निरोद्धव्याः । आसां निरोधे संप्रज्ञातो वा समाधिर्भवत्यसंप्रज्ञातो वेति ॥ ११ ॥

अथाऽऽसां निरोधे क उपाय इति—

**अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥**

चित्तनदी नामोभयतोवाहिनी । वहति कल्याणाय वहति पापाय च । या तु कैवल्यप्राग्भारा विवेकविषयनिम्ना सा कल्याणवहा । संसारप्राग्भाराऽविवेकविषयनिम्ना पापवहा । तत्र वैराग्येण विषयस्रोतः खिली क्रियते । विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यत इत्युभयाधीनश्चित्तवृत्तिनिरोधः ॥ १२ ॥

**तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥**

चित्तस्यावृत्तिकस्य प्रशान्तवाहिता स्थितिः । तदर्थः प्रयत्नो

---

स्मृतिरपि तु विपर्ययस्तल्लक्षणोपपन्नत्वात्स्मृत्याभासतया स्मृतिरुक्ता । प्रमाणाभासमिव प्रमाणमिति भावः । कस्मात्पुनरन्ते स्मृतेरुपन्यास इत्यत आह—**सर्वाः स्मृतय इति** । अनुभवः प्राप्तिः । प्राप्तिपूर्वा वृत्तिः स्मृतिस्ततः स्मृतीनामुपजन इत्यर्थः । ननु ये पुरुषं क्लिश्नन्ति ते निरोद्धव्याः प्रेक्षावता । क्लेशाश्च तथा । न च वृत्तयः, तत्किमर्थमासां निरोध इत्यत आह—**सर्वाश्चैता इति** । सुगमम् ॥ ११ ॥

निरोधोपायं पृच्छति—**अथेति** । सूत्रेणोत्तरमाह—**अभ्यासवैराग्याभ्यां तन्निरोधः** । अभ्यासवैराग्ययोर्निरोधे जनयितव्येऽवान्तरव्यापारभेदेन समुच्चयो न तु विकल्प इत्याह—**चित्तनदीति** । प्राग्भारः प्रबन्धः । निम्नता गम्भीरता, अगाधतेति यावत् ॥ १२ ॥

तत्राभ्यासस्य स्वरूपप्रयोजनाभ्यां लक्षणमाह—**तत्र स्थितौ यत्नोऽभ्यासः** । तद्व्याचष्टे—**चित्तस्यावृत्तिकस्य** राजसतामसवृत्तिरहितस्य प्रशान्तवाहिता विमलता सात्त्विकवृत्तिवाहितैकाग्रता स्थितिः । **तदर्थ इति** । स्थिताविति निमित्तस-

---

१ क. ख. च. छ. सर्वाश्चैताः स्मृ॰ ।

वीर्यमुत्साहः । तत्संपिपादयिषया तत्साधनानुष्ठानमभ्यासः ॥ १३ ॥

**स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः ॥ १४ ॥**

दीर्घकालासेवितो निरन्तरासेवितः सत्कारासेवितः। तपसा ब्रह्मचर्येण विद्यया श्रद्धया च संपादितः सत्कारवान्दृढभूमिर्भवति। व्युत्थानसंस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः ॥ १४ ॥

**दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥**

स्त्रियो[१]ऽन्नपानमैश्वर्यमिति दृष्टविषये[२] वितृष्णस्य[३] स्वर्गवैदेह्यप-

---

मही व्याख्याता। यथा "चर्मणि द्वीपिनं हन्ति" इति। प्रयत्नमेव पर्यायाभ्यां विशदयति—वीर्यमुत्साह इति। तस्येच्छायोनितामाह—तत्संपिपादयिषया। तदिति स्थितिं परामृशति। प्रयत्नस्य विषयमाह—तत्साधनेति। स्थितिसाधनान्यन्तरङ्गबहिरङ्गाणि यमनियमादीनि। साधनगोचरः कर्तृव्यापारो न फलगोचर इति ॥ १३ ॥

ननु व्युत्थानसंस्कारेणानादिना परिपन्थिना प्रतिबद्धोऽभ्यासः कथं स्थित्यै कल्पत इत्यत आह—स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः। सोऽयमभ्यासो विशेषणत्रयसंपन्नः सन्दृढावस्थो न सहसा व्युत्थानसंस्कारैरभिभूतस्थितिरूपविषयो भवति। यदि पुनरेवंभूतमप्यभ्यासं कृत्वोपरमेत्ततः कालपरिवासेनाभिभूयेत। तस्मान्नोपरन्तव्यमिति भावः ॥ १४ ॥

वैराग्यमाह—दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्। चेतनाचेतनेषु दृष्टविषयेषु वितृष्णतामाह—स्त्रिय इति। ऐश्वर्यमाधिपत्यम्। अनुश्रवो वेदस्ततोऽधिगता आनुश्रविकाः स्वर्गादयः। तत्रापि वैतृष्ण्यमाह—स्वर्गेति। देहरहिता विदेहाः करणेषु लीनास्तेषां भावो वैदेह्यम्। अन्ये तु प्रकृतिमेवाऽऽत्मानमभिमन्यमानाः प्रकृत्युपासकाः प्रकृतौ साधिकारायामेव लीनास्तेषां भावः प्रकृतिलयत्वं तत्प्राप्तिविषये। आनुश्रविकविषये वितृष्णस्याऽऽनुश्रविकविषये वितृष्णो हि स्वर्गादिप्राप्तिविषये वितृष्ण इत्युच्यते। ननु यदि वैतृष्ण्यमात्रं वैराग्यं हन्त विष-

---

१ ख. च. °योऽन्नं पा°। २ ग. घ. ङ. °षयवि°। क. ख. विरक्तस्य।

कृतिलयत्वप्राप्तावानुश्रविकविषये वितृष्णस्य दिव्यादिव्यविषय-संप्रयोगेऽपि चित्तस्य विषयदोषदर्शिनः प्रसंख्यानबलादनाभो-गात्मिका हेयोपादेयशून्या वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥

**तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥**

दृष्टानुश्रविकविषयदोषदर्शी विरक्तः पुरुषदर्शनाभ्यासा-त्तच्छुद्धिप्रविवेकाप्यायितबुद्धिर्गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यो

---

याप्राप्तावपि तदस्तीति वैराग्यं स्यादित्यत आह—दिव्यादिव्येति । न वैतृष्ण्यमात्रं वैराग्यमपि तु दिव्यादिव्यविषयसंप्रयोगेऽपि चित्तस्यानाभोगात्मिका । तामेव स्पष्ट-यति—हेयोपादेयशून्या । आसङ्गद्वेषरहिता वशीकारसंज्ञा । कुतः पुनरि-यमित्यत्राऽऽह—प्रसंख्यानबलादिति । तापत्रयपरीतता विषयाणां दोषस्तत्परिभाव-नया तत्साक्षात्कारः प्रसंख्यानं तद्बलादित्यर्थः । यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रि-यसंज्ञा वशीकारसंज्ञा चेति चतस्रः संज्ञा इत्यागमिनः । रागादयः खलु कषायाश्चित्त-वर्तिनस्तैरिन्द्रियाणि यथास्वं विषयेषु प्रवर्तन्ते । तन्मा प्रवर्तिषतेन्द्रियाणि तत्तद्विषये-ष्विति तत्परिपाचनायाऽऽरम्भः प्रयत्नः सा यतमानसंज्ञा । तदारम्भे सति केचित्कषायाः पक्वाः पच्यन्ते पक्ष्यन्ते च केचित् । तत्र पक्ष्यमाणेभ्यः पक्वानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा । इन्द्रियप्रवर्तनासमर्थतया पक्वानामौत्सुक्यमात्रेण मनसि व्यवस्थानमेके-न्द्रियसंज्ञा । औत्सुक्यमात्रस्यापि निवृत्तिरुपस्थितेष्वपि दिव्यादिव्यविषयेषूपेक्षाबुद्धिः संज्ञात्रयात्परा वशीकारसंज्ञा । एतयैव च पूर्वासां चरितार्थत्वान्न ताः पृथगुक्ता इति सर्वमवदातम् ॥ १५ ॥

अपरं वैराग्यमुक्त्वा परमाह—**तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्** । अपरवैरा-ग्यस्य परं वैराग्यं प्रति कारणत्वम् । तत्र च द्वारमादर्शयति—**दृष्टानुश्रविकविषय-दोषदर्शी विरक्त इति** । अनेनापरं वैराग्यं दर्शितम् । पुरुषदर्शनाभ्यासादागमानु-मानाचार्योपदेशसमधिगतस्य पुरुषस्य दर्शनं तस्याभ्यासः पौनःपुन्येन निषेवणं तस्मात्तस्य दर्शनस्य शुद्धी रजस्तमःपरिहाण्या सत्त्वैकतानता तया यो गुणपुरुषयोः प्रकर्षेण विवेकः पुरुषः शुद्धोऽनन्तस्तद्विपरीता गुणा इति, तेनाऽऽप्यायिता बुद्धि-र्यस्य योगिनः स तथोक्तः । तदनेन धर्ममेघाख्यः समाधिरुक्तः । स तथाभूतो योगी गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यः सर्वथा विरक्तः सत्त्वपुरुषान्यताख्यातावपि गुणात्मि-कायां यावद्विरक्त इति । तत्तस्माद्द्वयं वैराग्यम् । पूर्वं हि वैराग्यं सत्त्वसमुद्रेकविधूत-तमसि रजःकणकलङ्कसंपृक्ते चित्तसत्त्वे । तच्च तौष्टिकानामपि समानम् । ते हि

---

१ ख. 'वर्त्यन्ते । २ क. 'तेषु च दि° ।

विरक्त इति । तद्द्वयं वैराग्यम् । तत्र यदुत्तरं तज्ज्ञानप्रसादमात्रम् । यस्योदये सति योगी प्रत्युदितख्यातिरेवं मन्यते–प्राप्तं प्रापणीयं, क्षीणाः क्षेतव्याः क्लेशाः, छिन्नः श्लिष्टपर्वा भवसंक्रमः, यस्याविच्छेदाज्जनित्वा म्रियते मृत्वा च जायत इति । ज्ञानस्यैव परा काष्ठा वैराग्यम् । एतस्यैव हि नान्तरीयकं कैवल्यमिति ॥ १६ ॥

अथोपायद्वयेन निरुद्धचित्तवृत्तेः कथमुच्यते संप्रज्ञातः समाधिरिति–

**वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः ॥ १७ ॥**

---

तेनैव प्रकृतिलया बभूवुः । यथोक्तम्— वैराग्यात्प्रकृतिलय इति । तत्र तयोर्द्वयोर्मध्ये यदुत्तरं तज्ज्ञानप्रसादमात्रम् । मात्रग्रहणेन निर्विषयतां सूचयति । तदेव हि तादृशं चित्तसत्त्वं रजोलेशमलेनाप्यपरामृष्टमस्याऽऽश्रयोऽत एव ज्ञानप्रसाद इत्युच्यते । चित्तसत्त्वं हि प्रसादस्वभावमपि रजस्तमःसंपर्कान्मलिनतामनुभवति । वैराग्याभ्यासविमलवारिधाराधौतसमस्तरजस्तमोमलं त्वतिप्रसन्नं ज्ञानप्रसादमात्रपरिशेषं भवति । तस्य गुणानुपादेयत्वाय दर्शयति–यस्योदये सति योगी प्रत्युदितख्यातिः। ख्यातिविशेषे सति वर्तमानख्यातिमानित्यर्थः । प्रापणीयं कैवल्यं प्राप्तम् । यथा वक्ष्यति–जीवन्नेव विद्वान्मुक्तो भवति । संस्कारमात्रस्य च्छिन्नमूलस्य सिद्धत्वादिति भावः । कुतः प्राप्तं, यतः–क्षीणाः क्षेतव्याः क्लेशा अविद्यादयः सवासनाः । नन्वस्ति धर्माधर्मसमूहो भवस्य जन्ममरणप्रबन्धस्य संक्रमः प्राणिनाम् । तत्कुतः कैवल्यमित्यत आह—छिन्न इति । श्लिष्टानि निःसंधीनि पर्वाणि यस्य स तथोक्तः । धर्माधर्मसमूहस्य समूहिनः पर्वाणि तानि श्लिष्टानि । न हि जातु जन्तुर्मरणजन्मप्रबन्धेन त्यक्ष्यते । सोऽयं भवसंक्रमः क्लेशक्षये छिन्नः । यथा वक्ष्यति–" क्लेशमूलः कर्माशयः " [ २ । १२ ] । " सति मूले तद्विपाकः " [ २ । १३ ] इति । ननु प्रसंख्यानपरिपाकं धर्ममेघं च निरोधमन्तरा किं तदस्ति यज्ज्ञानप्रसादमात्रमित्यत आह—ज्ञानस्यैवेति । धर्ममेघभेद एव परं वैराग्यं नान्यत् । यथा वक्ष्यति— " प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः " [ ४ । २९ ] [ इति ] " तदा सर्वावरणमलापेतस्य ज्ञानस्याऽऽनन्त्याज्ज्ञेयमल्पम् " [ ४।३१] इति च । तस्मादेतस्य हि नान्तरीयकमविनाभावि कैवल्यमिति ॥ १६ ॥

उपायमभिधाय सप्रकारोपेयकथनाय पृच्छति–अथोपायद्वयेनेति । वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः । संप्रज्ञातपूर्वकत्वादसंप्रज्ञातस्य प्रथमं

---

१ ग. घ. ङ. च. °ये प्र° । छ. °ये यो° । २ ख. °ति प्र° । ३ ग. छ. °तानु° । ४ क. ञ. °वुः । तथो° ।

वितर्कश्चित्तस्याऽऽलम्बने स्थूल आभोगः । सूक्ष्मो विचारः । आनन्दो ह्लादः । एकात्मिका संविदस्मिता । तत्र प्रथमश्चतुष्टयानुगतः समाधिः सवितर्कः । द्वितीयो वितर्कविकलः सविचारः । तृतीयो विचारविकलः सानन्दः । चतुर्थस्तद्विकलोऽस्मितामात्र इति । सर्व एते सालम्बनाः समाधयः ॥ १७ ॥

अथासंप्रज्ञातः समाधिः किमुपायः किंस्वभावो वेति—

**विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥**

सर्ववृत्तिप्रत्ययस्तमये संस्कारशेषो निरोधश्चित्तस्य समाधिरसंप्रज्ञातः । तस्य परं वैराग्यमुपायः । सालम्बनो ह्यभ्यासस्तत्सा-

---

संप्रज्ञातोपवर्णनम् । संप्रज्ञातसामान्यं वितर्कविचारानन्दास्मितानां रूपैः स्वरूपैरनुगमात्प्रतिपत्तव्यम् । वितर्कं विवृणोति—**चित्तस्येति** । स्वरूपसाक्षात्कारवती प्रज्ञाऽऽभोगः । स च स्थूलविषयत्वात्स्थूलः । यथा हि प्राथमिको धानुष्कः स्थूलमेव लक्ष्यं विध्यत्यथ सूक्ष्ममेवं प्राथमिको योगी स्थूलमेव पाञ्चभौतिकं चतुर्भुजादि ध्येयं साक्षात्करोत्यथ सूक्ष्ममिति । एवं चित्तस्याऽऽलम्बने सूक्ष्म आभोगः स्थूलकारणभूतसूक्ष्मपञ्चतन्मात्रलिङ्गालिङ्गविषयो विचारः । तदेवं ग्राह्यविषयं दर्शयित्वा ग्रहणविषयं दर्शयति—**आनन्द इति** । इन्द्रिये स्थूल आलम्बने चित्तस्याऽऽभोगो ह्लाद आनन्दः । प्रकाशशीलतया खलु सत्त्वप्रधानादहंकारादिन्द्रियाण्युत्पन्नानि । सत्त्वं सुखमिति तान्यपि सुखानीति तस्मिन्नाभोगो ह्लाद इति । ग्रहीतृविषयं संप्रज्ञातमाह—**एकात्मिका संविदिति** । अस्मिताप्रभवानीन्द्रियाणि । तेनैषामस्मिता सूक्ष्मं रूपम् । सा चाऽऽत्मना ग्रहीत्रा सह बुद्धिरेकात्मिका संवित्[1] । तस्यां च ग्रहीतुरन्तर्भावाद्भवति ग्रहीतृविषयः संप्रज्ञात इति । चतुर्णामपरमप्यवान्तरविशेषमाह—**तत्र प्रथम इति** । कार्यं कारणानुप्रविष्टं न कारणं कार्येण तदयं स्थूल आभोगः स्थूलसूक्ष्मेन्द्रियास्मिताकारणचतुष्टयानुगतो भवति । उत्तरे तु त्रिद्व्येककारणकास्त्रिद्व्येकरूपा भवन्ति । असंप्रज्ञाताद्भिनत्ति—**सर्व एत इति** ॥ १७ ॥

क्रमप्राप्तमसंप्रज्ञातमवतारयितुं पृच्छति—**अथेति** । **विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः** । पूर्वपदेनोपायकथनमुत्तराभ्यां च स्वरूपकथनम् । मध्यमं पदं विवृणोति—**सर्ववृत्तीति** । प्रथमं पदं व्याचष्टे—**तस्य परमिति** । विरामो वृत्तीनामभावस्तस्य प्रत्ययः कारणं तस्याभ्यासस्तदनुष्ठानं पौनःपुन्यं तदेव पूर्वं यस्य स तथोक्तः । अथापरं वैराग्यं निरोधकारणं कस्मान्न भवतीत्यत आह—**सालम्बनो हीति** ।

---

१ ख. झ. °विदिति । त° ।

धनाय न कल्पत इति विरामप्रत्ययो निर्वस्तुक आलम्बनी क्रियते। स चार्थशून्यः। तदभ्यासपूर्वकं[1] हि चित्तं निरालम्बनमभावप्राप्तमिव भवतीत्येष निर्बीजः समाधिरसंप्रज्ञातः ॥ १८ ॥

स खल्वयं द्विविधः—उपायप्रत्ययो भवप्रत्ययश्च। तत्रोपायप्रत्ययो योगिनां भवति।

भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥

विदेहानां देवानां भवप्रत्ययः। ते हि स्वसंस्कारमात्रोपयोगेन[3] चित्तेन कैवल्यपदमिवानुभवन्तः स्वसंस्कारविपाकं[2] तथा-

---

कार्यसरूपं कारणं युज्यते न विरूपम्। विरूपं चापरं वैराग्यं सालम्बनं निरालम्बनसमाधिना कार्येण। तस्मान्निरालम्बनादेव ज्ञानप्रसादमात्रात्तस्योत्पत्तिर्युक्ता। धर्ममेघसमाधिरेव हि नितान्तविगलितरजस्तमोमलाद्बुद्धिसत्त्वादुपजातस्तत्तद्विषयातिक्रमेण प्रवर्तमानोऽनन्तो विषयावद्यदर्शी समस्तविषयपरित्यागाच्च स्वरूपप्रतिष्ठः सन्निरालम्बनः संस्कारमात्रशेषस्य निरालम्बनस्य समाधेः कारणमुपपद्यते सारूप्यादिति। आलम्बनीकरणमाश्रयणमभावप्राप्तमिव वृत्तिरूपकार्याकरणान्निर्बीजो निराम्बलनः। अथवा बीजं क्लेशकर्माशयास्ते निष्क्रान्ता यस्मात्स तथा ॥ १८ ॥

निरोधसमाधेरवान्तरभेदं हानोपादानाङ्गमादर्शयति—स खल्वयं निरोधसमाधिर्द्विविधः—उपायप्रत्ययो भवप्रत्ययश्च। उपायो वक्ष्यमाणः श्रद्धादिः प्रत्ययः कारणं यस्य निरोधसमाधेः स तथोक्तः। भवन्ति जायन्तेऽस्यां जन्तव इति भवोऽविद्या। भूतेन्द्रियेषु वा विकारेषु प्रकृतिषु वाऽव्यक्तमहदहंकारपञ्चतन्मात्रेष्वनात्मस्वात्मख्यातिस्तौष्टिकानां वैराग्यसंपन्नानां, स खल्वयं भवः प्रत्ययः कारणं यस्य निरोधसमाधेः स भवप्रत्ययः। तत्र तयोर्मध्य उपायप्रत्ययो योगिनां मोक्ष्यमाणानां भवति। विशेषविधानेन शेषस्य मुमुक्षुसंबन्धं निषेधति। केषां तर्हि भवप्रत्यय इत्यत्र सूत्रेणोत्तरमाह—**भवप्रत्ययो विदेहप्रकृतिलयानाम्**। विदेहाश्च प्रकृतिलयाश्च तेषामित्यर्थः। तद्व्याचष्टे—**विदेहानां देवानां भवप्रत्ययः**। भूतेन्द्रियाणामन्यतमदा(मा)त्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमिन्द्रियेषु भूतेषु वा लीनाः संस्कारमात्रावशेषमनसः षाट्कौशिकशरीररहिता विदेहाः। ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः प्राप्नुवन्तो विदेहाः। अवृत्तिकत्वं च कैव-

---

१ ग. घ. ङ. च. °पूर्वं चि°। २ ख. छ. °कं चि°। ३ ख. छ. °पगतेन।

जातीयकमतिवाहयन्ति । तथा प्रकृतिलयाः साधिकारे चेतसि प्रकृतिलीने कैवल्यपदमिवानुभवन्ति, यावन्न पुनरावर्ततेऽधिकारवशाच्चित्तमिति ॥ १९ ॥

**श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥**

उपायप्रत्ययो योगिनां भवति । श्रद्धा चेतसः संप्रसादः ।

---

त्वेन सारूप्यं, साधिकारसंस्कारशेषता च वैरूप्यम् । संस्कारमात्रोपभोगेनेति क्वचित्पाठः । तस्यार्थः—संस्कारमात्रमेवोपभोगो यस्य न तु चित्तवृत्तिरित्यर्थः । प्राप्तावधयः स्वसंस्कारविपाकं तथाजातीयकमतिवाहयन्त्यतिक्रामन्ति पुनरपि संसारे विशन्ति । तथा च वायुप्रोक्तम्—

'दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णम्' इति ।

तथा प्रकृतिलयाश्चाव्यक्तमहदहंकारपञ्चतन्मात्रेष्वन्यतमदा(मा)त्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमव्यक्तादीनामन्यतमस्मिँल्ली(मे लीनाः) साधिकारेऽचरितार्थे । एवं हि चरितार्थं चेतः स्याद्यदि विवेकख्यातिमपि जनयेदजनितसत्त्वपुरुषान्यताख्यातेस्तु चेतसोऽचरितार्थस्यास्ति साधिकारतेति । **साधिकारे चेतसि प्रकृतिलीने कैवल्यपदमिवानुभवन्ति, यावन्न पुनरावर्ततेऽधिकारवशाच्चित्तमिति** । प्रकृतिसाम्यमुपगतमप्यवधिं प्राप्य पुनरपि प्रादुर्भवति ततो विविच्यते । यथा वर्षातिपाते मृद्भावमुपगतो मण्डूकदेहः पुनरम्भोदवारिधारावसेकान्मण्डूकदेहभावमनुभवतीति । तथा च वायुप्रोक्तम्—

'सहस्रं त्वाभिमानिकाः ।
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः ॥
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः ।
पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते' ॥ इति ।

तदस्य पुनर्भवप्राप्तिहेतुतया हेयत्वं सिद्धम् ॥ १९ ॥

योगिनां तु समाधेरुपायक्रममाह—**श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्** । नन्विन्द्रियादिचिन्तका अपि श्रद्धावन्त एवेत्यत आह—**श्रद्धा चेतसः संप्रसादः** । स चाऽऽगमानुमानाचार्योपदेशसमधिगततत्त्वविषयो भवति हि चेतसः संप्रसा-

---

१ क. ग. ङ. 'कृतौ ली' ।

**सा हि जननीव कल्याणी योगिनं पाति। तस्य हि श्रद्दधानस्य विवेकार्थिनो वीर्यमुपजायते। समुपजातवीर्यस्य स्मृतिरुपतिष्ठते। स्मृत्युपस्थाने च चित्तमनाकुलं समाधीयते। समाहितचित्तस्य प्रज्ञाविवेक उपावर्तते। येन यथार्थं वस्तु जानाति। तदभ्यासात्तत्तद्विषयाच्च वैराग्यादसंप्रज्ञातः समाधिर्भवति ॥२०॥**

**ते खलु नव योगिनो मृदुमध्याधिमात्रोपाया भवन्ति। तद्यथा—मृदूपायो मध्योपायोऽधिमात्रोपाय इति। तत्र मृदूपायस्त्रिविधः–मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेग इति। तथा मध्योपायस्तथाऽधिमात्रोपाय इति। तत्राधिमात्रोपायानां—**

### तीव्रसंवेगानामासन्नः ॥ २१ ॥

**समाधिलाभः समाधिफलं च भवतीति ॥ २१ ॥**

---

दोऽभिरुचिरतीच्छा श्रद्धा। नेन्द्रियादिष्वात्माभिमानिनामभिरुचिरसंप्रसादो हि स व्यामोहमूलत्वादित्यर्थः। कुतोऽसावेव श्रद्धेत्यत आह–**सा हि जननीव कल्याणी योगिनं पाति**। विमार्गपातजन्मनोऽनर्थात्। सोऽयमिच्छाविशेष इष्यमाणविषयं प्रयत्नं प्रसूत इत्याह—**तस्य हि श्रद्दधानस्य**। तस्य विवरणं—**विवेकार्थिनो वीर्यमुपजायते**। स्मृतिर्ध्यानमनाकुलमविक्षिप्तं, समाधीयते योगाङ्गसमाधियुक्तं भवति। यमनियमादिनान्तरीयकसमाध्युपन्यासेन च यमनियमादयोऽपि सूचिताः। तदेवमखिलयोगाङ्गसंपन्नस्य संप्रज्ञातो जायत इत्याह—**समाहितचित्तस्येति**। प्रज्ञाया विवेकः प्रकर्ष उपजायते। संप्रज्ञातपूर्वमसंप्रज्ञातोत्पादमाह—**तदभ्यासात्**तत्रैव तत्तद्भूमिप्राप्तौ **तत्तद्विषयाच्च वैराग्यादसंप्रज्ञातः समाधिर्भवति**। स हि कैवल्यहेतुः सत्त्वपुरुषान्यताख्यातिपूर्वो हि निरोधश्चित्तमखिलकार्यकरणेन चरितार्थमधिकारादवसादयति ॥ २० ॥

ननु श्रद्धादयश्चेद्योगोपायास्तर्हि सर्वेषामविशेषेण समाधितत्फले स्याताम्। दृश्यते तु कस्यचित्सिद्धिः कस्यचिदसिद्धिः कस्यचिच्चिरेण सिद्धिः कस्यचिच्चिरतरेण कस्यचित्क्षिप्रमित्यत आह—**ते खलु नव योगिन इति**। उपायाः श्रद्धादयो मृदुमध्याधिमात्राः प्राग्भवीयसंस्कारादृष्टवशाद्येषां ते तथोक्ताः। संवेगो वैराग्यं तस्यापि मृदुमध्यतीव्रता प्राग्भवीयवासनादृष्टवशादेवेति तेषु यादृशां क्षेपीयसी सिद्धिस्तान्दर्शयति सूत्रेण—**तीव्रसंवेगानामासन्न इति सूत्रम्**। शेषं भाष्यम्। समाधेः संप्रज्ञातस्य फलमसंप्रज्ञातस्तस्यापि कैवल्यम् ॥ २१ ॥

---

१ ग. घ. ङ. °थावद्वस्तु। २ ख. ग. घ. ङ. च. °त्तद्वि°। ३ क. ख. छ. °नो भवन्ति। मृ°।

**मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥**

मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति । ततोऽपि विशेषः । तद्विशेषादपि मृदुतीव्रसंवेगस्याऽऽसन्नः, ततो मध्यतीव्रसंवेगस्याऽऽसन्नतरः, तस्मादधिमात्रतीव्रसंवेगस्याधिमात्रोपायस्याप्यासन्नतमः समाधिलाभः समाधिफलं चेति ॥ २२ ॥

किमेतस्मादेवाऽऽसन्नतमः समाधिर्भवति । अथास्य लाभे भवत्यन्योऽपि कश्चिदुपायो न वेति—

**ईश्वरप्रणिधानाद्वा ॥ २३ ॥**

प्रणिधानाद्भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण । तदभिध्यानमात्रादपि योगिन आसन्नतमः समाधिलाभः समाधिफलं च भवतीति ॥ २३ ॥

अथ प्रधानपुरुषव्यतिरिक्तः कोऽयमीश्वरो नामेति—

**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥**

---

मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः । निगदव्याख्यातेन भाष्येण व्याख्यातमिति ॥ २२ ॥

सूत्रान्तरं पातयितुं विमृशति— किमेतस्मादेवेति । न वाशब्दः संशयनिवर्तकः । ईश्वरप्रणिधानाद्वा । व्याचष्टे—प्रणिधानाद्भक्तिविशेषान्मानसाद्वाचिकात्कायिकाद्वाऽऽवर्जितोऽभिमुखीकृतस्तमनुगृह्णाति । अभिध्यानमनागतार्थेच्छा—इदमस्याभिमतमस्त्विति । तन्मात्रेण न व्यापारान्तरेण । शेषं सुगमम् ॥ २३ ॥

ननु. चेतनाचेतनाभ्यामेव व्यूढं नान्येन विश्वम् । ईश्वरश्चेदचेतनस्तर्हि प्रधानं प्रधानविकाराणामपि प्रधानमध्यपातात्तथा च न तस्याऽऽवर्जनमचेतनत्वात् । अथ चेतनस्तथाऽपि चितिशक्तेरौदासीन्यादसंसारितया चास्मितादिविरहात्कुत आवर्जनम् । कुतश्चाभिध्यानमित्याशयवानाह—अथ प्रधानेति । अत्र सूत्रेणोत्तरमाह—क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः । अविद्यादयः क्लेशाः क्लिश्नन्ति खल्वमी पुरुषं सांसारिकं विविधदुःखप्रहारेणेति । कुशलाकुशलानीति धर्माधर्मास्तेषां

---

१ ग. घ. ङ. °षान्मृदु° । २ क. ख. च. छ. °दप्यासन्नतरस्तीव्राधिमात्रसंवेगस्याधिमात्रोपायस्य समा° । ३ क. ख. च. °तरः स° । ४ ख. ग. घ. ङ. च. छ. °ध्यानाद° । ५ ख. घ. ङ. च. °तरः स° । ६ ञ. °निर्वर्त° ।

अविद्यादयः क्लेशाः । कुशलाकुशलानि कर्माणि । तत्फलं विपाकः । तदनुगुणा वासना आशयाः । ते च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते, स हि तत्फलस्य भोक्तेति । यथा जयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते । यो ह्यनेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः ।

कैवल्यं प्राप्तास्तर्हि सन्ति च बहवः केवलिनः। ते हि त्रीणि बन्धनानि च्छित्त्वा कैवल्यं प्राप्ता ईश्वरस्य च तत्संबन्धो न भूतो न भावी । यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते नैवमीश्वरस्य । यथा वा प्रकृतिलीनस्योत्तरा बन्धकोटिः संभाव्यते नैवमीश्वरस्य । स तु सदैव मुक्तः सदैवेश्वर इति ।

---

च कर्मजत्वादुपचारात्कर्मत्वम् । विपाको जात्यायुर्भोगाः । विपाकानुगुणा वासनास्ताश्चित्तभूमावाशेरत इत्याशयः । नहि करभजातिनिर्वर्तकं कर्म प्राग्भवीयकरभभोगभावितां भावनां न यावदभिव्यनक्ति तावत्करभोचिताय भोगाय कल्पते । तस्माद्भवति करभजात्यनुभवजन्मा भावना करभविपाकानुगुणेति । नन्वमी क्लेशादयो बुद्धिधर्मा न कथंचिदपि पुरुषं परामृशन्ति, तस्मात्पुरुषग्रहणादेव तदपरामर्शसिद्धेः । कृतं क्लेशकर्मेत्यादिनेत्यत आह—ते च मनसि वर्तमानाः सांसारिके पुरुषे व्यपदिश्यन्ते । कस्मात्, स हि तत्फलस्य भोक्ता चेतयितेति तस्मात्पुरुषत्वादीश्वरस्यापि तत्संबन्धः प्राप्त इति तत्प्रतिषेध उपपद्यत इत्याह—यो ह्यनेन बुद्धिस्थेनापि पुरुषमात्रसाधारणेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः । विशिष्यत इति विशेषः पुरुषान्तराद्व्यवाच्छिद्यते ।

विशेषपदस्य व्यावर्त्यं दर्शयितुकामः परिचोदनापूर्वं परिहरति—कैवल्यं प्राप्तास्तर्हीति । प्रकृतिलयानां प्राकृतो बन्धः । वैकारिको बन्धो विदेहानाम् । दक्षिणादिबन्धो दिव्यादिव्यविषयभोगभाजाम् । तान्यमूनि त्रीणि बन्धनानि । प्रकृतिभावनासंस्कृतमनसो हि देहपातानन्तरमेव प्रकृतिलयतामापन्ना इतीतरेषां पूर्वा बन्धकोटिः प्रज्ञायते, तेनोत्तरकोटिविधानमात्रमिह, तु पूर्वापरकोटिनिषेध इति संक्षिप्य विशेषं दर्शयति—स तु सदैव मुक्तः सदैवेश्वर इति । ज्ञानक्रियाशक्तिसंपदैश्वर्यम् ।

---

१ ख. °णाव° । २ ज. इति तेषां ।

**योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्षः स किं सनिमित्त आहोस्विन्निर्निमित्त इति। तस्य शास्त्रं निमित्तम्। शास्त्रं पुनः किंनिमित्तं, प्रकृष्टसत्त्वनिमित्तम् ।**

---

अत्र पृच्छति—**योऽसाविति** । ज्ञानक्रिये हि न चिच्छक्तेरपरिणामिन्याः संभवत इति रजस्तमोरहितविशुद्धचित्तसत्त्वाश्रये वक्तव्ये । न चेश्वरस्य सदा मुक्तस्याविद्याप्रभवैश्चित्तसत्त्वसमुत्कर्षेण सह स्वस्वामिभावः संबन्धः संभवतीत्यत उक्तम्—**प्रकृष्टसत्त्वोपादानादिति** । नेश्वरस्य पृथग्जनस्येवाविद्यानिबन्धनश्चित्तसत्त्वेन स्वस्वामिभावः । किंतु तापत्रयपरीतान्प्रेत्यभावमहार्णवाज्जन्तूनुद्धरिष्यामि ज्ञानधर्मोपदेशेन । न च ज्ञानक्रियासामर्थ्यातिशयसंपत्तिमन्तरेण तदुपदेशः । न चेयमपहतरजस्तमोमलविशुद्धसत्त्वोपादानं विनेत्यालोच्य सत्त्वप्रकर्षमुपादत्ते भगवानपरामृष्टोऽप्यविद्यया । अविद्याभिमानी चाविद्यायास्तत्त्वमविद्वान्भवति न पुनरविद्यामविद्यात्वेन सेवमानः । न खलु शैलूषो रामत्वमारोप्य तास्ताश्चेष्टा दर्शयन्भ्रान्तो भवति। तदिदमाहार्यमस्य रूपं न तात्त्विकमिति । स्यादेतत् । उद्दिधीर्षया भगवता सत्त्वमुपादेयं, तदुपादानेन च तदुद्दिधीर्षा, अस्या अपि प्राकृतत्वात्तथा चान्योन्याश्रय इत्यत उक्तम्—**शाश्वतिक इति** । भवेदेतदेवं यदीदं प्रथमता सर्गस्य भवेदनादौ तु सर्गसंहारप्रबन्धे सर्गान्तरसमुत्पन्नसंजिहीर्षावधिसमये पूर्णे मया सत्त्वप्रकर्ष उपादेय इति प्रणिधानं कृत्वा भगवाञ्जगत्संजहार । तदा चेश्वरचित्तसत्त्वं प्रणिधानवासितं प्रधानसाम्यमुपगतमपि परिपूर्णे महाप्रलयावधौ प्रणिधानवासनावशात्तथैवेश्वरचित्तसत्त्वभावेन परिणमते । यथा चैत्रः श्वः प्रातरेवोत्थातव्यं मयेति प्रणिधाय सुप्तस्तदैवोत्तिष्ठति। प्रणिधानसंस्कारात् । तस्मादनादित्वादीश्वरप्रणिधानसत्त्वोपादानयोः शाश्वतिकत्वेन नान्योन्याश्रयः । न चेश्वरस्य चित्तसत्त्वं महाप्रलयेऽपि न प्रकृतिसाम्यमुपैतीति वाच्यम् । यस्य हि न कदाचिदपि प्रधानसाम्यं न तत्प्राधानिकं नापि चितिशक्तिरज्ञत्वादित्यर्थान्तरमप्रामाणिकमापद्येत । तच्चायुक्तं, प्रकृतिपुरुषव्यतिरेकेणार्थान्तराभावात् । सोऽयमीदृश ईश्वरस्य शाश्वतिक उत्कर्षः । स किं सनिमित्तः सप्रमाणक आहोस्विन्निर्निमित्तो निष्प्रमाणक इति। उत्तरं—**तस्य शास्त्रं निमित्तम्** । श्रुतिस्मृतीतिहासपुराणानि शास्त्रम्।

चोदयति—**शास्त्रं पुनः किंनिमित्तम्** । प्रत्यक्षानुमानपूर्वं हि शास्त्रम्। न चेश्वरस्य सत्त्वप्रकर्षे कस्यचित्प्रत्यक्षमनुमानं वाऽस्ति। न चेश्वरप्रत्यक्षप्रभवं शास्त्रमिति युक्तम्। कल्पयित्वाऽपि ह्ययं ब्रूयादात्मैश्वर्यप्रकाशनायेति भावः। परिहरति—**प्रकृष्टसत्त्वनिमित्तम्** ।

---

१ ख. ज्ञ. °वश्चित्त° । २ क. °र्णवमग्नाञ्जनानु° ।

**एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्तमानयोरनादिः संबन्धः। एतस्मादेतद्भवति सदैवेश्वरः सदैव मुक्त इति। तच्च तस्यैश्वर्यं साम्यातिशयविनिर्मुक्तम्। न तावदैश्वर्यान्तरेण तदतिशय्यते। यदेवातिशायि स्यात्तदेव तत्स्यात्। तस्माद्यत्र काष्ठाप्राप्तिरैश्वर्यस्य**

---

अयमभिसंधिः—मन्त्रायुर्वेदेषु तावदीश्वरप्रणीतेषु प्रवृत्तिसामर्थ्यादर्थाव्यभिचारविनिश्चयात्प्रामाण्यं सिद्धम्। न चौषधिभेदानां तत्संयोगविशेषाणां च मन्त्राणां च तत्तद्वर्णावापोद्धारेण सहस्रेणापि पुरुषायुषैर्लौकिकप्रमाणव्यवहारी शक्तः कर्तुमन्वयव्यतिरेकौ। न चाऽऽगमादन्वयव्यतिरेकौ ताभ्यां चाऽऽगमस्तत्संतानयोरनादित्वादिति प्रतिपादयितुं युक्तम्। महाप्रलये तत्संतानयोर्विच्छेदात्। न च तद्भावे प्रमाणाभावः। अभिन्नं प्रधानविकारो जगदिति हि प्रतिपादयिष्यते। सदृशपरिणामस्यं च[1] विसदृशपरिणामता दृष्टा। यथा क्षीरेक्षुरसादेर्दधिगुडादिरूपम्। विसदृशपरिणामस्य[2] पूर्वं सदृशपरिणामता च दृष्टा। तदिह प्रधानेनापि महदहंकारादिरूपवि-सदृशपरिमाणेन[3] सता भाव्यं कदाचित्सदृशपरिणामेनापि[4]। सदृशपरिणामश्चास्य साम्यावस्था। स च महाप्रलयः। तस्मान्मन्त्रायुर्वेदप्रणयनात्तावद्भगवतो विगलितरजस्तमोमलावरणतया परितः प्रद्योतमानं बुद्धिसत्त्वमास्थेयम्। तथा चाभ्युदयनिःश्रेयसोपदेशपरोऽपि वेदराशिरीश्वरप्रणीतस्तद्बुद्धिसत्त्वप्रकर्षादेव भवितुमर्हति। न च सत्त्वोत्कर्षे रजस्तमःप्रभवौ विभ्रमविप्रलम्भौ संभवतः। तत्सिद्धं प्रकृष्टसत्त्वनिमित्तं शास्त्रमिति।

स्यादेतत्। प्रकर्षकार्यतया प्रकर्षं बोधयच्छास्त्रं शेषवदनुमानं भवेन्न त्वागम इत्यत आह—**एतयोरिति**। न कार्यत्वेन बोधयत्यपि त्वनादिवाच्यवाचकभावसंबन्धेन बोधयतीत्यर्थः। ईश्वरस्य हि बुद्धिसत्त्वे प्रकर्षो वर्तते, शास्त्रमपि तद्वाचकत्वेन तत्र वर्तत इति। उपसंहरति—**एतस्मादीश्वरबुद्धिसत्त्वप्रकर्षवाचकाच्छास्त्रादेतद्भवति** ज्ञायते विषयेण विषयिणो लक्षणात्**सदैवेश्वरः सदैव मुक्त इति**। तदेवं पुरुषान्तराद्व्यवच्छिद्येश्वरान्तरादपि व्यवच्छिनत्ति—**तच्च तस्येति**। अतिशयविनिर्मुक्तिमाह—**न तावदिति**। कुतः—**यदेवेति**। कस्मात्सर्वातिशयविनिर्मुक्तं तदैश्वर्यमित्यत आह—**तस्माद्यत्रेति**। अतिशयनिष्ठामप्राप्तानामौपचारिकमैश्वर्यमित्यर्थः।

---

१ ज. ॰ ते। विस॰। २ ख. झ. ॰स्य वि॰। ३ ज. च स॰। ४ ज. ॰रूपवि॰। ५ ज. ॰मपू॰। ६ झ. ॰पूर्वस॰। ७ ज. ॰पि। विस॰। ८ ख. ॰मस्तस्य सा॰। ज. ॰मस्य सा॰या।

स ईश्वर इति । न च तत्समानमैश्वर्यमस्ति । कस्मात्, द्वयोस्तु-ल्ययोरेकस्मिन्युगपत्कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्त्वि-त्येकस्य सिद्धावितरस्य प्राकाम्यविघातादूनत्वं प्रसक्तम् । द्वयोश्च तुल्ययोर्युगपत्कामितार्थप्राप्तिर्नास्ति । अर्थस्य विरुद्धत्वात् । तस्माद्यस्य साम्यातिशयैर्विनिर्मुक्तमैश्वर्यं स एवेश्वरः । स च पुरुषविशेष इति ॥ २४ ॥

किंच—

तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥

यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बह्विति सर्वज्ञबीजमेतद्विवर्धमानं यत्र निरतिशयं स सर्वज्ञः । अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्य सातिशयत्वात्परिमाणवदिति ।

---

साम्यविनिर्मुक्तिमाह—न च तत्समानमिति । प्राकाम्यमविहतेच्छता तद्विघातानू-नत्वमनूनत्वे वा द्वयोरपि प्राकाम्यविघातः कार्यानुत्पत्तेरुत्पत्तौ वा विरुद्धधर्मसमा-लिङ्गितमेकदा कार्यमुपलभ्येतेत्याशयवानाह—द्वयोश्चेति । अविरुद्धाभिप्रायत्वे वा प्रत्येकमीश्वरत्वे कृतमन्यैरेकेनैवेशनायाः कृतत्वात् । संभूयकारित्वे वा न कश्चिदीश्वरः परिषद्वन्नित्येशनायोगिनां च पर्यायायोगात्कल्पनागौरवप्रसङ्गाच्चेति द्रष्टव्यम् । तस्मा-त्सर्वमवदातम् ॥ २४ ॥

एवमस्य क्रियाज्ञानशक्तौ शास्त्रं प्रमाणमभिधाय ज्ञानशक्तावनुमानं प्रमाणयति—किंच—तत्र निरतिशयं सर्वज्ञबीजम् । व्याचष्टे—यदिदमिति । बुद्धिसत्त्वावरकत-मोपगमतारतम्येन यदिदमतीतानागतप्रत्युत्पन्नानां प्रत्येकं च समुच्चयेन वर्तमानाना-मतीन्द्रियाणां ग्रहणं, तस्य विशेषणमल्पं बह्विति । सर्वज्ञबीजं कारणम् । कश्चित्किंचि-देवातीतादि गृह्णाति कश्चिद्बहु कश्चिद्बहुतरं कश्चिद्बहुतममिति ग्राह्यापेक्षया ग्रहण-स्याल्पत्वं बहुत्वं कृतम् । एतद्विवर्धमानं यत्र निष्क्रान्तमतिशयात्स सर्वज्ञ इति । तदनेन प्रमेयमात्रं कथितम् । अत्र प्रमाणयति—अस्ति काष्ठाप्राप्तिः सर्वज्ञबी-जस्येति । साध्यनिर्देशः । निरतिशयत्वं काष्ठा । यतः परमतिशयवत्ता नास्तीति । तेन नावधिमात्रेण सिद्धसाधनम् । सातिशयत्वादिति हेतुः । यद्यत्साति-शयं तत्तत्सर्वं निरतिशयं, यथा कुवलामलकबिल्वेषु सातिशयं महत्त्वमात्मनि निरतिशयमिति व्याप्तिं दर्शयति—परिमाणवत् । न च गरिमादिभिर्गुणै-र्व्यभिचार इति सांप्रतम् । न स्वल्ववयवगरिमातिशयी गरिमाऽवयविनः किं-

---

१ क. ख. ग. ङ. °श्वरः । न । २ च. °स्ति द्व° । ३ ग. °ति तत्सर्वं° ।

**यत्र काष्ठाप्राप्तिर्ज्ञानस्य स सर्वज्ञः। स च पुरुषविशेष इति। सामान्यमात्रोपसंहारे च कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थमिति। तस्य संज्ञादिविशेषप्रतिपत्तिरागमतः पर्यन्वेष्या। तस्याऽऽत्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम्।**

---

त्वा परमाणुभ्य आऽन्त्यावयवि[2]भ्यो यावन्तः केचन तेषां प्रत्येकवर्तिनो गारिम्णः समाहृत्य गारि[3]मा वर्धमानाभिमानः। ज्ञानं तु न प्रतिज्ञेयं समाप्यत इत्येकद्विबहुविषयतया युक्तं सातिशयमिति न व्यभिचारः। उपसंहरति—**यत्र काष्ठेति**।

ननु सन्ति बहवस्तीर्थकरा[4] बुद्धार्हतकपिलर्षिप्रभृतयस्तत्कस्मात्त एव सर्वज्ञा न भवन्त्यस्मादनुमानादित्यत आह—**सामान्येति**। कुतस्तर्हि तद्विशेषप्रतिपत्तिरित्यत आह—**तस्येति**। बुद्धादिप्रणीतं आगमाभासो न त्वागमः, सर्वप्रमाणबाधितक्षणिकनैरात्म्यादिमार्गोपदेशकत्वेन विप्रलम्भकत्वादिति भावः। तेन श्रुतिस्मृतीतिहासपुराणलक्षणादागमत आगच्छन्ति बुद्धिमारोहन्त्यस्मादभ्युदयनिःश्रेयसोपाया इत्यागमः, तस्मात्संज्ञादिविशेषप्रतिपत्तिः। संज्ञाविशेषः शिवेश्वरादिः श्रुत्यादिषु प्रसिद्धः। आदिपदेन षडङ्गतादशाव्ययते संगृहीते। यथोक्तं वायुपुराणे—

" सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य " ॥ (१२।३१) इति।

तथा " ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः।
स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च ॥
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे " ॥ (१०।६०) इति च।

स्यादेतत्, नित्यतृप्तस्य भगवतो वैराग्यातिशयसंपन्नस्य स्वार्थे तृष्णासंभवात्कारुणिकस्य च सुखैकतानजनसर्जनपरस्य दुःखबहुलजीवलोकजननानुपपत्तेरप्रयोजनस्य च प्रेक्षावतः प्रवृत्त्यनुपपत्तेः क्रियाशक्तिशालिनोऽपि न जगत्क्रियेत्यत आह—**तस्याऽऽत्मानुग्रहाभावेऽपीति**। भूतानां प्राणिनामनुग्रहः प्रयोजनं, शब्दाद्युपभोगविवेकख्यातिरूपकार्यकरणात्किल चरितार्थं चित्तं निवर्तते। ततः पुरुषः केवली भवति। अतस्तत्प्रयोजनाय कारुणिको विवेकख्यात्युपायं कथयति। तेनाचारितार्थत्वाच्चित्तस्य जन्तूनीश्वरः पुण्यापुण्यसहायः सुखदुःखे भावयन्नपि नाकारुणिकः।

---

१ ख. ग. घ. ङ. छ. °रे कृ°। २ ज. °यवेभ्यश्चौपाधिकेभ्यो। ३ ख. ज. झ. °रिमव°। ४ ज. °र्थकारा। ५ ज. बुद्धर्षभप्र°। ६ क. °तश्चाऽऽग°।

ज्ञानधर्मोपदेशेन कल्पप्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्ध-रिष्यामीति। तथा चोक्तम्—आदिविद्वान्निर्माणचित्तमधिष्ठाय कारुण्याद्भगवान्परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाचेति ॥ २५ ॥

स एषः—

**पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ २६ ॥**

पूर्वे हि गुरवः कालेनावच्छिद्यन्ते[1]। यत्रावच्छेदार्थेन कालो नोपावर्तते स एष पूर्वेषामपि गुरुः। यथाऽस्य सर्गस्याऽऽदौ प्रकर्षगत्या सिद्धस्तथाऽतिक्रान्तसर्गादिष्वपि प्रत्येतव्यः ॥२६॥

---

विवेकख्यात्युपायकथनाय भूतानुग्रहं द्वारमाह—ज्ञानधर्मोपदेशेनेति। ज्ञानं च धर्मश्च ज्ञानधर्मौ। तयोरुपदेशेन ज्ञानधर्मसमुच्चयाल्लब्धविवेकख्यातिपरिपाकात्कल्पप्रलये ब्रह्मणो दिनावसाने यत्र सत्यलोकवर्जं जगदस्तमेति। महाप्रलये ससत्यलोकस्य ब्रह्मणोऽपि निधने संसारिणः स्वकारणगामिनोऽतस्तदा मरणदुःखभाजः, कल्पेत्युपलक्षणमन्यदाऽपि स्वार्जितकर्मपाकवशेन जन्ममरणादिभाजः पुरुषानुद्धरिष्यामीति कैवल्यं प्राप्य पुरुषा उद्धृता भवन्तीत्यर्थः। एतच्च करुणाप्रयुक्तस्य ज्ञानधर्मोपदेशनं कापिलानामपि सिद्धमित्याह—तथा चोक्तं पञ्चशिखाचार्येण—आदिविद्वान्कापिल इति। आदिविद्वानिति पञ्चशिखाचार्यवचनमादिमुक्तस्वसंतानादिगुरुविषयं न त्वनादिमुक्तपरमगुरुविषयम्। आदिमुक्तेषु कदाचिन्मुक्तेषु विद्वत्सु कपिलोऽस्माकमादिविद्वान्मुक्तः स एव च गुरुरिति। कपिलस्यापि जायमानस्य महेश्वरानुग्रहादेव ज्ञानप्राप्तिः श्रूयत इति। कपिलो नाम विष्णोरवतारविशेषः प्रसिद्धः। स्वयंभूस्तु[3] हिरण्यगर्भः। तस्यापि सांख्ययोगप्राप्तिर्वेदे श्रूयत इति। स एवेश्वर आदिविद्वान्कपिलो विष्णुर्न[4] स्वयंभूरिति भावः। स्वायंभुवानां[5] त्वीश्वर इति भावः ॥ २५ ॥

संप्रति भगवतो ब्रह्मादिभ्यो विशेषमाह—स एष इति। पातनिका—स एष इति। सूत्रम्—पूर्वेषामपि गुरुः कालेनानवच्छेदात्। व्याचष्टे—पूर्वे हीति। कालस्तु शतवर्षादिरवच्छेदार्थेनावच्छेदेन प्रयोजनेन नोपावर्तते न वर्तते। प्रकर्षस्य गतिः प्राप्तिः। प्रत्येतव्य आगमात् ॥ २६ ॥

---

१ ग. घ. ङ. °वच्छेद्य°। २ ख. ज. °णः पु°। ३ ख. ज. झ. °भूर्हिर°। ४ क. विष्णुः स्व°। ५ क. °यादीनामस्त्वीश्व°।

## तस्य वाचकः प्रणवः ॥ २७ ॥

वाच्य ईश्वरः प्रणवस्य । किमस्य संकेतकृतं वाच्यवाचकत्वमथ प्रदीपप्रकाशवदवस्थितमिति ।

स्थितोऽस्य वाच्यस्य वाचकेन सह संबन्धः । संकेतस्त्वीश्वरस्य स्थितमेवार्थमभिनयति । यथाऽवस्थितः पितापुत्रयोः संबन्धः संकेतेनावद्योत्यते, अयमस्य पिता, अयमस्य पुत्र इति । सर्गान्तरेष्वपि वाच्यवाचकशक्त्यपेक्षस्तथैव संकेतः क्रियते । संप्रतिपत्तिनित्यतया नित्यः शब्दार्थसंबन्ध इत्यागमिनः प्रतिजानते ॥ २७ ॥

---

तदनेन प्रबन्धेन भगवानीश्वरो दर्शितः । संप्रति तत्प्रणिधानं दर्शयितुं तस्य वाचकमाह—**तस्य वाचकः प्रणवः** । व्याचष्टे—**वाच्य इति** । तत्र परेषां मतं विमर्शद्वारेणोपन्यस्यति—**किमस्येति** । वाचकत्वं प्रतिपादकत्वमित्यर्थः । परे हि पश्यन्ति यदि स्वाभाविकः शब्दार्थयोः संबन्धः संकेतेनास्माच्छब्दादयमर्थः प्रत्येतव्य इत्येवमात्मकेनाभिव्यज्येत ततो यत्र नास्ति स संबन्धस्तत्र संकेतशतेनापि न व्यज्येत । न हि प्रदीपव्यङ्ग्यो घटो यत्र नास्ति तत्र प्रदीपसहस्रेणापि शक्यो व्यङ्क्तुम् । कृतसंकेतस्तु करभशब्दो वारणे वारणप्रतिपादको दृष्टः । ततः संकेतकृतमेव वाचकत्वमिति ।

विमृश्याभिमतमवधारयति—**स्थितोऽस्येति** । अयमभिप्रायः—सर्व एव शब्दाः सर्वाकारार्थाभिधानसमर्था इति । स्थित एवैषां सर्वाकारैरर्थैः स्वाभाविकः संबन्धः । ईश्वरसंकेतस्तु प्रकाशश्च नियामकश्च । तस्येश्वरसंकेतासंकेतकृतश्चास्य वाचकापभ्रंशविभागः । तदिदमाह—**संकेतस्त्वीश्वरस्येति** । निदर्शनमाह—**यथेति** । ननु शब्दस्य प्राधानिकस्य महाप्रलयसमये प्रध्वनभावमुपगतस्य शक्तिरपि प्रलीना, ततो महदादिक्रमेणोत्पन्नस्यावाचकस्यैव माहेश्वरेण संकेतेन न शक्या वाचकशक्तिरभिव्यञ्जयितुं विनष्टशक्तित्वादित्यत आह—**सर्गान्तरेष्वपीति** । यद्यपि सह शक्त्या प्रधानसाम्यमुपगतः शब्दस्तथाऽपि पुनराविर्भवंस्तच्छक्तियुक्त एवाऽऽविर्भवति वर्षातिपातसमधिगतमृद्भाव इवोद्भिज्यो मेघविसृष्टवारिधारावसेकात् । तेन पूर्वसंबन्धसंकेतानुसारेण संकेतः क्रियते भगवतेति । तस्मात्संप्रतिपत्तेः सदृशव्यवहारपरम्पराया नित्यतया नित्यः शब्दार्थयोः संबन्धो न कूटस्थनित्य इत्यागमिकाः प्रतिजानते, न पुनरागमनिरपेक्षाः सर्गान्तरेष्वपि तादृश एव संकेत इति प्रतिपत्तुमीशत इति भावः ॥२७॥

---

१ ख. ज. झ. °रासारावº ।

विज्ञातवाच्यवाचकत्वस्य योगिनः—

तज्जपस्तदर्थभावनम् ॥ २८ ॥

प्रणवस्य जपः प्रणवाभिधेयस्य चेश्वरस्य भावनम्। तदस्य योगिनः प्रणवं जपतः प्रणवार्थं च भावयतश्चित्तमेकाग्रं संपद्यते। तथा चोक्तम्—

स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत्।
स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते ॥ इति ॥ २८ ॥

किंचास्य भवति—

ततः प्रत्यक्चेतनाधिगमोऽप्य-
न्तरायाभावश्च ॥ २९ ॥

ये तावदन्तराया व्याधिप्रभृतयस्ते तावदीश्वरप्रणिधानान्न भवन्ति। स्वरूपदर्शनमप्यस्य भवति। यथैवेश्वरः पुरुषः शुद्धः प्रसन्नः केवलोऽनुपसर्गस्तथाऽयमपि बुद्धेः प्रतिसंवेदी यः पुरुषस्तमधिगच्छति ॥ २९ ॥

---

वाचकमाख्याय प्रणिधानमाह—तज्जपस्तदर्थभावनम्। व्याचष्टे—प्रणवस्येति। भावनं पुनः पुनश्चित्ते निवेशनम्। ततः किं सिध्यतीत्यत आह—प्रणवमिति। एकस्मिन्भगवत्यारमति चित्तम्। अत्रैव वैयासकीं गाथामुदाहरति—तथा चेति। तत ईश्वरः समाधितत्फललाभेन तमनुगृह्णाति ॥ २८ ॥

किंचापरमस्मात्—ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च। प्रतीपं विपरीतमञ्चति विजानातीति प्रत्यक्स चासौ चेतनश्चेति प्रत्यक्चेतनोऽविद्यावान्पुरुषः। तदनेनेश्वराच्छाश्वतिकसत्त्वोत्कर्षसंपन्नाद्विद्यावतो निवर्तयति। प्रतीचश्चेतनस्याधिगमो ज्ञानं स्वरूपतोऽस्य भवत्यन्तराया वक्ष्यमाणास्तदभावश्च। अस्य विवरणं—ये तावदिति। स्वमात्मा तस्य रूपम्। रूपग्रहणेनाविद्यासमारोपितान्धर्मान्निषेधति। नन्वीश्वरप्रणिधानमीश्वरविषयं कथमिव प्रत्यक्चेतनं साक्षात्करोत्यतिप्रसङ्गादित्यत आह—यथैवेश्वर इति। शुद्धः कूटस्थनित्यतयोदयव्ययरहितः प्रसन्नः क्लेशवर्जितः केवलो धर्माधर्मापेतः। अत एवानुपसर्गः। उपसर्गा जात्यायुर्भोगाः। सादृश्यस्य किंचिद्भेदाधिष्ठानत्वादीश्वराद्भिनत्ति—बुद्धेः प्रतिसंवेदीति। तदनेन प्रत्यग्ग्रहणं व्याख्यातम्। अत्यन्तविधर्मिणोरन्यतरार्थानुचिन्तनं न तदितरस्य साक्षात्काराय कल्पते।

---

१ ग. घ. ङ. °ष इत्येवम°। २ ख. ज. ञ. °नश्चेतसि नि°।

अथ केऽन्तराया ये चित्तस्य विक्षेपाः । के पुनस्ते कियन्तो वेति—

**व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥**

नवान्तरायाश्चित्तस्य विक्षेपाः । सहैते चित्तवृत्तिभिर्भवन्ति । एतेषामभावे न भवन्ति पूर्वोक्ताश्चित्तवृत्तयः । व्याधिर्धातुरसकरणवैषम्यम् । स्त्यानमकर्मण्यता चित्तस्य । संशय उभयकोटिस्पृग्विज्ञानं स्यादिदमेवं नैवं स्यादिति । प्रमादः समाधिसाधनानामभावनम् । आलस्यं कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः । अविरतिश्चित्तस्य विषयसंप्रयोगात्मा गर्धः । भ्रान्तिदर्शनं विपर्ययज्ञानम् । अलब्धभूमिकत्वं समाधिभूमेरलाभः । अनवस्थितत्वं यल्लब्धायां भूमौ चित्तस्याप्रतिष्ठा । समाधिप्रतिलम्भे हि सति तदवस्थितं स्यादिति । एते चित्तविक्षेपा नव योगमला योगप्रतिपक्षा योगान्तराया इत्यभिधीयन्ते ॥ ३० ॥

---

सदृशार्थानुचिन्तनं तु सदृशान्तरसाक्षात्कारोपयोगितामनुभवत्येकशास्त्राभ्यास इव तत्सदृशार्थशास्त्रान्तरज्ञानोपयोगिताम् । प्रत्यासत्तिस्तु स्वात्मनि साक्षात्कारहेतुर्न परात्मनीति सर्वमवदातम् ॥ २९ ॥

पृच्छति—अथ क इति । सामान्येनोत्तरम्—य इति । विशेषसंख्ये पृच्छति—क इति । उत्तरं व्याधीत्यादि सूत्रम् । अन्तराया नव । एताश्चित्तवृत्तयो योगान्तराया योगविरोधिनश्चित्तस्य विक्षेपकाश्चित्तं खल्वमी व्याध्यादयो योगाद्विक्षिपन्त्यपनयन्तीति विक्षेपाः । योगप्रतिपक्षत्वे हेतुमाह—सहैत इति । संशयभ्रान्तिदर्शने तावद्वृत्तितया वृत्तिनिरोधप्रतिपक्षौ । येऽपि न वृत्तयो व्याधिप्रभृतयस्तेऽपि वृत्तिसाहचर्यात्तत्प्रतिपक्षा इत्यर्थः । पदार्थान्व्याचष्टे—व्याधिरिति । धातवो वातपित्तश्लेष्माणः शरीरधारणात् । अशितपीताहारपरिणामविशेषो रसः । करणानीन्द्रियाणि । तेषां वैषम्यं न्यूनाधिकभाव इति । अकर्मण्यता कर्मानर्हता । संशय उभयकोटिस्पृग्विज्ञानम् । सत्यप्यतद्रूपप्रतिष्ठत्वेन संशयविपर्यासयोरभेदे, उभयकोटिस्पर्शास्पर्शरूपावान्तरविशेष-

---

१ ग. घ. ङ. छ. °क्षेपकाः । के । २ क. ग. घ. ङ. °यः । तत्र व्या° । ३ ख. छ. °त्वं लब्धा° ।

**दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ ३१ ॥**

दुःखमाध्यात्मिकमाधिभौतिकमाधिदैविकं च । येनाभिहताः प्राणिनस्तदपघाताय[1] प्रयतन्ते तद्दुःखम् । दौर्मनस्यमिच्छाविघाताच्चेतसः क्षोभः । यदङ्गान्येजयति कम्पयति तदङ्गमेजयत्वम् । प्राणो यद्बाह्यं वायुमाचामति स श्वासः । यत्कौष्ठ्यं वायुं निःसारयति स प्रश्वासः । एते विक्षेपसहभुवो विक्षिप्तचित्तस्यैते भवन्ति । समाहितचित्तस्यैते न भवन्ति ॥ ३१ ॥

अथैते विक्षेपाः समाधिप्रतिपक्षास्ताभ्यामेवाभ्यासवैराग्याभ्यां निरोद्धव्याः । तत्राभ्यासस्य विषयमुपसंहरन्निदमाह—

**तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥**

---

विवक्षयाऽत्र भेदेनोपन्यासः । अभावनमकरणं तत्राप्रयत्न इति यावत् । कायस्य गुरुत्वं कफादिना, चित्तस्य गुरुत्वं तमसा । गर्धस्तृष्णा । मधुमत्यादयः समाधिभूमयः । लब्धभूमेर्यदि तावतैव सुस्थितंमन्यस्य समाधिभ्रेषः स्यात्ततस्तस्या अपि भूमेरपायः स्यात् । यस्मात्समाधिप्रतिलम्भे तदवस्थितं स्यात्तस्मात्तत्र प्रयतितव्यमिति ॥ ३० ॥

न केवलं नवान्तराया दुःखादयोऽप्यस्य तत्सहभुवो भवन्तीत्याह—दुःखेत्यादि । प्रतिकूलवेदनीयं दुःखमाध्यात्मिकं शारीरं व्याधिवशान्मानसं च कामादिवशात् । आधिभौतिकं व्याघ्रादिजनितम् । आधिदैविकं ग्रहपीडादिजनितम् । तच्चेदं दुःखं प्राणिमात्रस्य प्रतिकूलवेदनीयतया हेयमित्याह— येनाभिहता इति । अनिच्छतः प्राणो यद्बाह्यं वायुमाचामति पिबति प्रवेशयतीति यावत्स श्वासः । समाध्यङ्गरेचकविरोधी । अनिच्छतोऽपि प्राणो यत्कौष्ठ्यं वायुं निश्चारयति निःसारयति स प्रश्वासः । समाध्यङ्गपूरकविरोधी ॥ ३१ ॥

उक्तार्थोपसंहारसूत्रमवतारयति—अथैत इति । अथोक्तार्थानन्तरमुपसंहरन्निदं सूत्रमाहेति संबन्धः । निरोद्धव्यत्वे हेतुरुक्तः—समाधिप्रतिपक्षा इति । यद्यपीश्वरप्रणिधानादीत्यभ्यासमात्रमुक्तं तथाऽपि वैराग्यमिह तत्सहकारितया ग्राह्यमित्याह— ताभ्यामुक्तलक्षणाभ्यामेवाभ्यासवैराग्याभ्यां निरोद्धव्याः । तत्र तयोरभ्यासवैराग्ययोर्मध्येऽभ्यासस्यानन्तरोक्तस्येति । तत्प्रतिषेधार्थमित्यादि । एकं तत्त्व-

---

[1] ग. घ. ङ. च. °स्तदुप° ।

विक्षेपप्रतिषेधार्थमेकतत्त्वावलम्बनं चित्तमभ्यसेत्। यस्य तु प्रत्यर्थनियतं प्रत्ययमात्रं क्षणिकं च चित्तं तस्य सर्वमेव चित्तमेकाग्रं नास्त्येव विक्षिप्तम्। यदि पुनरिदं सर्वतः प्रत्याहृत्यैकस्मिन्नर्थे समाधीयते तदा भवत्येकाग्रमित्यतो न प्रत्यर्थनियतम्।

योऽपि सदृशप्रत्ययप्रवाहेन चित्तमेकाग्रं मन्यते तस्यैकाग्रता यदि प्रवाहचित्तस्य धर्मस्तदेकं नास्ति प्रवाहचित्तं क्षणिकत्वात्। अथ प्रवाहांशस्यैव प्रत्ययस्य धर्मः, स सर्वः सदृशप्रत्ययप्रवाही वा विसदृशप्रत्ययप्रवाही वा प्रत्यर्थनियतत्वादेकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः। तस्मादेकमनेकार्थमवस्थितं चित्तमिति।

---

मीश्वरः प्रकृतत्वादिति। वैनाशिकानां तत्सर्वमेकाग्रमेव चित्तं नास्ति किंचिद्विक्षिप्तमिति तदुपदेशानां तदर्थानां च प्रवृत्तीनां वैयर्थ्यमित्याह—यस्य त्विति। यस्य मते प्रत्यर्थेऽर्प्यमाण[1] एकस्मिन्ननेकस्मिन्वा नियतं यावदर्थावभासमुत्पन्नं तत्रैव समाप्तमनन्यगामि। अर्थान्तरं तावत्प्रथमं गृहीत्वाऽर्थान्तरमपि पश्चात्कस्मान्न गृह्णातीत्यत आह—क्षणिकं च क्षणस्यामेयत्वेन पूर्वपश्चाद्भावस्याप्यभाव इति भावः। अस्मन्मते त्वक्षणिकं चित्तं स्वविषय एकस्मिन्ननेकस्मिन्वाऽनवस्थितं प्रतिक्षणं तत्तद्विषयोपादानपरित्यागाभ्यां विषयानियतं विक्षिप्तमतो विक्षेपपरिणाममपनीय शक्यैकाग्रताऽऽधातुमिति तदुपदेशप्रवृत्त्योर्नानर्थकत्वमित्याह[2]—यदि पुनरिदमिति। उपसंहरति—अतो नेति।

वैनाशिकमुत्थापयति—योऽपीति। मा भूदेकस्मिन्क्षणिके चित्त एकाग्रताधानप्रयत्नः। चित्तसंताने त्वनादावक्षणिके विक्षेपमपनीयैकाग्रताऽऽधास्यत इत्यर्थः। तदेतद्विकल्प्य दूषयति—तस्येति। तस्य दर्शन एकाग्रता यदि प्रवाहचित्तस्य चित्तसंतानस्य वा धर्मः। तत्रैकं क्रमवदुत्पादेषु प्रत्ययेष्वनुगतं नास्ति प्रवाहचित्तम्। कुतः, यद्यावदस्ति तस्य सर्वस्य क्षणिकत्वादक्षणिकस्य चासत्त्वाद्भवतां दर्शन इति भावः। द्वितीयं कल्पं गृह्णाति—अथेति। सांवृतस्य[3] प्रवाहस्यांशः प्रत्ययः परमार्थसंस्तस्य प्रत्ययस्यैकाग्रता प्रयत्नसाध्यो धर्मः। दूषयति—स सर्वः। सांवृतप्रवाहापेक्षया सदृशप्रत्ययप्रवाही वा विसदृशप्रत्ययप्रवाही वा। अतः परमार्थसत्तारूपेण प्रत्यर्थनियतत्वाद्यदर्थावभास उत्पन्नस्तत्र समाप्तत्वादेकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः, यदपनयेनैकाग्रताऽऽधीयत इति। उपसंहरति—तस्मादिति।

---

१ ज. °र्थेऽर्थ्यमान ए°। २ ख. ज. झ. °र्नाऽऽनर्थक्यमि°। ३ क. झ. °वृत्तस्य। ३ क. झ. °वृत्तप्र°।

**यदि च चित्तेनैकेनानन्विताः स्वभावभिन्नाः प्रत्यया जायेरन्नथ कथमन्यप्रत्ययदृष्टस्यान्यः स्मर्ता भवेत् । अन्यप्रत्ययोपचितस्य च कर्माशयस्यान्यः प्रत्यय उपभोक्ता भवेत् । कथंचित्समाधीयमानमप्येतद्गोमयपायसीयन्यायमाक्षिपति ।**

**किं च स्वात्मानुभवापह्नवश्चित्तस्यान्यत्वे प्राप्नोति । कथं,**

इतोऽपि चित्तमेकमनेकार्थमवस्थितं चेत्याह—यदि चेति । यथा हि मैत्रेणाधीतस्य शास्त्रस्य न चैत्रः स्मरति । यथा वा मैत्रेणोपाचितस्य पुण्यस्य पापस्य वा कर्माशयस्य फलं तदसंबन्धी चैत्रो न भुङ्क्त एवं प्रत्ययान्तरदृष्टस्य प्रत्ययान्तरं न स्मरेत् । प्रत्ययान्तरोपाचितस्य वा कर्माशयस्य फलं च न प्रत्ययान्तरमुपभुञ्जीतेत्यर्थः । ननु नातिप्रसज्येते कार्यकारणभावे सतीति विशेषणाच्छ्राद्धवैश्वानरीयेष्ट्यादावकर्तृमातृपितृपुत्रादिगामिफलदर्शनान्मधुररसभावितानां वाऽऽम्रबीजादीनां परम्परया फलमाधुर्यनियमादित्यत आह—समाधीयमानमप्येतदिति । अयमभिसंधिः—कः खल्वेकसंतानवर्तिनां प्रत्ययानां संतानान्तरवर्तिभ्यः प्रत्ययेभ्यो विशेषो येनैकसंतानवर्तिना प्रत्ययेनानुभूतस्योपचितस्य च कर्माशयस्य तत्संतानवर्त्येव प्रत्ययः स्मर्ता भोक्ता च स्यान्नान्यसंतानवर्ती । न हि संतानो नाम कश्चिदस्ति वस्तुसन् । य एनं संतानं संतानान्तरवर्तिभ्यो भिन्द्यात् । न च काल्पनिको भेदः क्रियायामुपपद्यते । न खलु कल्पिताग्निभावो माणवकः पचति । न च कार्यकारणभावसंबन्धोऽपि वास्तवः । सहभुवोः सव्येतरविषाणयोरिवाभावादसहभुवोरपि प्रत्युत्पन्नाश्रयत्वायोगात् । नह्यतीतानागतौ व्यासज्य प्रत्युत्पन्नं वर्तितुमर्हतः । तस्मात्संतानेन वा कार्यकारणभावेन वा स्वाभाविकेनानुपहिताः परमार्थसन्तः प्रत्ययाः परस्परासंस्पर्शित्वेन स्वसंतानवर्तिभ्यः परसंतानवर्तिभ्यो वा प्रत्ययान्तरेभ्यो न भिद्यन्ते । सोऽयं गोमयं च पायसं चाधिकृत्य प्रवृत्तो न्यायो गोमयं पायसं गव्यत्वादुभयसिद्धपायसवदिति । तमाक्षिपति न्यायाभासत्वेन ततोऽप्यधिकत्वादिति । न चात्र कृतनाशाकृताभ्यागमं चोद्यम् । यतश्चित्तमेव कर्मणां कर्तृ तदेव तज्जनिताभ्यां सुखदुःखाभ्यां युज्यते । सुखदुःखे च चितिच्छायापन्नं चित्तं भुङ्क्त इति पुरुषे भोगाभिमानश्चितिचित्तयोरभेदग्रहादिति । स्वप्रत्ययं प्रतीत्य समुत्पन्नानां स्वभाव एवैषां तादृशो यत्त एव स्मरन्ति फलं चोपभुञ्जते न त्वन्ये । न च स्वभावा नियोगपर्यनुयोगावर्हन्ति—एवं भवत मैवं भूतेति वा कस्मान्नैवमिति चेति ।

यः पूर्वोक्ते न परितुष्यति तं प्रत्याह—किंच स्वात्मेति । उदयव्ययधर्माणा-

१ ख. छ. °त् । समा° । २ क. °सज्येत का° । झ. °सज्यते का° । ३ ख. ज. झ. °तानिनं । ४ क. °पहृताः ।

यदहमद्राक्षं तत्स्पृशामि यच्चास्प्राक्षं तत्पश्या[1]मीत्यहमिति प्रत्ययः सर्वस्य प्रत्ययस्य भेदे सति प्रत्ययिन्यभेदेनोपस्थितः । एकप्र-[2]त्ययविषयोऽयमभेदात्माऽहमिति प्रत्ययः कथमत्यन्तभिन्नेषु चित्तेषु वर्तमा[3]नः सामान्यमेकं प्रत्ययिनमाश्रयेत । स्वानुभवग्राह्यश्चायमभेदात्माऽहमिति प्रत्ययः । न च प्रत्यक्षस्य माहात्म्यं प्रमाणान्तरेणाभिभूयते । प्रमाणान्तरं च प्रत्यक्षबलेनैव व्यवहारं लभते । तस्मादेकमनेकार्थमवस्थितं चित्तम् ॥ ३२ ॥

[4]यस्य चित्तस्यावस्थितस्येदं शास्त्रेण परिकर्म[5] निर्दिश्यते तत्कथम्—

**मैत्रीकरुणामुदितोपेक्षाणां सुख-**
**दुःखपुण्यापुण्यविषयाणां भाव-**
**नातश्चित्तप्रसादनम् ॥ ३३ ॥**

तत्र सर्वप्राणिषु सुखसंभोगापन्नेषु मैत्रीं भावयेत् । दुःखितेषु करुणाम् । पुण्यात्मकेषु मुदिताम् । अपुण्यशीलेषूपेक्षाम् ।

---

मनुभवानामनुभवस्मृतीनां च नानात्वेऽपि तदाश्रयमभिन्नं चित्तमहमिति प्रत्ययः प्रतिसंदधानः कथमत्यन्तभिन्नान्प्रत्ययानालम्बेत । ननु ग्रहणस्मरणरूपकारणभेदात्पारोक्ष्यापारोक्ष्यरूपविरुद्धधर्मसंसर्गाद्वा न प्रत्यभिज्ञानं नामैकः प्रत्ययो यतः प्रत्ययिनश्चित्तस्यैकता स्यादित्यत आह—स्वानुभवेति । ननु कारणभेदविरुद्धधर्मसंसर्गावेवात्र बाधकावुक्तावित्यत आह—न च प्रत्यक्षस्येति । प्रत्यक्षानुसारत एव सामग्र्यभेदः पारोक्ष्यापारोक्ष्यधर्माविरोधश्चोपपादितो न्यायकणिकायाम् । अक्षणिकस्य चार्थक्रिया न्यायकणिकाब्रह्मतत्त्वसमीक्षाभ्यामुपपादितेति सर्वमवदातम् ॥ ३२ ॥

अपरिकर्मितमनसोऽसूयादिमतः समाधितदुपायसंपत्त्यनुत्पादाच्चित्तप्रसादनोपायानसूयादिविरोधिनः प्रतिपादयितुमुपक्रमते—यस्य चित्तस्यावस्थितस्येदमिति । मैत्रीकरुणेत्यादिप्रसादनान्तम् । सुखितेषु मैत्रीं सौहार्दं भावयत ईर्ष्याकालुष्यं निवर्तते चित्तस्य । दुःखितेषु च करुणामात्मनीव परस्मिन्दुःखप्रहाणेच्छां भावयतः परापकारचिकीर्षाकालुष्यं चेतसो निवर्तते । पुण्यशीलेषु प्राणिषु मुदितां हर्षं भावयतोऽसूयाकालुष्यं चेतसो निवर्तते । अपुण्यशीलेषु चोपेक्षां माध्यस्थ्यं भावयतोऽमर्ष-

---

१ क. ख. छ. °श्याम्यह° । २ क. ख. च. °त्ययिवि° । ३ क. ख. °मानं सा° । ४ ख. यदिदं । घ. ङ. च. छ. यस्ये° । ५ ख. छ. °ते कथ° ।

एवमस्य भावयतः शुक्लो धर्म उपजायते । ततश्च चित्तं प्रसीदति । प्रसन्नमेकाग्रं स्थितिपदं लभते ॥ ३३ ॥

**प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥**

कौष्ठ्यस्य वायोर्नासिकापुटाभ्यां प्रयत्नविशेषाद्वमनं प्रच्छर्दनं, विधारणं प्राणायामस्ताभ्यां वा मनसः स्थितिं संपादयेत् ॥ ३४ ॥

**विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी ॥ ३५ ॥**

नासिकाग्रे धारयतोऽस्य या दिव्यगन्धसंवित्सा गन्धप्रवृत्तिः । जिह्वाग्रे रससंवित् । तालुनि रूपसंवित् । जिह्वामध्ये स्पर्शसंवित् । जिह्वामूले शब्दसंविदित्येता वृत्तय उत्पन्नाश्चित्तं

---

कालुष्यं चेतसो निवर्तते । ततश्चास्य राजसतामसधर्मनिवृत्तौ सात्त्विकः शुक्लो धर्म उपजायते । सत्त्वोत्कर्षसंपन्नः संभवति वृत्तिनिरोधपक्षे । तस्य प्रसादस्वाभाव्याच्चित्तं प्रसीदति । प्रसन्नं च वक्ष्यमाणेभ्य उपायेभ्य एकाग्रं स्थितिपदं लभते । असत्यां पुनर्मैत्र्यादिभावनायां न त उपायाः स्थित्यै कल्पन्त इति ॥ ३३ ॥

तानिदानीं स्थित्युपायानाह—**प्रच्छर्दनविधारणाभ्यां वा प्राणस्य** । वाशब्दो वक्ष्यमाणोपायान्तरापेक्षो विकल्पार्थः, न मैत्र्यादिभावनापेक्षया तया सह समुच्चयात् । प्रच्छर्दनं विवृणोति—**कौष्ठ्यस्येति** । प्रयत्नविशेषाद्योगशास्त्रविहिताद्येन कौष्ठ्यो वायुर्नासिकापुटाभ्यां शनै रेच्यते । विधारणं विवृणोति—**विधारणं प्राणायामः** । रेचितस्य प्राणस्य कौष्ठ्यस्य वायोर्यदायामो बहिरेव स्थापनं न तु सहसा प्रवेशनम् । तदेताभ्यां प्रच्छर्दनविधारणाभ्यां वायोर्लघुकृतशरीरस्य मनः स्थितिपदं लभते । अत्र चोत्तरसूत्रगतात्स्थितिनिबन्धनीतिपदात्स्थितिग्रहणमाकृष्य संपादयेदित्यर्थप्राप्तेन संबन्धनीयम् ॥ ३४ ॥

स्थित्युपायान्तरमाह—**विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी** । व्याचष्टे—**नासिकाग्रे धारयत इति** । धारणाध्यानसमाधीन्कुर्वतस्तज्जयाद्या दिव्यगन्धसंवित्तत्साक्षात्कारः । एवमन्यास्वपि प्रवृत्तिषु योज्यम् । एतच्चाऽऽगमात्प्रत्येतव्यं नोपपत्तितः । स्यादेतत्किमेताद्दृग्भिर्वृत्तिभिः कैवल्यं प्रत्यनुपयोगिनीभिरित्यत आह—**एता वृत्तयोऽल्पेनैव** कालेनोत्पन्नाश्चित्तमीश्वरविषयायां वा विवेक-

---

१ घ. °कामस्थि° । २ ग. स्थिरप° । ३ क. ख. °बन्धिनी । ४ ग. घ. ङ. च. °त्तेताः प्रवृ° । ५ क. °बन्धिनी° । ६ क. °बन्धिनी ।

स्थितौ निबध्नन्ति, संशयं विधमन्ति, समाधिप्रज्ञायां च द्वारी भवन्तीति[1]। एतेन चन्द्रादित्यग्रहमणिप्रदीपरश्म्यादिषु प्रवृत्ति-रुत्पन्ना विषयवत्येव वेदितव्या। यद्यपि हि तत्तच्छास्त्रानुमाना-चार्योपदेशैरवगतमर्थतत्त्वं सद्भूतमेव भवति, एतेषां यथाभूतार्थ-प्रतिपादनसामर्थ्यात्, तथाऽपि यावदेकदेशोऽपि कश्चिन्न स्वक-रणसंवेद्यो भवति तावत्सर्वं परोक्षमिवापवर्गादिषु सूक्ष्मेष्वर्थेषु न दृढां बुद्धिमुत्पादयति। तस्माच्छास्त्रानुमानाचार्योपदेशो-पोद्बलनार्थमेवावश्यं कश्चिदर्थविशेषः प्रत्यक्षीकर्तव्यः। तत्र तदु-पदिष्टार्थैकदेशप्रत्यक्षत्वे सति सर्वं[2] सूक्ष्मविषयमपि, आऽपवर्गा-च्छ्रद्धीयते। एतदर्थमेवेदं चित्तपरिकर्म निर्दिश्यते। अनिय-तासु वृत्तिषु तद्विषयायां वशीकारसंज्ञायामुपजातायां समर्थं स्यात्तस्य तस्यार्थस्य प्रत्यक्षीकरणायेति। तथा च सति श्रद्धा-वीर्यस्मृतिसमाधयोऽस्याप्रतिबन्धेन भविष्यन्तीति ॥ ३५ ॥

विशोका वा ज्योतिष्मती ॥ ३६ ॥

प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी[3]त्यनुवर्तते। हृदयपुण्डरीके

---

रुयातिविषयायां वा **स्थितौ निबध्नन्ति**। नन्वन्यविषया वृत्तिः कथमन्यत्र स्थितिं निबध्नातीत्यत आह—**संशयं विधमन्ति** अपसारयन्ति अत एव **समाधिप्रज्ञा-यामिति**। वृत्त्यन्तराणामप्यागमसिद्धानां विषयवत्त्व[4]मतिदिशति—**एतेनेति**। नन्वा-गमादिभिरवगतेष्वर्थेषु कुतः संशय इत्यत आह—**यद्यपि हीति**। श्रद्धामूलो हि योग उपदिष्टार्थैकदेशप्रत्यक्षीकरणे च श्रद्धातिशयो जायते। तन्मूलाश्च ध्यानाद-योऽस्याप्रत्यूहं भवन्तीत्यर्थः ॥ ३५ ॥

**विशोका वा ज्योतिष्मती**। विगतशोका दुःखरहिता ज्योतिष्मती ज्योति-रस्या अस्तीति ज्योतिष्मती प्रकाशरूपा। **हृदयपुण्डरीक इति**। उदरोरसोर्मध्ये यत्पद्ममधोमुखं तिष्ठत्यष्टदलं रेचकप्राणायामेन तदूर्ध्वमुखं कृत्वा तत्र चित्तं धारयेत्। तन्मध्ये सूर्यमण्डलमकारो जागरितस्थानम्। तस्योपरि चन्द्रमण्डलमुकारः स्वप्नस्था-नम्। तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानम्। तस्योपरि परव्योमात्मकं ब्रह्मनादं तुरीयस्थानमर्धमात्रमुदाहरन्ति ब्रह्मवादिनः। तत्र कर्णिकायामूर्ध्वमुखी सूर्यादिमण्डलमध्यगा ब्रह्मनाडी। ततोऽप्यूर्ध्वं प्रवृत्ता सुषुम्ना नाम नाडी।

---

१ ख. छ. भवन्ति। २ ग. घ. ङ. च. छ. °र्वं सुसू°। ३ क. ख. छ. °बन्धिनी°। ४ ज. °वर्तित्वम°।

धारयतो या बुद्धिसंवित्, बुद्धिसत्त्वं हि भास्वरमाकाशकल्पं तत्र स्थितिवैशारद्यात्प्रवृत्तिः सूर्येन्दुग्रहमणिप्रभारूपाकारेण विकल्पते। तथाऽस्मितायां समापन्नं चित्तं निस्तरङ्गमहोदधिकल्पं शान्तमनन्तमस्मितामात्रं भवति। यत्रेदमुक्तम्—"तमणुमात्रमात्मानमनुविद्यास्मीत्येवं तावत्संप्रजानीते" इति। एषा द्वयी विशोका विषयवती, अस्मितामात्रा च प्रवृत्तिर्ज्योतिष्मतीत्युच्यते। यया योगिनश्चित्तं स्थितिपदं लभत इति॥ ३६॥

**वीतरागविषयं वा चित्तम्॥ ३७॥**

वीतरागचित्तालम्बनोपरक्तं वा योगिनश्चित्तं स्थितिपदं लभत इति॥ ३७॥

**स्वप्ननिद्राज्ञानालम्बनं वा॥ ३८॥**

स्वप्नज्ञानालम्बनं[3] वा निद्राज्ञानालम्बनं वा[4] तदाकारं योगिनश्चित्तं स्थितिपदं लभत इति॥ ३८॥

---

तया खलु बाह्यान्यपि सूर्यादीनि मण्डलानि प्रोतानि। सा हि चित्तस्थानम्। तस्यां धारयतो योगिनश्चित्तसंविदुपजायते। उपपत्तिपूर्वकं बुद्धिसंविद आकारमादर्शयति—**बुद्धिसत्त्वं** हीति। आकाशकल्पमिति व्यापितामाह। सूर्यादीनां प्रभास्तासां रूपं तदाकारेण विकल्पते नानारूपा भवति। मनश्चात्र बुद्धिरभिमतं न तु महत्तत्त्वम्। तस्य च सुषुम्नास्थस्य वैकारिकाहंकारजन्मनः सत्त्वबहुलतया ज्योतीरूपता विवक्षिता। तत्तद्विषयगोचरतया च व्यापित्वमपि सिद्धम्। अस्मिताकार्ये मनसि समापत्तिं दर्शयित्वाऽस्मितासमापत्तेः स्वरूपमाह—**तथेति**। शान्तमपगतरजस्तमस्तरङ्गम्। अनन्तं व्यापि। अस्मितामात्रं न पुनर्नानाप्रभारूपम्। आगमान्तरेण स्वमतं समीकरोति—**यत्रेदमुक्तं** पञ्चशिखेन तमणु दुरधिगमत्वादात्मानमहंकारास्पदमनुविद्यानुचिन्त्यास्मीत्येवं तावत्संजानीत इति। स्यादेतत्। नानाप्रभारूपा भवतु ज्योतिष्मती कथमस्मितामात्ररूपा ज्योतिष्मतीत्यत आह—**एषा द्वयीति**। विधूतरजस्तमोमलाऽस्मितैव सत्त्वमयी ज्योतिरिति भावः। द्विविधाया अपि ज्योतिष्मत्याः फलमाह—**ययेति**॥ ३६॥

**वीतरागविषयं वा चित्तम्**। वीतरागाः कृष्णद्वैपायनप्रभृतयस्तेषां चित्तं तदेवाऽऽलम्बनं तेनोपरक्तमिति॥ ३७॥

**स्वप्ननिद्राज्ञानालम्बनं वा**। यदा खल्वयं स्वप्ने विविक्तवनसंनिवेशवर्तिनीमुत्की-

---

१ ख. छ. °त्येता°। २ क. ख. छ. °प्रतिजा°। ३ ग. घ. ङ. च. °नं नि°। ४ ख. चं. छ. वा यो°।

**यथाभिमतध्यानाद्वा ॥ ३९ ॥**

यदेवाभिमतं तदेव ध्यायेत् । तत्र लब्धस्थितिकमन्यत्रापि स्थितिपदं लभत इति ॥ ३९ ॥

**परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥**

सूक्ष्मे निविशमानस्य [१]परमाण्वन्तं स्थितिपदं लभत इति । स्थूले निविशमानस्य परममहत्त्वान्तं स्थितिपदं चित्तस्य । एवं तामुभयीं कोटिमनुधावतो योऽस्या[२]प्रतीघातः स परो वशीकारः । तद्वशीकारात्परिपूर्णं योगिनश्चित्तं न पुनरभ्यासकृतं परिकर्मापेक्षत इति ॥ ४० ॥

अथ लब्धस्थितिकस्य चेतसः किंस्वरूपा किंविषया वा समापत्तिरिति, तदुच्यते—

र्णामिव चन्द्रमण्डलात्कोमलमृणालशकलानुकारिभिरङ्गप्रत्यङ्गै[३]रुपपन्नामभिजातचन्द्रकान्तमणिमयीमतिसुरभिमालतीमल्लिकामालाहारिणीं मनोहरां भगवतो महेश्वरस्य प्रतिमामाराधयन्नेव प्रबुद्धः प्रसन्नमनास्तदा तामेव स्वप्नज्ञानालम्बनीभूतामनुचिन्तयतस्तस्य तदेकाकारमनसस्तत्रैव चित्तं स्थितिपदं लभते । निद्रा चेह सात्त्विकी ग्रहीतव्या । [४]यस्याः प्रबुद्धस्य सुखमहमस्वाप्समिति प्रत्यवमर्शो भवति । एकाग्रं हि तस्यां मनो भवति । तावन्मात्रेण चोक्तम्—एतदेव ब्रह्मविदो ब्रह्मणो रूपमुदाहरन्ति[५] सुप्तावस्थेति । ज्ञानं च ज्ञेयरहितं न शक्यं गोचरयितुमिति ज्ञेयमपि गोचरीक्रियते ॥ ३८ ॥

**यथाभिमतध्यानाद्वा** । किं बहुना यदेवाभिमतं तत्तद्देवतारूपमिति ॥ ३९ ॥

कथं पुनः स्थिति[६]प[७]द[८]सात्मीभावोऽवगन्तव्य इत्यत आह—**परमाणुपरममहत्त्वान्तोऽस्य वशीकारः** । व्याचष्टे—**सूक्ष्म इति** । उक्तमर्थं पिण्डीकृत्य वशीकारपदार्थमाह—**एवं तामुभयीमिति** । वशीकारस्यावान्तरफलमाह—**तद्वशीकारादिति** ॥ ४० ॥

तदेवं चित्तस्थितेरुपाया दर्शिताः । लब्धस्थितिकस्य चित्तस्य वशीकारोऽपि दर्शितः । संप्रति लब्धस्थितिकस्य चेतसः किंविषयः किंरूपश्च संप्रज्ञातो भवतीति पृच्छति—**अथेति** । अत्रोत्तरं सूत्रमवतारयति—**तदुच्यत इति** । सूत्रं पठति—

१ क. ख. परात्पर° । २ ग. घ. ङ. छ. °प्रतिघा° । ३ ख. झ. °रुपेताम° । ४ ख. ज. झ. यस्यां । ५ क. ज. °न्ति स्वप्नाव° । ६ ज. °तिसा° । ७ ङ. °पदं सात्मभा° । ८ झ. °दसात्मी° ।

**क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥ ४१ ॥**

क्षीणवृत्तेरिति प्रत्यस्तमितप्रत्ययस्येत्यर्थः । अभिजातस्येव मणेरिति दृष्टान्तोपादानम् । यथा स्फटिक उपाश्रयभेदात्तत्तद्रूपोपरक्त उपाश्रयरूपाकारेण निर्भासते तथा ग्राह्यालम्बनोपरक्तं चित्तं ग्राह्यसमापन्नं ग्राह्यस्वरूपाकारेण निर्भासते[1] । भूतसूक्ष्मोपरक्तं भूतसूक्ष्मसमापन्नं भूतसूक्ष्मस्वरूपाभासं भवति । तथा स्थूलालम्बनोपरक्तं स्थूलरूपसमापन्नं स्थूलरूपाभासं भवति । तथा विश्वभेदोपरक्तं विश्वभेदसमापन्नं विश्वरूपाभासं भवति ।

तथा ग्रहणेष्वपीन्द्रियेष्वपि द्रष्टव्यम् । ग्रहणालम्बनोपरक्तं ग्रहणसमापन्नं ग्रहणस्वरूपाकारेण निर्भासते । तथा ग्रहीतृपुरुषालम्बनोपरक्तं ग्रहीतृपुरुषसमापन्नं ग्रहीतृपुरुषस्वरूपाकारेण

---

**क्षीणवृत्तेरित्यादि समापत्त्यन्तम्** । तद्व्याचष्टे–**क्षीणेति** । अभ्यासवैराग्याभ्यां क्षीणराजसतामसप्रमाणादिवृत्तेश्चित्तस्य । तस्य व्याख्यानं--**प्रत्यस्तमितप्रत्ययस्येति** । तदनेन चित्तसत्त्वस्य स्वभावस्वच्छस्य रजस्तमोभ्यामनभिभव उक्तः । दृष्टान्तं स्पष्टयति—**यथेति** । उपाश्रय उपाधिर्जपाकुसुमादिरुपरक्तस्तच्छायापन्नः । उपाश्रयस्य यदात्मीयं रूपं लोहितनीलादि तदेवाऽऽकारस्तेन लक्षितो निर्भासते । दार्ष्टान्तिके योजयति–**तथा ग्राह्येति** । ग्राह्यं च तदालम्बनं च तेनोपरक्तं तदनुविद्धं, तदनेन ग्रहीतृग्रहणाभ्यां व्यवच्छिनत्ति । आत्मीयमन्तःकरणरूपमपिधाय ग्राह्यसमापन्नं ग्राह्यतामिव प्राप्तमिति यावत् । अतो ग्राह्यस्वरूपाकारेण निर्भासते । ग्राह्योपरागमेव सूक्ष्मस्थूलताभ्यां विभजते–**भूतसूक्ष्मेति** । विश्वभेदश्चेतनाचेतनस्वभावो गवादिर्घटादिश्च द्रष्टव्यः । तदनेन वितर्कविचारानुगतौ समाधी दर्शितौ ।

**तथा ग्रहणेष्वपीन्द्रियेष्विति** । गृह्यन्त एभिरर्था इति ग्रहणानीन्द्रियाणि । एतदेव स्पष्टयति—**ग्रहणालम्बनेति** । ग्रहणं चाऽऽलम्बनं च तदिति ग्रहणालम्बनम् । तेनोपरक्तमनुविद्धमात्मीयमन्तःकरणरूपमपिधाय ग्रहणमिव बहिष्करणमिवाऽऽपन्नमिति । तदनेनाऽऽनन्दानुगतमुक्त्वाऽस्मितानुगतमाह–**तथा ग्रहीतृपुरुषेति** । अस्मि-

---

१ क. ख. च. छ. °ते । तथा भू° । २ ख. च. छ. °येषु द्र° ।

निर्भासते । तथा मुक्तपुरुषालम्बनोपरक्तं मुक्तपुरुषसमापन्नं मुक्तपुरुषस्वरूपाकारेण निर्भासत इति । तदेवमभिजातमणिकल्पस्य चेतसो ग्रहीतृग्रहणग्राह्येषु पुरुषेन्द्रियभूतेषु या तत्स्थतदञ्जनता तेषु स्थितस्य तदाकारापत्तिः सा समापत्तिरित्युच्यते ॥ ४१ ॥

**तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः ॥ ४२ ॥**

तद्यथा गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमित्यविभागेन विभक्तानामपि ग्रहणं दृष्टम् । विभज्यमानाश्चान्ये

---

तास्पदं हि ग्रहीता पुरुष इति भावः । पुरुषत्वाविशेषादनेनैव मुक्तोऽपि पुरुषः शुकप्रह्लादादिः समाधिविषयतया संग्रहीतव्य इत्याह—**तथा मुक्तेति** । उपसंहरंस्तत्स्थतदञ्जनतापदं व्याचष्टे—**तदेवमिति** । [ते]षु ग्रहीतृग्रहणग्राह्येषु स्थितस्य धारितस्य ध्यानपरिपाकवशादपहतरजस्तमोमलस्य चित्तसत्त्वस्य या तत्स्थतदञ्जनता तदाकारता सा समापत्तिः संप्रज्ञातलक्षणो योग उच्यते । तत्र च ग्रहीतृग्रहणग्राह्येष्विति सौत्रः पाठक्रमोऽर्थक्रमविरोधान्नाऽऽदर्तव्यः । एवं भाष्येऽपि प्रथमं भूतसूक्ष्मोपन्यासोऽप्यनादरणीय इति सर्वं रमणीयम् ॥ ४१ ॥

सामान्यतः समापत्तिरुक्ता । सेयमवान्तरभेदाच्चतुर्विधा भवति । तद्यथा—सवितर्का निर्वितर्का सविचारा निर्विचारा चेति । तत्र सवितर्कायाः समापत्तेर्लक्षणमाह—**तत्रेत्यादि** । तासु समापत्तिषु मध्ये सवितर्का समापत्तिः प्रतिपत्तव्या । कीदृशी । शब्दश्चार्थश्च ज्ञानं च तेषां विकल्पाः । वस्तुतो भिन्नानामपि शब्दादीनामितरेतराध्यासाद्विकल्पोऽप्येकस्मिन्भेदमादर्शयति भिन्नेषु चाभेदम् । तेन शब्दार्थज्ञानविकल्पैः संकीर्णा व्यामिश्रेत्यर्थः । **तद्यथा गौरिति शब्द इति** । गौरित्युपात्तयोरर्थज्ञानयोः शब्दाभेदविकल्पो दर्शितः । **गौरित्यर्थ इति** । गौरित्युपात्तयोः शब्दज्ञानयोरर्थाभेदविकल्पः । **गौरिति ज्ञानमिति** । गौरित्युपात्तयोः शब्दार्थयोर्ज्ञानाभेदविकल्पः । तदेवमविनिर्भागेन(ण) विभक्तानामपि शब्दार्थज्ञानानां ग्रहणं लोके[३] दृष्टं[४] द्रष्टव्यम् । यद्यविभागेन ग्रहणं कुतस्तर्हि विभाग इत्यत आह—**विभज्यमानाश्चान्वयव्यतिरेकाभ्यां परी-**

---

१ ग. घ. ङ. छ. °सते । त° २ क. °कल्पो व° । ख. ज. °कल्पानां व° । ३ झ. लोकदृ° । ४ अ. °के दृ° । ५ च. दृष्टम् ।

शब्दधर्मा अन्येऽर्थधर्मा अन्ये विज्ञानधर्मा इत्येतेषां विभक्तः पन्थाः । तत्र समापन्नस्य योगिनो यो गवाद्यर्थः समाधिप्रज्ञायां समारूढः स चेच्छब्दार्थज्ञानविकल्पानुविद्ध उपावर्तते सा संकीर्णा समापत्तिः सवितर्केत्युच्यते ॥ ४२ ॥

यदा पुनः शब्दसंकेतस्मृतिपरिशुद्धौ श्रुतानुमानज्ञानविकल्पशून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपाकारमात्रतयैवावच्छिद्यते । सा च निर्वितर्का समापत्तिः । तत्परं प्रत्यक्षम् । तच्च श्रुतानुमानयोर्बीजम् । ततः श्रुतानुमाने प्रभवतः । न च श्रुतानुमानज्ञानसहभूतं तद्दर्शनम् । तस्मादसंकीर्णं प्रमाणान्तरेण योगिनो निर्वितर्कसमाधिजं दर्शनमिति ।

---

क्षकैरन्ये शब्दधर्मा ध्वनिपरिणाममात्रस्य शब्दस्योदात्तादयो धर्मा अन्येऽर्थस्य जडत्वमूर्तत्वादयः, अन्ये प्रकाशमूर्तिविरहादयो ज्ञानस्य धर्मा इति । तस्मादेतेषां विभक्तः पन्थाः स्वरूपभेदोन्नयनमार्गः । तत्र विकल्पिते[1] गवाद्यर्थे समापन्नस्येति । तदनेन योगिनोऽपरं प्रत्यक्षमुक्तम् । शेषं सुगमम् ॥ ४२ ॥

सूत्रं योजयितुं प्रथमतस्तावन्निर्वितर्कां[2] व्याचष्टे—यदा पुनरिति । परिशुद्धिरपनयः । शब्दसंकेतस्मरणपूर्वे खल्वागमानुमाने प्रवर्तेते । संकेतश्चायं गौरिति शब्दार्थज्ञानानामितरेतराध्यासात्मा । ततश्चाऽऽगमानुमानज्ञानविकल्पौ[3] भवतः । तेन तत्पूर्वा समाधिप्रज्ञा सवितर्का । यदा पुनरर्थमात्रप्रवणेन चेतसाऽर्थमात्राहतेन तदभ्यासान्नान्तरीयकतामुपगता संकेतस्मृतिस्त्यक्ता, तत्त्यागे च श्रुतानुमानज्ञानविकल्पौ तन्मूलौ त्यक्तौ, तदा तच्छून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपमात्रतयैव न तु विकल्पितेनाऽऽकारेण परिच्छिद्यते सा निर्वितर्का समापत्तिरिति । तद्योगिनां परं प्रत्यक्षमसदारोपगन्धस्याप्यभावात् । स्यादेतत्परेण प्रत्यक्षेणार्थतत्त्वं गृहीत्वा योगिन उपदिशन्त्युपपादयन्ति च । कथं चातद्विषयाभ्यामागमपरार्थानुमानाभ्यां सोऽर्थ उपदिश्यत उपपाद्यते च । तस्मादागमानुमाने तद्विषये ते च विकल्पाविति परमपि प्रत्यक्षं विकल्प एवेत्यत आह—तच्च श्रुतेति । यदि हि सवितर्कमिव श्रुतानुमानसहभूतं तदनुषक्तं स्याद्भवेत्संकीर्णं तयोस्तु बीजमेवैतत्ततो हि श्रुतानुमाने प्रभवतः । न च यद्यस्य कारणं तत्तद्विषयं भवति । न हि धूमज्ञानं वह्निज्ञानकारणमिति वह्निविषयम् । तस्मादविकल्पेन प्रत्यक्षेण गृहीत्वा विकल्प्योपदिशन्ति चोपपादयन्ति च । उपसंहरति—तस्मादिति । व्याख्येयं[4] सूत्रं योजयति—

---

१ झ. विकल्पे । २ ज. °तस्तां निर्वि° । ३ ख. ज. °ज्ञाने वि° । ४ ज. व्याख्याय ।

निर्वितर्कायाः समापत्तेरस्याः सूत्रेण लक्षणं द्योत्यते—

**स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥**

या शब्दसंकेतश्रुतानुमानज्ञानविकल्पस्मृतिपरिशुद्धौ ग्राह्यस्वरूपोपरक्ता[1] प्रज्ञा स्वमिव प्रज्ञास्वरूपं[2] ग्रहणात्मकं त्यक्त्वा पदार्थमात्रस्वरूपा ग्राह्यस्वरूपापन्नेव भवति सा[3] तदा निर्वितर्का समापत्तिः।

तथा च व्याख्यातम्—तस्या एकबुद्ध्युपक्रमो ह्यर्थात्माऽणुप्रचयविशेषात्मा गवादिर्घटादिर्वा लोकः।

स च संस्थानविशेषो भूतसूक्ष्माणां साधारणो धर्म आत्म-

---

**निर्वितर्काया** इति। **स्मृतिपरिशुद्धावित्यादि सूत्रम्**। शब्दसंकेतश्च श्रुतं चानुमानं च तेषां ज्ञानमेव विकल्पस्तस्मात्स्मृतिस्तस्याः परिशुद्धिरपगमस्तस्याम्। तत्र[4] च संकेतस्मृतिपरिशुद्धिर्हेतुः। श्रुतानुमानस्मृतिपरिशुद्धिश्च हेतुमती। अनुमानशब्दश्च कर्मसाधनोऽनुमेयवाचकः। स्वमिवेतीवकारो भिन्नक्रमस्त्यक्त्वेति पदानन्तरं द्रष्टव्यः।

विषयविप्रतिपत्तिं निराकरोति—**तस्या एकेति**। एकां बुद्धिमुपक्रमत आरभत इत्येकबुद्ध्युपक्रमः। तदनेन परमाणवो नानात्मानो न निर्वितर्कविषया इत्युक्तं भवति। योग्यत्वेऽपि तेषां परमसूक्ष्माणां नानाभूतानां महत्त्वैकार्थसमवेतैकत्वनिर्भासप्रत्ययविषयत्वायोगात्। अस्तु तर्हि परमार्थसत्सु परमाणुषु सांवृतः[6] प्रतिभासधर्मः स्थौल्यमित्यत आह—**अर्थात्मेति**। नासति बाधके स्थूलमनुभवसिद्धं शक्यापह्नवमिति भावः। तत्र ये पश्यन्ति द्व्यणुकादिक्रमेण गोघटादय उपजायन्त इति तान्प्रत्याह— **अणुप्रचयेति**। अणूनां प्रचयः स्थूलरूपपरिणामः, स च विशिष्यतेऽन्यस्मात्परिणामान्तरात्स एवाऽऽत्मा स्वरूपं यस्य स तथोक्तः। गवादिर्भोगायतनम्। घटादिर्विषयः। तच्चैतदुभयमपि लोक्यत इति लोकः।

नन्वेष भूतसूक्ष्मेभ्यो भिन्नोऽभिन्नो वा स्याद्भिन्नश्चेत्कथं[7] तदाश्रयः कथं च तदाकारः। न हि घटः पटादन्यस्तदाकारस्तदाश्रयो वा। अभिन्नश्चेत्तद्वदेव सूक्ष्मोऽसाधारणश्च स्यादत आह—**स चेति**। अयमभिप्रायः—नैकान्ततः परमाणुभ्यो भिन्नो घटादिरभिन्नो वा, भिन्नत्वे गवाश्ववद्धर्मधर्मिभावानुपपत्तेः। अभिन्नत्वे धर्मिरूपवदेव

---

१ क. ख. °क्ता स्व°। २ ग. घ. ङ. °ज्ञारू°। ३ ग. घ. ङ. सा नि°। ४ क. ञ. अत्र। ५ क ख. ञ. °तादिज्ञान°। ६ क. ज. सांवृत्तः। ७ क. °थं वै त°। ज. °थं चैत°।

भूतः फलेन व्यक्तेनानुमितः स्वव्यञ्जकाञ्जनः प्रादुर्भवति । धर्मान्तरस्य कपालादेरुदये च तिरो भवति । स एष धर्मोऽवयवीत्युच्यते । योऽसावेकश्च महांश्चाणीयांश्च स्पर्शवांश्च क्रियाधर्मकश्चानित्यश्च तेनावयविना व्यवहाराः क्रियन्ते ।

यस्य पुनरवस्तुकः स प्रचयविशेषः सूक्ष्मं च कारणमनुपलभ्यमविकल्पस्य तस्यावयव्यभावादतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति प्रायेण सर्वमेव प्राप्तं मिथ्याज्ञानमिति ।

---

तदनुपपत्तेः । तस्मात्कथंचिद्भिन्नः कथंचिदभिन्नश्चाऽऽस्थेयस्तथा च सर्वमुपपद्यते । भूतसूक्ष्माणामिति षष्ठ्या कथंचिद्भेदं सूचयत्यात्मभूत इति चाभेदम् । फलेन व्यक्तेन तदनुभवलक्षणेन तद्व्यवहारलक्षणेन च व्यक्तेन विप्रतिपन्नं प्रत्यनुमापितः । कारणाभेदे च कारणाकारतोपपन्नेत्याह—स्वव्यञ्जकाञ्जन इति । स किं तदात्मभूतो धर्मो नित्यो नेत्याह—धर्मान्तरस्य कपालादेरुदय इति । तस्यावयविनः परमाणुभ्यो व्यावृत्तं रूपमादर्शयति—स एष इति । परमाणुसाध्यायाः क्रियाया अन्या क्रिया मधूदकादिधारणलक्षणा तद्धर्मक इति । न केवलमनुभवादपि तु व्यवहारतोऽपि तन्निबन्धनत्वाल्लोकयात्राया इत्याह—तेनेति ।

स्यादेतदसति बाधकेऽनुभवोऽवयविनं व्यवस्थापयेत् । अस्ति च बाधकं यत्सत्तत्सर्वमनवयवं यथा विज्ञानम् । सच्च गोघटादीति स्वभावहेतुः । सत्त्वं हि विरुद्धधर्मसंसर्गरहितत्वेन व्याप्तं, तद्विरुद्धश्च विरुद्धधर्मसंसर्गः सावयव उपलभ्यमानो व्यापकविरुद्धोपलब्ध्या सत्त्वमपि निवर्तयति । अस्ति चावयविनि तद्देशत्वातद्देशत्वावृतत्वानावृतत्वरक्तत्वारक्तत्वचलत्वाचलत्वलक्षणो विरुद्धधर्मसंसर्ग इत्यत आह—**यस्य पुनरिति** । अयमभिप्रायः—अनुभवसिद्धं सत्त्वं हेतुः क्रियते यत्किल पांशुलपादुको हालिकोऽपि प्रतिपद्यते । अन्यद्वाऽनुभवसिद्धात् । तत्रान्यदसिद्धत्वादहेतुः । अनुभवसिद्धं तु घटादीनां सत्त्वमर्थक्रियाकारित्वरूपं न स्थूलादन्यत् । सोऽयं हेतुः स्थूलत्वमपाकुर्वन्नात्मानमेव व्याहन्ति । ननु न स्थूलत्वमेव सत्त्वमपि त्वसतो व्यावृत्तिः । अस्थौल्यव्यावृत्तिश्च स्थौल्यं, व्यावर्त्यभेदाच्च व्यावृत्तयो भिद्यन्ते । अतः स्थौल्याभावेऽपि न सत्त्वव्याहतिः । अन्यत्वात् । भवतु वा व्यावृत्तिभेदादवसायविषयभेदः । यत्पूर्वकास्त्ववसायास्तस्यानुभवस्याविकल्पस्य प्रमाणस्य को विषय इति निरूपयतु भवान् । रूपपरमाणवो निरन्तरोत्पादा अगृहीतपरमसूक्ष्मतत्त्वा इति चेत्, हन्तैते गन्धरसस्पर्शपरमाणुभिरन्तरिता न निरन्तराः । तस्मादन्तरालाग्रह एकघनवनप्रत्ययवत्प-

---

१ क. ख. °दुर्भूतो भव° । २ ग. च. छ. °न्तरोद° । घ. न्तरोदयश्च ति° । ३ क. ख. घ. ङ. च. छ. °लभ्यं त° ।

तदा च सम्यग्ज्ञानमपि किं स्याद्विषयाभावात् । यद्यदुपलभ्यते तत्तदवयवित्वेनाऽऽम्नातम्[1] । तस्मादस्त्यवयवी यो महत्त्वादिव्यवहारापन्नः समापत्तेर्निर्वितर्काया विषयी भवति ॥ ४३ ॥

**एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥**

तत्र भूतसूक्ष्मकेष्वभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवाव-

---

रमाणवालम्बनः सन्नयं विकल्पो मिथ्येति तत्प्रभवविकल्पा न पारम्पर्येणापि वस्तुप्रतिबद्धा इति कुतस्तदवसितस्य सत्त्वस्यानवयवत्वसाधकत्वम् । तस्मादविकल्पस्य प्रत्यक्षस्य प्रामाण्यमिच्छता तदनुभूयमानस्थौल्यस्यैव सत्त्वमविकल्पावसेयमकामेनाप्यभ्युपेयम् । तथा च तद्बाधमानं सत्त्वमात्मानमेवापबाधेत । परमसूक्ष्माः परमाणवो विजातीयपरमाण्वनन्तरिता अनुभवविषया इति व्याहतमङ्गीकरणम् । तदिदमुक्तं—**यस्य पुनरवस्तुकः स प्रचयविशेषो** निर्विकल्पविषयः । सन्तु तर्हि सूक्ष्माः परमाणवो निर्विकल्पविषया इत्यत आह—**सूक्ष्मं च कारणमनुपलभ्यमविकल्पस्येति** । तस्यावयव्यभावाद्धेतोरतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति लक्षणेन सर्वमेवं प्राप्तं मिथ्याज्ञानं यत्स्थौल्यालम्बनं यच्च तदधिष्ठानसत्त्वालम्बनमित्यर्थः । नन्वेतावताऽपि न ज्ञानमात्मनि मिथ्या भवति तस्यावयवित्वेनाप्रकाशादित्यत आह—**प्रायेणेति** ।

ननु किमेतावताऽपीत्यत आह—**तदा चेति** । सत्त्वादिज्ञानं चेन्मिथ्या तदा सत्त्वादिहेतुकमनवयवित्वादिज्ञानमपि मिथ्यैव । तस्यापि हि निर्विकल्पगोचरस्थूलमेवावसेयतया विषयः, स च नास्तीति तात्पर्यार्थः । विषयाभाव एव कुत इत्यत आह—**यद्यदिति** । विरोधश्च परिणामवैचित्र्येण भेदाभेदेन चोक्तोपपत्त्यनुसारेणोद्धर्तव्य इति सर्वं रमणीयम् ॥ ४३ ॥

**एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता** । अभिव्यक्तो घटादिर्धर्मो यैस्ते तथोक्ताः । घटादिधर्मोपगृहीता इति यावत् । देश उपर्यधःपार्श्वादिः । कालो वर्तमानः । निमित्तं पार्थिवस्य परमाणोर्गन्धतन्मात्रप्रधानेभ्यः पञ्चतन्मात्रेभ्य उत्पत्तिः । एवमाप्यस्य परमाणोर्गन्धतन्मात्रवर्जितेभ्यो रसतन्मात्रप्रधानेभ्यश्चतुर्भ्यः । एवं तैजसस्य गन्धरसतन्मात्ररहितेभ्यो रूपतन्मात्रप्रधानेभ्यस्त्रिभ्यः । एवं वायवीयस्य गन्धादितन्मात्ररहिताभ्यां स्पर्शप्रधानाभ्यां स्पर्शशब्दतन्मात्राभ्याम् । एवं नाभसस्य शब्द-

---

१ ग. घ. ङ. च. °नाऽऽम्रात° । २ ग. घ. ङ. °धर्मो ग° ।

च्छिन्नेषु वा समापत्तिः सा सविचारेत्युच्यते । तत्राप्येकबुद्धिनिर्ग्राह्यमेवोदितधर्मविशिष्टं भूतसूक्ष्ममालम्बनीभूतं समाधिप्रज्ञायामुपतिष्ठते ।

या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु सर्वधर्मानुपातिषु सर्वधर्मात्मकेषु समापत्तिः सा निर्विचारेत्युच्यते । एवंस्वरूपं हि तद्भूतसूक्ष्ममेतेनैव स्वरूपेणाऽऽलम्बनीभूतमेव समाधिप्रज्ञास्वरूपमुपरञ्जयति ।

प्रज्ञा च स्वरूपशून्येवार्थमात्रा यदा भवति तदा निर्विचारेत्युच्यते । तत्र महद्वस्तुविषया सवितर्का निर्वितर्का च, सूक्ष्मवस्तुविषया सविचारा निर्विचारा च । एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्याख्यातेति ॥ ४४ ॥

---

तन्मात्रादेवैकस्मात् । तदिदं निमित्तं भूतसूक्ष्माणामेतेषां देशकालनिमित्तानामनुभवः, तेनावच्छिन्नेषु नाननुभूतविशेषणा विशेष्ये बुद्धिरुपजायत इत्यर्थः । ननु सवितर्कया सह किं सारूप्यं सविचाराया इत्यत आह—तत्रापीति । पार्थिवो हि परमाणुः पञ्चतन्मात्रप्रचयात्मैकबुद्धिनिर्ग्राह्यः । एवमाप्या दयोऽपि चतुस्त्रिद्व्येकतन्मात्रात्मान एकबुद्धिनिर्ग्राह्या वेदितव्याः । उदितो वर्तमानो धर्मस्तेन विशिष्टम् । एतावता चात्र संकेतस्मृत्यागमानुमानविकल्पानुवेधः सूचितः । नहि प्रत्यक्षेण स्थूले दृश्यमाने परमाणवः प्रकाशन्ते । अपि त्वागमानुमानाभ्याम् । तस्मादुपपन्नमस्याः संकीर्णत्वमिति ।

निर्विचारामाह—या पुनरिति । सर्वथा सर्वेण नीलपीतादिना प्रकारेण । सर्वत इति सार्वविभक्तिकस्तसिः । सर्वैर्देशकालनिमित्तानुभवैरित्यर्थः । तदनेन स्वरूपेण कालानवच्छेदः परमाणूनामिति दर्शितम् । नापि तदारब्धधर्मद्वारेणेत्याह—शान्ता अतीता उदिता वर्तमाना अव्यपदेश्या भविष्यन्तो धर्मास्तैरनवच्छिन्नेषु । अनवच्छिन्ना धर्मैः परमाणवः किमसंबद्धा एव तैरित्यत आह—सर्वधर्मानुपातिष्विति । कतमेन संबन्धेन धर्माननुपतन्ति परमाणव इत्यत आह—सर्वधर्मात्मकेषु । कथंचिद्भेदः कथंचिदभेदो धर्माणां परमाणुभ्य इत्यर्थः । कस्मात्पुनरियं समापत्तिरेतद्विषयेत्यत आह—एवंस्वरूपं हीति । वस्तुतत्त्वग्राहिणी नातत्त्वे प्रवर्तत इत्यर्थः ।

विषयमभिधायास्याः स्वरूपमाह—प्रज्ञा चेति । संकलय्य स्वरूपभेदोपयोगिविषयमाह—तत्रेति । उपसंहरति—एवमिति । उभयोरात्मनश्च निर्विचारायाश्चेति ॥४४॥

---

१ ग. घ. ङ. च. °क्ष्मत्रि° । २ ख. चास्य ।

**सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ ४५ ॥**

पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः। आप्यस्य रसतन्मात्रम्। तैजसस्य रूपतन्मात्रम्। वायवीयस्य स्पर्शतन्मात्रम्। आकाशस्य शब्दतन्मात्रमिति। तेषामहंकारः। अस्यापि लिङ्गमात्रं सूक्ष्मो विषयः। लिङ्गमात्रस्याप्यलिङ्गं सूक्ष्मो विषयः। न चालिङ्गात्परं सूक्ष्ममस्ति। नन्वस्ति पुरुषः सूक्ष्म इति। सत्यम्। यथा लिङ्गात्परमलिङ्गस्य सौक्ष्म्यं न चैवं पुरुषस्य। किंतु लिङ्गस्यान्वयिकारणं पुरुषो न भवति, हेतुस्तु भवतीति। अतः प्रधाने सौक्ष्म्यं निरतिशयं व्याख्यातम् ॥ ४५ ॥

**ता एव सबीजः समाधिः ॥४६॥**

ताश्चतस्रः समापत्तयो बहिर्वस्तुबीजा इति समाधिरपि सबीजः। तत्र स्थूलेऽर्थे सवितर्को निर्वितर्कः, सूक्ष्मेऽर्थे सविचारो निर्विचार इति चतुर्धोपसंख्यातः समाधिरिति ॥ ४६ ॥

---

किं भूतसूक्ष्म एव ग्राह्यविषया समापत्तिः समाप्यते। न। किंतु—**सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्**। पार्थिवस्य परमाणोः संबधिन्नी या गन्धतन्मात्रता सा समापत्तेः सूक्ष्मो विषयः। एवमुत्तरत्रापि योज्यम्। लिङ्गमात्रं महत्तत्त्वं, तद्धि लयं गच्छति प्रधान इति। अलिङ्गं प्रधानं तद्धि न क्वचिल्लयं गच्छतीत्यर्थः। अलिङ्गपर्यवसानत्वमाह—**न चालिङ्गात्परमिति**। चोदयति—**ननु पुरुषोऽपि सूक्ष्मो** नालिङ्गमेवेत्यर्थः। परिहरति—**सत्यमिति**। उपादानतया सौक्ष्म्यमलिङ्ग एव नान्यत्रेत्यर्थः। तत्र पुरुषार्थनिमित्तत्वान्महदहंकारादेः पुरुषोऽपि कारणमलिङ्गवदिति। कुत एवंलक्षणमलिङ्गस्यैव सौक्ष्म्यमित्याशयवान्पृच्छति—**किंत्विति**। उत्तरमाह—**लिङ्गस्येति**। सत्यं कारणं न तूपादानम्। यथा हि प्रधानं महदादिभावेन परिणमते न तथा पुरुषस्तद्धेतुरपीत्यर्थः। उपसंहरति—**अतः प्रधान एव सौक्ष्म्यं निरतिशयं व्याख्यातम्** ॥ ४५ ॥

चतसृणामपि समापत्तीनां ग्राह्यविषयाणां संप्रज्ञातत्वमाह—**ता एव सबीजः समाधिः**। एवकारो भिन्नक्रमः सबीज इत्यस्यानन्तरं द्रष्टव्यः। ततश्चतस्रः समापत्तयो ग्राह्यविषयाः सबीजतया नियम्यन्ते। सबीजता त्वनियता ग्रहीतृग्रहणगोचरायामपि समापत्तौ विकल्पाविकल्पभेदेनानिषिद्धा व्यवतिष्ठते। तेन ग्राह्ये

---

१ क. ख. च. ङ. °प्यस्यापि र°। २ क. ख. च. छ. °ति। स च°। ३ क. ज. एतल्लक्ष°।

## निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥

अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यम् । यदा निर्विचारस्य समाधेर्वैशारद्यमिदं जायते तदा योगिनो भवत्यध्यात्मप्रसादो भूतार्थविषयः क्रमाननुरोधी स्फुटः प्रज्ञालोकः । तथा चोक्तम्—

प्रज्ञाप्रसादमारुह्य अशोच्यः शोचतो जनान् ।
भूमिष्ठानिव शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति ॥ इति ॥ ४७ ॥

## ऋतंभरा तत्र प्रज्ञा ॥ ४८ ॥

तस्मिन्समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतंभरेति संज्ञा भवति । अन्वर्था च सा, सत्यमेव बिभर्ति न च तत्र विपर्यासज्ञानगन्धोऽप्यस्तीति । तथा चोक्तम्—

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥ इति ॥ ४८ ॥

---

चतस्रः समापत्तयो ग्रहीतृग्रहणयोश्चतस्र इत्यष्टौ सिद्धा भवन्तीति । निगदव्याख्यातं भाष्यम् ॥ ४६ ॥

चतसृष्वपि समापत्तिषु ग्राह्यविषयासु निर्विचारायाः शोभनत्वमाह—**निर्विचारवैशारद्येऽध्यात्मप्रसादः** । वैशारद्यपदार्थमाह—अशुद्धीति । रजस्तमसोरुपचयोऽशुद्धिः । सैवाऽऽवरणलक्षणो मलस्तस्मादपेतस्य प्रकाशात्मनः प्रकाशस्वभावस्य बुद्धिसत्त्वस्यात एवानभिभूत इति । स्यादेतद्ग्राह्यविषया चेत्समापत्तिः । कथमात्मविषयः प्रसाद इत्यत आह—भूतार्थविषय इति । नाऽऽत्मविषयः किंतु तदाधार इत्यर्थः । क्रमाननुरोधी युगपदित्यर्थः । अत्रैव पारमर्षीं गाथामुदाहरति—तथा चेति । ज्ञानालोकप्रकर्षेणाऽऽत्मानं सर्वेषामुपरि पश्यन्दुःखत्रयपरीताञ्शोचतो जनाञ्जानाति ॥ ४७ ॥

अत्रैव योगिजनप्रसिद्धान्वर्थसंज्ञाकथनेन योगिसंमतिमाह—**ऋतंभरा तत्र प्रज्ञा** । सुगमं भाष्यम् । आगमेनेति वेदविहितं श्रवणमुक्तम् । अनुमानेनेति मननम् । ध्यानं चिन्ता । तत्राभ्यासः पौनःपुन्येनानुष्ठानम् । तस्मिन्रस आदरः । तदनेन निदिध्यासनमुक्तम् ॥ ४८ ॥

सा पुनः—

**श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थ-त्वात् ॥ ४९ ॥**

श्रुतमागमविज्ञानं तत्सामान्यविषयम् । न ह्यागमेन शक्यो विशेषोऽभिधातुं, कस्मात्, न हि विशेषेण कृतसंकेतः शब्द इति । तथाऽनुमानं सामान्यविषयमेव । यत्र प्राप्तिस्तत्र गतिर्यत्राप्राप्तिस्तत्र न भवति गतिरित्युक्तम् । अनुमानेन च सामान्येनोपसंहारः । तस्माच्छ्रुतानुमानविषयो न विशेषः कश्चिदस्तीति ।

न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लोकप्रत्यक्षेण

---

स्यादेतत् । आगमानुमानगृहीतार्थविषया भावना प्रकर्षलब्धजन्मा निर्विचाराऽऽगमानुमानविषयमेव गोचरयेत् । न खल्वन्यविषयानुभवजन्मा संस्कारः शक्तोऽन्यत्र ज्ञानं जनयितुमतिप्रसङ्गात् । तस्मान्निर्विचारा चेदृतंभराऽऽगमानुमानयोरपि तत्प्रसङ्ग इत्यत आह—श्रुतानुमानेत्यादि । बुद्धिसत्त्वं हि प्रकाशस्वभावं सर्वार्थदर्शनसमर्थमपि तमसाऽऽवृतं यत्रैव रजसोद्घाट्यते तत्रैव गृह्णाति । यदा त्वभ्यासवैराग्याभ्यामपास्तरजस्तमोमलमनवद्यवैशारद्यमुद्द्योतते तदाऽस्यातिपातितसमस्तमानमेयसीम्नः प्रकाशानन्त्ये सति किं नाम यन्न गोचर इति भावः । व्याचष्टे—श्रुतमागम[वि]ज्ञानं तत्सामान्यविषयम् । कस्मात् । न ह्यागमेन शक्यो विशेषोऽभिधातुम् । कुतो यस्मादानन्त्याद्व्यभिचाराच्च न विशेषेण कृतसंकेतः शब्दः । यस्मादस्य विशेषेण सह वाच्यवाचकसंबन्धः प्रतीयेत । न च वाक्यार्थोऽपीदृशो विशेषः संभवति । अनुमानेऽपि लिङ्गलिङ्गिसंबन्धग्रहणाधीनजन्मनि गतिरेषैवेत्याह—तथाऽनुमानमिति । यत्र प्राप्तिरित्यत्र यत्रतत्रशब्दयोः स्थानपरिवर्तनेन व्याप्यव्यापकभावोऽवगमयितव्यः । अतोऽत्रानुमानेन सामान्येनोपसंहारः । उपसंहरति—तस्मादिति ।

अस्तु तर्हि संबन्धग्रहानपेक्षं लोकप्रत्यक्षं न तत्सामान्यविषयमित्यत आह—**न चास्येत्यादि** । मा भूत्संबन्धग्रहाधीनं लोकप्रत्यक्षम् । इन्द्रियाधीनं तु भवत्येव । न चेन्द्रियाणामस्मिन्नस्ति योग्यतेत्यर्थः । ननु च यद्यागमानुमानप्रत्यक्षागोचरो

---

१ ख. झ. °षयभा° । २ क. °ह न वा° । ३ क. प्रतीयते । ४ क. °क्यार्थेऽपि° । ५ ख. झ. °यत्राप्रा° ।

ग्रहणमस्ति। न चास्य विशेषस्या[1]प्रमाणकस्याभावोऽस्तीति समाधिप्रज्ञानिर्ग्राह्य एव स विशेषो भवति भूतसूक्ष्मगतो वा पुरुषगतो वा। तस्माच्छ्रुतानुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा विशेषार्थत्वादिति ॥ ४९ ॥

समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतः संस्कारो नवो नवो जायते—

**तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥**

समाधिप्रज्ञाप्रभवः संस्कारो व्युत्थानसंस्काराशयं बाधते। व्युत्थानसंस्काराभिभवात्तत्प्रभवाः प्रत्यया न भवन्ति। प्रत्ययनिरोधे समाधिरुपतिष्ठते। ततः समाधिजा प्रज्ञा, ततः प्रज्ञाकृताः संस्कारा इति नवो नवः संस्काराशयो जायते। ततश्च

---

विशेषस्तर्हि नास्ति प्रमाणविरहादित्यत आह——न चेति। न हि प्रमाणं व्यापकं कारणं वा प्रमेयस्य येन तन्निवृत्तौ निवर्तेत। नो खलु कलावतश्चन्द्रस्य परभागवर्तिहरिणसद्भावं प्रति न संदिहते प्रामाणिका इत्यर्थः। इति तस्मात्समाधिप्रज्ञानिर्ग्राह्य एवेति। अत्र च विवादाध्यासिताः परमाणव आत्मानश्च प्रातिस्विकविशेषशालिनो द्रव्यत्वे सति परस्परं व्यावर्तमानत्वाद्ये द्रव्यत्वे सति परस्परं व्यावर्तन्ते ते प्रातिस्विकविशेषशालिनो यथा खण्डमुण्डादय इत्यनुमानेनाऽऽगमेन च ऋतंभरप्रज्ञोपदेशपरेण यद्यपि विशेषो निरूप्यते तदनिरूपणे संशयः स्यान्न्यायप्राप्तत्वात्तथाऽप्यदूरविप्रकर्षेण तत्सत्त्वं कथंचिद्गोचरयतः श्रुतानुमाने न तु साक्षाच्चार्थमिव समुच्चयादिपदानि लिङ्गसंख्यायोगितया। तस्मात्सिद्धं श्रुतानुमानप्रज्ञाभ्यामन्यविषयेति ॥४९॥

स्यादेतत्। भवतु परमार्थविषयः संप्रज्ञातो यथोक्तोपायाभ्यासादनादिना तु व्युत्थानसंस्कारेण निरूढनिबिडतया[2] प्रतिबन्धनीया समाधिप्रज्ञा सा वात्यावर्तमध्यवर्तिप्रदीपपरमाणुरिवेति शङ्कामपनेतुं सूत्रमवतारयति——समाधिप्रज्ञेति। सूत्रं पठति——**तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी**। तदिति निर्विचारां समापत्तिं परामृशति। अन्येति व्युत्थानमाह। भूतार्थपक्षपातो हि धियां स्वभावस्तावदेवेयमनवस्थिता भ्राम्यति न यावत्तत्त्वं प्रतिलभते। तत्प्रतिलम्भे तत्र स्थि[3]तपदा सती संस्कारबु[4]द्धिः संस्का-

---

१ ग. °स्याप्रामाणिक°। २ ख. °याऽभिभवनीया सा। ३ ख. स्थिरप°। ४ ज. °बुद्धिर्बुद्धिसं°।

प्रज्ञा, ततश्च संस्कारा इति। कथमसौ संस्कारातिशयश्चित्तं साधिकारं न करिष्यतीति। न ते प्रज्ञाकृताः संस्काराः क्लेशक्षयहेतुत्वाच्चित्तमधिकारविशिष्टं कुर्वन्ति। चित्तं हि ते स्वकार्यादवसादयन्ति। ख्यातिपर्यवसानं हि चित्तचेष्टितमिति ॥ ५० ॥

किंचास्य भवति—

**तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥**

( इति श्रीपतञ्जलिविरचितयोगसूत्रेषु प्रथमः समाधिपादः ॥ १ ॥ )

---

रेबुद्धिचक्रक्रमेणाऽऽवर्तमानाऽनादिमप्यतत्त्वसंस्कारबुद्धिक्रमं बाधत एवेति। तथा च बाह्या अप्याहुः—

निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः।
न बाधोऽनादिमत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥ इति।

स्यादेतत्समाधिप्रज्ञातोऽस्तु व्युत्थानजस्य संस्कारस्य निरोधः। समाधिजस्तु संस्कारातिशयः समाधिप्रज्ञाप्रभवहेतुरस्त्यविकल इति तदवस्थैव चित्तस्य साधिकारतेति चोदयति— कथमसाविति। परिहरति—न त इति। चित्तस्य हि कार्यद्वयं शब्दाद्युपभोगो विवेकख्यातिश्चेति। तत्र क्लेशकर्माशयसहितं शब्दाद्युपभोगे वर्तते। प्रज्ञाप्रभवसंस्कारोन्मूलितनिखिलक्लेशकर्माशयस्य तु चेतसोऽवसितप्रायाधिकारभावस्य विवेकख्यातिमात्रमवशिष्यते कार्यम्। तस्मात्समाधिसंस्काराश्चित्तस्य न भोगाधिकारहेतवः प्रत्युत तत्परिपन्थिन इति। स्वकार्याद्भोगलक्षणादवसादयन्ति, असमर्थं कुर्वन्तीत्यर्थः। कस्मात्ख्यातिपर्यवसानं हि चित्तचेष्टितं, तावद्धि भोगाय चित्तं चेष्टते न यावद्विवेकख्यातिमनुभवति। संजातविवेकख्यातिनस्तु क्लेशनिवृत्तौ न भोगाधिकार इत्यर्थः ॥ ५० ॥

तदत्र भोगाधिकारप्रशान्तिः प्रयोजनं प्रज्ञासंस्काराणामित्युक्तम्। पृच्छति— किंचेति। किंचास्य भवति प्रज्ञासंस्कारवच्चित्तं प्रज्ञासंस्कारप्रवाहजनकतया तथैव साधिकारमित्यधिकारापनुत्तयेऽन्यदपि किंचिदपेक्षणीयमस्तीत्यर्थः। सूत्रेणोत्तरमाह— **तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः**। परेण वैराग्येण ज्ञानप्रसादमात्रलक्षणेन संस्कारोपजननद्वारा तस्यापि प्रज्ञाकृतसंस्कारस्य निरोधे, न केवलं प्रज्ञाया इत्यपिशब्दार्थः। सर्वस्योत्पद्यमानस्य संस्कारप्रज्ञाप्रवाहस्य निरोधात्कारणा-

---

१ क. ख. °राश°। २ क. ज. झ. °रच°। ३ ज. °मेण व°। ४ क. नो। ५ क. °दिसत्त्वे°। ६ क. झ. °सवे हे°।

स न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानामपि संस्काराणां प्रतिबन्धी भवति । कस्मात्, निरोधजः संस्कारः समाधिजान्संस्कारान्बाधत इति ।

निरोधस्थितिकालक्रमानुभवेन निरोधचित्तकृतसंस्कारास्तित्वमनुमेयम् । व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्यां प्रकृताववस्थितायां प्रविलीयते । तस्मात्ते संस्काराश्चित्तस्याधिकारविरोधिनो न स्थितिहेतवो भवन्तीति ।

भावेन कार्यानुत्पादात्सोऽयं निर्बीजः समाधिर्भवति । व्याचष्टे—स निर्बीजः समाधिः समाधिप्रज्ञाविरोधिनः परस्माद्वैराग्यादुपजायमानः स्वकारणद्वारेण न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानामप्यसौ संस्काराणां परिपन्थी भवति । ननु वैराग्यजं विज्ञानं सद्विज्ञानं प्रज्ञामात्रं बाधतां संस्कारं त्वविज्ञानरूपं कथं बाधते । दृष्टा हि जाग्रतोऽपि स्वप्नदृष्टार्थस्मृतिरित्याशयवान्पृच्छति—कस्मादिति । उत्तरं—निरोधज इति । निरुध्यतेऽनेन प्रज्ञेति निरोधः परं वैराग्यम् । ततो जातो निरोधजः संस्कारः । संस्कारादेव दीर्घकालनैरन्तर्यसत्कारासेवितपरवैराग्यजन्मनः प्रज्ञासंस्कारबाधो न तु विज्ञानादित्यर्थः ।

स्यादेतत् । निरोधजसंस्कारसद्भावे किं प्रमाणम् । स हि प्रत्यक्षेण वाऽनुभूयेत स्मृत्या वा कार्येणानुमीयेत । न च सर्ववृत्तिनिरोधे प्रत्यक्षमस्ति योगिनः । नापि स्मृतिः । तस्य वृत्तिमात्रनिरोधतया स्मृतिजनकत्वासंभवादित्यत आह—निरोधेति । निरोधे स्थितिश्चित्तस्य निरुद्धावस्थेत्यर्थः । तस्याः कालक्रमो मुहूर्तार्धयामयामाहोरात्रादिस्तदनुभवेन । एतदुक्तं भवति—वैराग्याभ्यासप्रकर्षानुरोधी निरोधप्रकर्षो मुहूर्तार्धयामादिव्यापितयाऽनुभूयते योगिना । न च वैराग्यक्षणाः क्रमनियततया परस्परमसंभवन्तस्तत्तत्कालव्यापितया सातिशयं निरोधं कर्तुमीशत इति तत्तद्वैराग्यक्षणप्रचयजन्यः स्थायी संस्कारप्रचय एषितव्य इति भावः । ननूच्छिद्यन्तां प्रज्ञासंस्काराः । निरोधसंस्कारास्तु कुतः समुच्छिद्यन्ते । अनुच्छेदे वा साधिकारत्वमेवेत्यत आह—व्युत्थानेति । व्युत्थानं च तस्य निरोधसमाधिश्च संप्रज्ञातस्तत्प्रभवाः संस्काराः कैवल्यभागीया निरोधजाः संस्कारा इत्यर्थः । व्युत्थानप्रज्ञासंस्काराश्चित्ते प्रलीना इति भवति चित्तं व्युत्थानप्रज्ञासंस्कारवत् । निरोधसंस्कारस्तु प्रत्युदित एवाऽऽस्ते चित्ते । निरोधसंस्कारे सत्यपि चित्तमनधिकारवत् । पुरुषार्थजनकं चित्तं हि साधिकारं शब्दाद्युपभोगविवेकख्याती च तथा पुरुषार्थः । संस्कारशेषतायां तु न बुद्धेः प्रतिसंवेदी पुरुष इति नासौ पुरुषार्थः । विदेहप्रकृतिलयानां न निरोधभागितया साधिकारं

१ ख. न. °ननासं° । २ ख. ज. °था । सं° । ३ झ. पुरुषार्थौ ।

यस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं निवर्तते, तस्मिन्निवृत्ते पुरुषः स्वरूपमात्रप्रतिष्ठोऽतः शुद्धः केवलो मुक्त इत्युच्यत इति ॥ ५१ ॥

इति श्रीपातञ्जले सांख्यप्रवचने योगशास्त्रे श्रीमद्व्यासभाष्ये
प्रथमः समाधिपादः ॥ १ ॥

---

चित्तम् । अपि तु क्लेशवासिततयेत्याशयवानाह—यस्मादिति । शेषं सुगमम् ॥ ५१ ॥

योगस्योद्देशनिर्देशो तदर्थं वृत्तिलक्षणम् ।
योगोपायाः प्रभेदाश्च पादेऽस्मिन्नुपवर्णिताः ॥ १ ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलयोगसूत्रभाष्यव्याख्यायां
प्रथमः समाधिपादः ॥ १ ॥

# पातञ्जलयोगसूत्राणि ।

—०—:⊙:—०—

## ( तत्र द्वितीयः साधनपादः ) ।

उद्दिष्टः समाहितचित्तस्य योगः । कथं व्युत्थितचित्तोऽपि योगयुक्तः स्यादित्येतदारभ्यते—

**तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥**

नातपस्विनो योगः सिध्यति । अनादिकर्मक्लेशवासनाचित्रा प्रत्युपस्थितविषयजाला चाशुद्धिर्नान्तरेण तपःसंभेदमापद्यत इति तपस उपादानम् । तच्च चित्तप्रसादनमबाधमानमनेनाऽऽसेव्यमिति मन्यते ।

---

ननु प्रथमपादेनैव सोपायः सावान्तरप्रभेदः सफलो योग उक्तस्तत्किमपरमवाशिष्यते यदर्थं द्वितीयः पादः प्रारभ्येतेत्यत आह—**उद्दिष्ट** इति । अभ्यासवैराग्ये हि योगोपायौ प्रथमे पाद उक्तौ । न च तौ व्युत्थितचित्तस्य द्रागित्येव संभवत इति द्वितीयपादोपदेश्यानुपायानपेक्षते सत्त्वशुद्ध्यर्थम् । ततो हि विशुद्धसत्त्वः कृतरक्षासंविधानोऽभ्यासवैराग्ये प्रत्यहं भावयति । समाहितत्वमविक्षिप्तत्वम् । कथं व्युत्थानचित्तोऽप्युपदेक्ष्यमाणैरुपायैर्युक्तः सन्योगी स्यादित्यर्थः । तत्र वक्ष्यमाणेषु नियमेष्वाकृष्य प्राथमिकं प्रत्युपयुक्ततरतया प्रथमतः क्रियायोगमुपदिशति सूत्रकारः—**तपःस्वाध्यायेत्यादि** । क्रियैव योगः क्रियायोगो योगसाधनत्वात् । अत एव विष्णुपुराणे खाण्डिक्यकेशिध्वजसंवादे—

योगयुक्प्रथमं योगी युञ्जमानोऽभिधीयते [ ६ । ७ । ३३ ] ॥

इत्युक्रम्य तपःस्वाध्यायादयो दर्शिताः । व्यतिरेकमुखेन(ण) तपस उपायत्वमाह—**नातपस्विन** इति । तपसोऽवान्तरव्यापारमुपायतोपयोगिनं दर्शयति—**अनादीति** । अनादिभ्यां कर्मक्लेशवासनाभ्यां चित्राऽत एव प्रत्युपस्थितमुपनतं विषयजालं यस्यां सा तथोक्ता । अशुद्धी रजस्तमःसमुद्रेको नान्तरेण तपःसंभेदमापद्यते । सान्द्रस्य नितान्तविरलता संभेदः । ननूपादीयमानमपि तपो धातुवैषम्यहेतुतया योगप्रतिपक्ष[१] इति कथं तदुपाय इत्यत आह—**तच्चेति** । तावन्मात्रमेव तपश्चरणीयं न यावता धातुवैषम्यमापद्यत इत्यर्थः ।

---

१ क. योगं प्रति प्रतिपक्षमिति क° ।

स्वाध्यायः प्रणवादिपवित्राणां जपो मोक्षशास्त्राध्ययनं वा ।
ईश्वरप्रणिधानं सर्वक्रियाणां परमगुरावर्पणं तत्फलसंन्यासो वा ॥ १ ॥

स हि क्रियायोगः—

**समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥**

स ह्यासेव्यमानः समाधिं भावयति क्लेशांश्च प्रतनू करोति । प्रतनूकृतान्क्लेशान्प्रसंख्यानाग्निना दग्धबीजकल्पानप्रसवधर्मिणः करिष्यतीति । तेषां तनूकरणात्पुनः क्लेशैरपरामृष्टा सत्त्वपुरुषान्यतामात्रख्यातिः सूक्ष्मा प्रज्ञा समाप्ताधिकारा प्रतिप्रसवाय कल्पिष्यत इति ॥ २ ॥

---

प्रणवादयः पुरुषसूक्तरुद्रमण्डलब्राह्मणादयो वैदिकाः, पौराणिकाश्च ब्रह्मपारायणादयः । परमगुरुर्भगवानीश्वरस्तस्मिन् ।

यत्रेदमुक्तम्—कामतोऽकामतो वाऽपि यत्करोति शुभाशुभम् ।
तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥ इति ।

तत्फलसंन्यासो वा फलानभिसंधानेन कार्यकरणम् । यत्रेदमुक्तम्—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥१॥[भ०गी०२।४७] ।

तस्य प्रयोजनाभिधानाय सूत्रमवतारयति—स हीति । सूत्रं—**समाधिभावनार्थः क्लेशतनूकरणार्थश्च** । ननु क्रियायोग एव चेत्क्लेशान्प्रतनू करोति कृतं तर्हि प्रसंख्यानेनेत्यत आह—प्रतनूकृतानिति । क्रियायोगस्य प्रतनूकरणमात्रे व्यापारो न तु वन्ध्यत्वे क्लेशानां प्रसंख्यानस्य तु तद्वन्ध्यत्वे । दग्धबीजकल्पानिति वन्ध्यत्वेन दग्धकलमबीजसारूप्यमुक्तम् । स्यादेतत् । प्रसंख्यानमेव चेत्क्लेशानप्रसवधर्मिणः करिष्यति, कृतमेषां प्रतनूकरणेनेत्यत आह—तेषामिति । क्लेशानामतानवे हि बलवद्भिरोधिग्रस्ता सत्त्वपुरुषान्यताख्यातिरुदेतुमेव नोत्सहते । प्रागेव तद्वन्ध्यभावं कर्तुं प्रविरलीकृतेषु तु क्लेशेषु दुर्बलेषु तद्विरोधिन्यपि वैराग्याभ्यासाभ्यामुपजायते । उपजाता च तैरपरामृष्टाऽनभिभूता नैव यावत्परामृश्यत इति । सत्त्वपुरुषान्यतामात्रख्यातिः सूक्ष्मा प्रज्ञाऽतीन्द्रियतया सूक्ष्मोऽस्या विषय इति सूक्ष्मा प्रज्ञा प्रतिप्रसवाय प्रविलयाय कल्पिष्यते । कुतः, समाप्ताधिकारा यतः समाप्तोऽधिकारः कार्यारम्भणं गुणानां यया हेतुभूतया सा तथोक्तेति ॥ २ ॥

---

१ क. °राद° ।

अथ के[1] क्लेशाः कियन्तो वेति—

**अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः ॥ ३ ॥**

क्लेशा इति पञ्च विपर्यया इत्यर्थः[2]। ते[3] स्पन्दमाना गुणाधिकारं द्रढयन्ति, परिणाममवस्थापयन्ति, कार्यकारणस्रोत उन्नमयन्ति, परस्परानुग्रहतन्त्री भूत्वा कर्मविपाकं चाभिनिर्हरन्तीति ॥ ३ ॥

**अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ ४ ॥**

अत्राविद्या क्षेत्रं प्रसवभूमिरुत्तरेषामस्मितादीनां चतुर्विधविकल्पानां[4] प्रसुप्ततनुविच्छिन्नोदाराणाम् । तत्र का प्रसुप्तिः । चेतसि शक्तिमात्रप्रतिष्ठानां बीजभावोपगमः । तस्य प्रबोध आलम्बने

---

पृच्छति—अथेति । अविद्येति सूत्रेण परिहारः । **अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः** । व्याचष्टे—**पञ्च विपर्यया इति** । अविद्या तावद्विपर्यय एव । अस्मितादयोऽप्यविद्योपादानास्तदविनिर्भागवर्तिन इति विपर्ययाः । ततश्चाविद्यासमुच्छेदे तेषामपि समुच्छेदो युक्त इति भावः । तेषामुच्छेत्तव्यताहेतुं संसारकारणत्वमाह—**ते स्पन्दमानाः** समुदाचरन्तो **गुणानामाधिकारं द्रढयन्ति** बलवन्तं कुर्वन्त्यत एव **परिणाममवस्थापयन्ति** । अव्यक्तमहदहंकारपरम्परया हि **कार्यकारणस्रोत उन्नमयन्त्युद्भावयन्ति** । यदर्थं सर्वमेतत्कुर्वन्ति तद्दर्शयति—**परस्परेति** । कर्मणां विपाको जात्यायुर्भोगलक्षणः पुरुषार्थस्तममी क्लेशा अभिनिर्हरन्ति निष्पादयन्ति । किं प्रत्येकं नेत्याह—**परस्परानुग्रहेति** । कर्मभिः क्लेशाः क्लेशैश्च कर्माणीति ॥ ३ ॥

हेयानां क्लेशानामविद्यामूलत्वं दर्शयति—**अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्** । **तत्र का प्रसुप्तिरिति** । स्वोचितामर्थक्रियामकुर्वतां क्लेशानां सद्भावे न प्रमाणमस्तीत्यभिप्रायः पृच्छतः । उत्तरं—**चेतसीति** । मा नामार्थक्रियां कार्षुः क्लेशा विदेहप्रकृतिलयानां बीजभावं प्राप्तास्तु ते शक्तिमात्रेण सन्ति क्षीर इव दधि । न हि विवेकख्यातेरन्यदस्ति कारणं तद्वन्ध्यतायाम् । अतो विदेहप्रकृतिलया

---

१ ग. के ते क्ले° । २ ग. घ. °शाः पञ्च क्ले° । ३ ग. घ. ङ. ते स्यन्द° । ४ ख. च. °विक° । ५ ग. घ. ङ. °धकल्पितानां ।

संमुखीभावः। प्रसंख्यानवतो दग्धक्लेशबीजस्य संमुखीभूतेऽप्यालम्बने नासौ पुनरस्ति, दग्धबीजस्य कुतः प्ररोह इति। अतः क्षीणक्लेशः कुशलश्चरमदेह इत्युच्यते। तत्रैव सा दग्धबीजभावा पञ्चमी क्लेशावस्था नान्यत्रेति। सतां क्लेशानां तदा बीजसामर्थ्यं दग्धमिति विषयस्य संमुखीभावेऽपि सति न भवत्येषां प्रबोध इत्युक्ता प्रसुप्तिर्दग्धबीजानामप्ररोहश्च।

तनुत्वमुच्यते—प्रतिपक्षभावनोपहताः क्लेशास्तनवो भवन्ति। तथा विच्छिद्य विच्छिद्य तेन तेनाऽऽत्मना पुनः[1] पुनः समुदाचरन्तीति विच्छिन्नाः। कथं, रागकाले क्रोधस्यादर्शनात्। न हि रागकाले क्रोधः समुदाचरति। रागश्च क्वचिद्दृश्यमानो न विषयान्तरे नास्ति। नैकस्यां स्त्रियां चैत्रो रक्त इत्यन्यासु स्त्रीषु विरक्तः

---

विवेकख्यातिविरहिणः प्रसुप्तक्लेशा न यावत्तदवधिकालं प्राप्नुवन्ति। तत्प्राप्तौ तु पुनरावृत्ताः सन्तः क्लेशास्तेषु तेषु विषयेषु संमुखी भवन्ति। शक्तिमात्रेण प्रतिष्ठा येषां ते तथोक्ताः। तदनेनोत्पत्तिशक्तिरुक्ता। बीजभावोपगम इति च कार्यशक्तिरिति। ननु विवेकख्यातिमतोऽपि क्लेशाः कस्मान्न प्रसुप्ता इत्यत आह—**प्रसंख्यानवत इति।** चरमदेहो न तस्य देहान्तरमुत्पत्स्यते यदपेक्षयाऽस्य देहः पूर्व इत्यर्थः। **नान्यत्र** विदेहादिष्वित्यर्थः। ननु सतो नात्यन्तविनाश इति किमिति तदीययोगर्द्धिबलेन विषयसंमुखीभावे न क्लेशाः प्रबुध्यन्त इत्यत आह—**सतामिति।** सन्तु क्लेशा दग्धस्त्वेषां प्रसंख्यानाग्निना बीजभाव इत्यर्थः।

क्लेशप्रतिपक्षः क्रियायोगस्तस्य भावनमनुष्ठानं तेनोपहतास्तनवः। अथवा सम्यग्ज्ञानमविद्यायाः प्रतिपक्षो भेददर्शनमस्मितायाः माध्यस्थ्यं रागद्वेषयोरनुबन्धबुद्धिनिवृत्तिरभिनिवेशस्येति। विच्छित्तिमाह—**तथेति।** क्लेशानामन्यतमेन समुदाचरताऽभिभवाद्वाऽत्यन्तविषयसेवया वा विच्छिद्य विच्छिद्य तेन तेनाऽऽत्मना समुदाचरन्त्याविर्भवन्ति वाजीकरणाद्युपयोगेन वाऽभिभावकदौर्बल्येन वेति। वीप्सया विच्छेदसमुदाचारयोः पौनःपुन्यं दर्शयता यथोक्तात्प्रसुप्ताद्भेद उक्तः। रागेण वा समुदाचरता विजातीयः क्रोधोऽभिभूयते सजातीयेन वा विषयान्तरवर्तिना रागेणैव विषयान्तरवर्ती रागोऽभिभूयत इत्याह—**रागेति।** भविष्यद्वृत्तेस्त्रयी गतिर्यथायोगं वेदि-

---

[1] ख. ग. घ. ङ. च. छ. °नः स°। [2] ख. °वद°।

किंतु तत्र रागो लब्धवृत्तिरन्यत्र तु भविष्यद्वृत्तिरिति। स हि तदा प्रसुप्ततनुविच्छिन्नो भवति।

विषये यो लब्धवृत्तिः स उदारः। सर्व एवैते क्लेशविषयत्वं नातिक्रामन्ति। कस्तर्हि विच्छिन्नः प्रसुप्तस्तनुरुदारो वा क्लेश इति। उच्यते—सत्यमेवैतत्, किंतु विशिष्टानामेवैतेषां विच्छिन्नादित्वम्। यथैव प्रतिपक्षभावनातो निवृत्तस्तथैव स्वव्यञ्जकाञ्जनेनाभिव्यक्त[1] इति। सर्व एवामी क्लेशा अविद्याभेदाः। कस्मात्, सर्वेष्वविद्यैवाभिप्लवते। यदविद्यया वस्त्वाकार्यते तदेवानुशेरते क्लेशा विपर्यासप्रत्ययकाल उपलभ्यन्ते क्षीयमाणां चाविद्यामनु क्षीयन्त इति॥ ४॥

तत्राविद्यास्वरूपमुच्यते—

**अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या॥ ५॥**

अनित्ये कार्ये नित्यख्यातिः। तद्यथा—ध्रुवा पृथिवी,

---

तव्येत्याह—स हीति। भविष्यद्वृत्तिक्लेशमात्रपरामर्शि सर्वनाम न चैत्ररागपरामर्शि तस्य विच्छिन्नत्वादेवेति।

उदारमाह—विषय इति। ननूदार एव पुरुषान्क्लिश्नातीति भवतु क्लेशोऽन्ये त्वक्लिश्नन्तः कथं क्लेशा इत्यत आह—सर्व एवैत इति। क्लेशविषयत्वं क्लेशपदवाच्यत्वं नातिक्रामन्त्युदारतामापद्यमानाः। अत एव तेऽपि हेया इति भावः। क्लेशत्वेनैकतां मन्यमानश्चोदयति—कस्तर्हीति। क्लेशत्वेन समानत्वेऽपि यथोक्तावस्थाभेदाद्विशेष इति परिहरति—उच्यते सत्यमिति। स्यादेतत्। अविद्यातो भवन्तु क्लेशाः, तथाऽप्यविद्यानिवृत्तौ कस्मान्निवर्तन्ते। न खलु पटः कुविन्दानिवृत्तौ निवर्तेत इत्यत आह—सर्व एवेति। भेदा इव भेदास्तदविनिर्भागवर्तिन इति यावत्। पृच्छति—कस्मात्। उत्तरं—सर्वेष्विति। तदेव स्फुटयति—यदिति। आकार्यते समारोप्यते। शेषं सुगमम्।

प्रसुप्तास्तत्त्वलीनानां तन्ववस्थाश्च योगिनाम्।
विच्छिन्नोदाररूपाश्च क्लेशा विषयसङ्गिनाम्॥ इति संग्रहः॥ ४॥

**अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या।** अनित्यत्वोपयोगिविशेषणं—कार्य इति। केचित्किल भूतानि नित्यत्वेनाभिमन्यमानास्तद्रूपम-

---

[1] क. ख. °व्यक्तः सर्व इ°।

ध्रुवा सचन्द्रतारका द्यौः, अमृता दिवौकस इति । तथाऽशुचौ परमबीभत्से काये[1]—

स्थानाद्बीजादुपष्टम्भान्निःस्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥

इत्यशुचौ शुचिख्यातिर्दृश्यते । नवेव शशाङ्कलेखा कमनीयेयं कन्या मध्वमृतावयवनिर्मितेव चन्द्रं भित्त्वा निःसृतेव ज्ञायते, नीलोत्पलपत्रायताक्षी हावगर्भाभ्यां लोचनाभ्यां जीवलोकमाश्वासयन्तीवेति कस्य केनाभिसंबन्धः । भवति चैवमशुचौ शुचिविपर्यासप्रत्यय इति । एतेनापुण्ये पुण्यप्रत्ययस्तथैवानर्थे चार्थप्रत्ययो[2] व्याख्यातः[3] ।

तथा दुःखे सुखख्यातिं वक्ष्यति-"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" इति । तत्र सुखख्यातिरविद्या । तथाऽनात्मन्यात्मख्यातिर्बाह्योपकरणेषु चेतनाचेतनेषु भोगाधिष्ठाने वा शरीरे पुरुषोपकरणे वा मनस्यनात्मन्यात्मख्यातिरिति । तथैतदत्रोक्तम्-" व्यक्तमव्यक्तं वा सत्त्व-

---

भीप्सवस्तान्येवोपासते । एवं धूमादिमार्गानुपासते चन्द्रसूर्यतारकाद्युलोकान्नित्यानभिमन्यमानास्तत्प्राप्तये । एवं दिवौकसो देवानमृतानभिमन्यमानास्तद्भावाय सोमं पिबन्ति । आम्नायते हि-" अपाम सोमममृता अभूम " [ तै० सं० ३ । २ । ५ । ४ ] इति । सेयमनित्येषु नित्यख्यातिरविद्या । तथाऽशुचौ परमबीभत्से काये । अर्धोक्त एव कायबीभत्सतायां वैयासकीं गाथां पठति—स्थानादिति । मातुरुदरं मूत्राद्युपहतं स्थानं, पित्रोर्लोहितरेतसी बीजम् । अशितपीताहाररसादिभाव उपष्टम्भस्तेन शरीरं धार्यते । निःस्यन्दः प्रस्वेदः । निधनं च श्रोत्रियशरीरमप्यपवित्रयति । तत्स्पर्शे स्नानविधानात् । ननु यदि शरीरमशुचि कृतं तर्हि मृज्जलादिक्षालनेनेत्यत—आधेयशौचत्वादिति । स्वभावेनाशुचेरपि शरीरस्य शौचमाधेयं सुगन्धितेव कामिनीनामङ्गरागादिभिः । अर्धोक्तं पूरयति—इत्युक्तेभ्यो हेतुभ्योऽशुचौ शरीर इति । शुचिख्यातिमाह—नवेति । हावः शृङ्गारजा लीला । कस्य स्त्रीकामस्य परमबीभत्सस्य केन मन्दतमसाऽदृश्येन शशाङ्कलेखादिना संबन्धः । एतेनाशुचौ स्त्रीकाये शुचिख्यातिप्रदर्शनेन । अपुण्ये हिंसादौ संसारमोचकादीनां पुण्यप्रत्ययः । एवमर्जनरक्षणादिदुःखबहुलतयाऽनर्थे धनादावर्थप्रत्ययो व्याख्याताः । सर्वेषां जुगुप्सितत्वेनाशुचित्वात् ।

तथा दुःख इति । सुगमम् । तथाऽनात्मनीति । सुगमम् । तथैतदत्रोक्तं पञ्च-

---

१ क. ख. घ. ङ. °ये शुचिख्यातिः । उक्तं च—स्था° । ग. °ये, उक्तं च—स्था° । २ झ. °त्ययो व्या° । ३ झ. °ख्यातः । स° ।

त्मत्वेनाभिप्रतीत्य तस्य संपदमनु नन्दत्यात्मसंपदं मन्वानस्तस्य व्यापदमनु शोचत्यात्मव्यापदं मन्वानः स सर्वोऽप्रतिबुद्धः" इति । एषा चतुष्पदा भवत्यविद्या मूलमस्य क्लेशसंतानस्य कर्माशयस्य च सविपाकस्येति ।

तस्याश्चामित्रागोष्पदवद्वस्तुसतत्त्वं विज्ञेयम् । यथा नामित्रो मित्राभावो न मित्रमात्रं किंतु तद्विरुद्धः सपत्नः । यथा[1] वाऽगोष्पदं न गोष्पदाभावो न गोष्पदमात्रं किंतु देश एव ताभ्यामन्यद्वस्त्वन्तरम्, एवमविद्या न प्रमाणं न प्रमाणाभावः किंतु विद्याविपरीतं ज्ञानान्तरमविद्येति ॥ ५ ॥

शिखेन । व्यक्तं चेतनं पुत्रदारपश्वादि । अव्यक्तमचेतनं शय्यासनाशनादि । स सर्वोऽप्रतिबुद्धो मूढः । चत्वारि पदानि स्थानान्यस्या इति चतुष्पदा । नन्वन्याऽपि दिङ्मोहालातचक्रादिविषयाऽनन्तपदाऽविद्या तत्किमुच्यते चतुष्पदेत्यत आह—**मूलमस्येति** । सन्तु नामान्या अप्यविद्याः संसारबीजं तु चतुष्पदैवेति ।

नन्वविद्येति नञ्समासः पूर्वपदार्थप्रधानो वा स्याद्यथाऽमक्षिकमिति । उत्तरपदार्थप्रधानो वा यथाऽराजपुरुष इति । अन्यपदार्थप्रधानो वा यथाऽमक्षिको देश इति । तत्र पूर्वपदार्थप्रधानत्वे विद्यायाः प्रसज्यप्रतिषेधो गम्येत । न चास्याः क्लेशादिकारणत्वम् । उत्तरपदार्थप्रधानत्वे वा विद्यैव कस्यचिदभावेन विशिष्टा गम्येत । सा च क्लेशादिपरिपन्थिनी न तु तद्बीजम् । न हि प्रधानोपघाती प्रधानगुणो युक्तः । तदनुपघाताय गुणे त्वन्याय्यकल्पना । तस्माद्विद्यास्वरूपानुपघाताय नञोऽन्यथाकरणमध्याहारो वा निषेध्यस्येति । अन्यपदार्थप्रधानत्वे त्वविद्यमानविद्या बुद्धिर्वक्तव्या । न चासौ विद्याया अभावमात्रेण क्लेशादिबीजम् । विवेकख्यातिपूर्वकनिरोधसंपन्नाया अपि तथात्वप्रसङ्गात् । तस्मात्सर्वथैवाविद्याया न क्लेशादिमूलतेत्यत आह—**तस्याश्चेति** । वस्तुनो भावो वस्तुसतत्त्वं वस्तुत्वमिति यावत् । तदनेन न प्रसज्यप्रतिषेधः । नापि विद्यैवाविद्या, न[2] तदभावविशिष्टा बुद्धिरपि तु विद्याविरुद्धं विपर्ययज्ञानमविद्येत्युक्तम् । लोकाधीनावधारणो हि शब्दार्थयोः संबन्धः । लोके चोत्तरपदार्थप्रधानस्यापि नञ उत्तरपदाभिधेयोपमर्दकस्य तल्लक्षिततद्विरुद्धपरतया तत्र तत्रोपलब्धेरिहापि तद्विरुद्धे वृत्तिरिति भावः । दृष्टान्तं विभजते—**यथा नामित्र इति** । न मित्राभावो नापि मित्रमात्रमित्यस्यानन्तरं वस्त्वन्तरं किंतु तद्विरुद्धः सपत्न इति वक्तव्यम् । तथाऽगोष्पदमिति न गोष्पदाभावो न गोष्पदमात्रं किंतु देश एव विपुलो गोष्पदविरुद्धस्ताभ्यामभावगोष्पदाभ्यामन्य[3]द्वस्त्वन्तरम् । दार्ष्टान्तिके योजयति—**एवमिति** ॥ ५ ॥

१ क. ख. च. छ. °था चागो° । २ ज. झ. नापि । ३ ज. झ. °न्य इत्यर्थाद्व° ।

**दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥**

पुरुषो दृक्शक्तिर्बुद्धिर्दर्शनशक्तिरित्येतयोरेकस्वरूपापत्तिरिवास्मिता क्लेश उच्यते । भोक्तृभोग्यशक्त्योरत्यन्तविभक्तयोरत्यन्तासंकीर्णयोरविभागप्राप्ताविव सत्यां भोगः कल्पते । स्वरूपप्रतिलम्भे तु तयोः कैवल्यमेव भवति कुतो भोग इति । तथा चोक्तम्—'बुद्धितः परं पुरुषमाकारशीलविद्यादिभिर्विभक्तमपश्यन्कुर्यात्तत्राऽऽत्मबुद्धिं मोहेन' इति ॥ ६ ॥

**सुखानुशयी रागः ॥ ७ ॥**

---

अविद्यामुक्त्वा तस्याः कार्यमस्मितां रागादि[1]वि[2]षिष्ठामाह—**दृग्दर्शनशक्त्योरेकात्मतेवास्मिता** । दृक्च दर्शनं च ते एव शक्ती तयोरात्मानात्मनोरनात्मन्यात्मज्ञानलक्षणाऽविद्यापादिता यैकात्मतेव न तु परमार्थत एकात्मता साऽस्मिता । दृग्दर्शनयोरिति वक्तव्ये तयोर्भोक्तृभोग्ययोर्योग्यतालक्षणं संबन्धं दर्शयितुं शक्तिग्रहणम् । सूत्रं विवृणोति—**पुरुष इति** । नन्वनयोरभेदप्रतीतेरभेद एव कस्मान्न भवति कुतश्चैकत्वं क्लिश्नाति पुरुषमित्यत आह—**भोक्तृभोग्येति** । भोग्यशक्तिर्बुद्धिर्भोक्तृशक्तिः पुरुषस्तयोरत्यन्तविभक्तयोः कुतोऽत्यन्तविभक्तत्वमित्यत आह—**अत्यन्तासंकीर्णयोः** । अपरिणामित्वादिधर्मकः पुरुषः परिणामित्वादिधर्मिका बुद्धिरित्यसंकीर्णता । तदनेन प्रतीयमानोऽप्यभेदो न पारमार्थिक इत्युक्तम् । अविभागेति क्लेशत्वमुक्तम् । अन्वयं दर्शयित्वा व्यतिरेकमाह—**स्वरूपेति** । प्रतिलम्भो विवेकख्यातिः । परस्याप्येतत्संमतमित्याह—तदु( था चो)क्तं पञ्चशिखेन **बुद्धित इति** । आकारः स्वरूपं सदा विशुद्धिः, शीलमौदासीन्यं, विद्या चैतन्यं, बुद्धिरविशुद्धाऽनुदासीना जडा चेति तत्राऽऽत्मबुद्धिरविद्या । मोहः पूर्वाविद्याजनितः संस्कारस्तमो वाऽविद्यायास्तामसत्वादिति ॥ ६ ॥

विवेकदर्शने रागादीनां विनिवृत्तेरविद्यापादिताऽस्मिता रागादीनां निदानमित्यस्मितानन्तरं रागादील्लँक्षयति—**सुखानुशयी रागः** । अनभिज्ञस्य स्मृतेरभावात्सुखाभिज्ञस्येत्युक्तम् । स्मर्यमाणे सुखे रागः सुखानुस्मृतिपूर्वकः । अनुभूयमाने तु सुखे नानुस्मृतिमपेक्षते । तत्साधने तु स्मर्यमाणे दृश्यमाने वा सुखानुस्मृतिपूर्व एव रागः । दृश्यमानमपि हि सुखसाधनं तज्जातीयस्य सुखहेतुतां स्मृत्वा तज्जातीयतया वाऽस्य

---

१ क. °वादिष्ठामा° । २ ज. °र्षिणीमा° ।

सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधने वा यो गर्ध-स्तृष्णा लोभः स राग इति ॥ ७ ॥

**दुःखानुशयी द्वेषः ॥ ८ ॥**

दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वा यः प्रतिघो मन्युर्जिघांसा क्रोधः स द्वेषः ॥ ८ ॥

**स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः ॥९॥**

सर्वस्य प्राणिन इयमात्माशीर्नित्या भवति मा न भूवं भूयासमिति । न चाननुभूतमरणधर्मकस्यैषा भवत्यात्माशीः । एतया च पूर्वजन्मानुभवः प्रतीयते । स चायमभिनिवेशः क्लेशः स्वरसवाही कृमेरपि जातमात्रस्य प्रत्यक्षानुमानागमैरसंभावितो मरणत्रास उच्छेददृष्ट्यात्मकः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति ।

---

सुखहेतुत्वमनुमायेच्छति । अनुशयिपदार्थमाह—य इति ॥ ७ ॥

दुःखानुशयी द्वेषः । दुःखाभिज्ञस्येति पूर्ववद्व्याख्येयम् । अनुशयिपदार्थमाह—यः प्रतिघ इति । प्रतिहन्तीति प्रतिघः । एतदेव पर्यायैर्विवृणोति—मन्युरिति ॥८॥

स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः । अभिनिवेशपदार्थं व्याचष्टे—**सर्वस्य प्राणिन इति** । इयमात्माशीरात्मनि प्रार्थना मा न भूवं माऽभावी भूवं भूयासं जीव्यासमिति । **न चाननुभूतमरणधर्मकस्य,** अननुभूतो मरणधर्मो येन जन्तुना न तस्यैषा भवत्यात्माशीरभिनिवेशो मरणभयम् । प्रसङ्गतो जन्मान्तरं प्रत्याचक्षाणं नास्तिकं निराकरोति—एतया चेति । प्रत्युदितस्य शरीरस्य म्रियमाणत्वात्पूर्वजन्मानुभवः प्रतीयते । निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियबुद्धिवेदनाभिरभिसंबन्धो जन्म तस्यानुभवः प्राप्तिः सा प्रतीयते । कथमित्यत आह—**स चायमभिनिवेशः** । अर्थोक्तावेवास्य क्लेशत्वमाह—**क्लेश इति** । अयमहितकर्मादिना जन्तून्क्लिश्नाति दुःखाकरोतीति क्लेशः । वक्तुमुपक्रान्तं परिसमापयति—**स्वरसवाहीति** । स्वभावेन वासनारूपेण वहनशीलो न पुनरागन्तुकः । कृमेरपि जातमात्रस्य दुःखबहुलस्य निकृष्टतमचैतन्यस्यानागन्तुकत्वे हेतुमाह—प्रत्यक्षानुमानागमैः प्रत्युदिते जन्मन्यसंभावितोऽसंपादितो **मरणत्रास उच्छेददृष्ट्यात्मकः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति** । अयमभिसंधिः—जातमात्र एव हि बालको मारकवस्तुदर्शनात्कम्पमानः

---

१ क. °ना नित्या भवति । मा । २ क. ज. °कस्यान° । ३ क. ज. °ना त° ।

यथा चायमत्यन्तमूढेषु दृश्यते क्लेशस्तथा विदुषोऽपि विज्ञातपूर्वापरान्तस्य रूढः । कस्मात् । समाना हि तयोः कुशलाकुशलयोर्मरणदुःखानुभवादियं वासनेति ॥ ९ ॥

ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥

ते पञ्च क्लेशा दग्धबीजकल्पा योगिनश्चरिताधिकारे चेतसि प्रलीने सह तेनैवास्तं गच्छन्ति ॥ १० ॥

स्थितानां तु बीजभावोपगतानाम्—

---

कम्पविशेषादनुमितमरणप्रत्यासत्तिस्ततो बिभ्यदुपलभ्यते । दुःखाद्दुःखहेतोश्च भयं दृष्टम् । न चास्मिञ्जन्मन्यनेन मरणमनुभूतमनुमितं श्रुतं वा, प्रागेवास्य दुःखत्वं तद्धेतुत्वं वाऽवगम्येत । तस्मात्तस्य तथाभूतस्य स्मृतिः परिशिष्यते । न चेयं संस्काराद्दृते । न चायं संस्कारोऽनुभवं विना । न चास्मिञ्जन्मन्यनुभव इति प्राग्भवीयः परिशिष्यत इत्यासीत्पूर्वजन्मसंबन्ध इति ।

तथापदं यथापदमाकाङ्क्षतीत्यर्थप्राप्ते यथापदे सति यादृशो वाक्यार्थो भवति तादृशं दर्शयति—यथा चायमिति । अत्यन्तमूढेषु मन्दतमचैतन्येषु । विद्वांसं दर्शयति—विज्ञातपूर्वापरान्तस्य । अन्तः कोटिः । पुरुषस्य हि पूर्वा कोटिः संसार उत्तरा च कैवल्यं सैव विज्ञाता श्रुतानुमानाभ्यां येन स तथोक्तः । सोऽयं मरणत्रास आ कृमेरा च विदुषो रूढः प्रसिद्ध इति । नन्वविदुषो भवतु मरणत्रासो विदुषस्तु न संभवति विद्ययोन्मूलितत्वात् । अनुन्मूलने वा स्यादत्यन्तसत्त्वमित्याशयवान्पृच्छति—कस्मादिति । उत्तरमाह—समाना हीति । न संप्रज्ञातवान्विद्वानपि तु श्रुतानुमितविवेक इति भावः ॥ ९ ॥

तदेवं क्लेशा लक्षितास्तेषां च हेयानां प्रसुप्ततनुविच्छिन्नोदाररूपतया चतस्रोऽवस्था दर्शिताः । कस्मात्पुनः पञ्चमी क्लेशावस्था दग्धबीजभावतया सूक्ष्मा न सूत्रकारेण कथितेत्यत आह—ते प्रतिप्रसवहेयाः सूक्ष्माः । यत्किल पुरुषप्रयत्नगोचरस्तदुपदिश्यते । न च सूक्ष्मावस्थाहानं प्रयत्नगोचरः किंतु प्रतिप्रसवेन कार्यस्य चित्तस्यास्मितालक्षणकारणभावापत्त्या हातव्येति । व्याचष्टे—त इति । सुगमम् ॥ १० ॥

अथ क्रियायोगतनूकृतानां क्लेशानां किंविषयात्पुरुषप्रयत्नाद्धानमित्यत आह—स्थितानां तु बीजभावोपगतानामिति । वन्ध्येभ्यो व्यवच्छिनत्ति । सूत्रं पठति—

---

१ झ. वा मरणत्रासस्य स्या° । २ झ. प्रसवविरुद्धः प्रतिप्रसवः प्रलय इत्यर्थः । प्रति° ।

**ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥**

क्लेशानां या वृत्तयः स्थूलास्ताः क्रियायोगेन(ण) तनूकृताः सत्यः प्रसंख्यानेन ध्यानेन हातव्या यावत्सूक्ष्मीकृता यावद्दग्धबीजकल्पा इति । यथा वस्त्राणां स्थूलो मलः पूर्वं निर्धूयते पश्चात्सूक्ष्मो यत्नेनोपायेन चापनीयते तथा स्वल्पप्रतिपक्षाः स्थूला वृत्तयः क्लेशानां, सूक्ष्मास्तु महाप्रतिपक्षा इति ॥ ११ ॥

**क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥**

तत्र पुण्यापुण्यकर्माशयः कामलोभमोहक्रोधभवः । स

---

**ध्यानहेयास्तद्वृत्तयः** । व्याचष्टे—**क्लेशानामिति** । क्रियायोगतनूकृता अपि हि प्रतिप्रसवहेतुभावेन कार्यतः स्वरूपतश्च शक्या उच्छेत्तुमिति स्थूला उक्ताः । पुरुषप्रयत्नस्य प्रसंख्यानगोचरस्यावधिमाह—**यावदिति** । सूक्ष्मीकृता इति विवृणोति—**दग्धेति** । अत्रैव दृष्टान्तमाह—**यथा वस्त्राणामिति** । यत्नेन क्षालनादिनोपायेन क्षारसंयोगादिना । स्थूलसूक्ष्ममात्रतया दृष्टान्तदार्ष्टान्तिकयोः साम्यं न पुनः प्रयत्नापनेयतया प्रतिप्रसवहेयेषु तदसंभवात् । स्वल्पः प्रतिपक्ष उच्छेदहेतुर्यासां तास्तथोक्ताः । महान्प्रतिपक्ष उच्छेदहेतुर्यासां तास्तथोक्ताः । प्रतिप्रसवस्य चाधस्तात्प्रसंख्यानमित्यवरतया स्वल्पत्वमुक्तम् ॥ ११ ॥

स्यादेतत् । जात्यायुर्भोगहेतवः पुरुषं क्लिश्नन्तः क्लेशाः कर्माशयश्च तथा, न त्वविद्यादयस्तत्कथमविद्यादयः क्लेशा इत्यत आह—**क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः** । क्लेशा मूलं यस्योत्पादे च कार्यकरणे च स तथोक्तः । एतदुक्तं भवति—अविद्यादिमूलो हि कर्माशयो जात्यायुर्भोगहेतुरित्यविद्यादयोऽपि तद्धेतवोऽतः क्लेशा इति । व्याचष्टे—**तत्रेति** । आशेरते सांसारिकाः पुरुषा अस्मिन्नित्याशयः । कर्मणामाशयो धर्माधर्मौ । कामात्काम्यकर्मप्रवृत्तौ स्वर्गादिहेतुर्धर्मो भवति । एवं लोभात्परद्रव्यापहारादावधर्मः । मोहादधर्मे हिंसादौ धर्मबुद्धेः प्रवर्तमानस्याधर्म एव । न त्वस्ति मोहजो धर्मः । अस्ति क्रोधजो धर्मः । तद्यथा—ध्रुवस्य जनकापमानजन्मनः क्रोधात्तज्जिगीषया चितेन कर्माशयेन पुण्येनान्तरिक्षलोकवासिनामुपरिस्थानम् । अधर्मस्तु

---

१ ख. ग. झ. °न हा° । २ क. ख. छ. °न वाऽप° । ३ ख. ज. प्रस° । ४ ज. झ. °रत इत्या° । ५ ख. झ. °शयौ ध° ।

दृष्टजन्मवेदनीयश्चादृष्टजन्मवेदनीयश्च । तीव्रसंवेगेन मन्त्रतपःसमाधिभिर्निर्वर्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्माशय इति । तथा तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृतः पुनः पुनरपकारः स चापि पापकर्माशयः सद्य एव परिपच्यते । यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः । तथा नहुषोऽपि देवानामिन्द्रः स्वकं परिणामं हित्वा तिर्यक्त्वेन परिणत इति । तत्र नारकाणां नास्ति दृष्टजन्मवेदनीयः कर्माशयः । क्षीणक्लेशानामपि नास्त्यदृष्टजन्मवेदनीयः कर्माशय इति ॥ १२ ॥

सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥

सत्सु क्लेशेषु कर्माशयो विपाकारम्भी भवति नोच्छिन्न-

---

क्रोधजो ब्रह्मवधादिजन्मा प्रसिद्ध एव भूतानाम् । तस्य द्वैविध्यमाह—स दृष्टजन्मेति । दृष्टजन्मवेदनीयमाह—तीव्रसंवेगेनेति । यथासंख्यं दृष्टान्तावाह—यथा नन्दीश्वर इति । तत्र नारकाणामिति । येन कर्माशयेन कुम्भीपाकादयो नरकभेदाः प्राप्यन्ते तत्कारिणो नारकास्तेषां नास्ति दृष्टजन्मवेदनीयः कर्माशयः । न हि मनुष्यशरीरेण तत्परिणामभेदेन वा सा तादृशी वत्सरसहस्रादिनिरन्तरोपभोग्या वेदना संभवतीति । शेषं सुगमम् ॥ १२ ॥

स्यादेतत् । अविद्यामूलत्वे कर्माशयस्य विद्योत्पादे सत्यविद्याविनाशान्मा नाम कर्माशयान्तरं चैषीत्[१] । प्राचां[२] तु कर्माशयानामनादिभवपरम्परासंचितानामसंख्यातानामनियतविपाककालानां भोगेन क्षपयितुमशक्यत्वादशक्योच्छेदः संसारः स्यादित्यत आह—सति मूले तद्विपाको जात्यायुर्भोगाः । एतदुक्तं भवति—सुखदुःखफलो हि कर्माशयस्तादर्थ्येन तन्नान्तरीयकतया जन्मायुषी अपि प्रसूते । सुखदुःखे च रागद्वेषानुषक्ते तदविनिर्भागवर्तिनी तदभावे न भवतः[३] । नचास्ति संभवो न च तत्र यस्तुष्यति वोद्विजते वा तच्च तस्य सुखं वा दुःखं वेति । तदियमात्मभूमिः क्लेशसलिलावसिक्ता कर्मफलप्रसवक्षेत्रमित्यस्ति क्लेशानां फलोपजननेऽपि कर्माशयसहकारितेति क्लेशसमुच्छेदे सहकारिवैकल्यात्सन्नप्यनन्तोऽप्यनियतविपाककालोऽपि प्रसंख्यानदग्धबीजभावो न फलाय कल्पत इति । उक्तमर्थं भाष्यमेव द्योतयति—सत्स्विति[४] ।

---

१ क. वासना ता° । २ ज. झ. प्राक्तनक° । ३ क. झ. नच । ४ ख. झ. °सह° ।

क्लेशमूलः। यथा तुषावनद्धाः शालितण्डुला अदग्धबीजभावाः प्ररोहसमर्था भवन्ति नापनीततुषा दग्धबीजभावा वा, तथा क्लेशावनद्धः कर्माशयो विपाकप्ररोही भवति नापनीतक्लेशो न प्रसंख्यानदग्धक्लेशबीजभावो वेति। स च विपाकस्त्रिविधो जातिरायुर्भोग इति।

तत्रेदं विचार्यते—किमेकं कर्मैकस्य जन्मनः कारणमथैकं कर्मानेकं जन्माऽऽक्षिपतीति। द्वितीया विचारणा—किमनेकं कर्मानेकं जन्म निर्वर्तयत्यथानेकं कर्मैकं जन्म निर्वर्तयतीति। न तावदेकं कर्मैकस्य जन्मनः कारणम्। कस्मात्, अनादिकालप्रचितस्यासंख्येयस्यावशिष्टस्य कर्मणः सांप्रतिकस्य च फलक्रमानियमादनाश्वासो लोकस्य प्रसक्तः, स चानिष्ट इति। न चैकं कर्मानेकस्य जन्मनः कारणम्। कस्मात्, अनेकेषु कर्मस्वेकैकमेव कर्मानेकस्य जन्मनः कारणमित्यवशिष्टस्य विपाककालाभावः प्रसक्तः। स चाप्यनिष्ट इति। न चानेकं कर्माने-

---

अत्रैव दृष्टान्तमाह—यथा तुषेति। सतुषा अपि दग्धबीजभावाः स्वेदादिभिः। दार्ष्टान्तिके योजयति—तथेति। ननु न क्लेशाः शक्या अपनेतुम्। नहि सतामपनय इत्यत आह—न प्रसंख्यानदग्धक्लेशबीजभाव इति। विपाकस्य त्रैविध्यमाह—स चेति। विपच्यते साध्यते कर्मभिरिति विपाकः।

कर्मैकत्वं ध्रुवं कृत्वा जन्मैकत्वानेकत्वगोचरा प्रथमा विचारणा। द्वितीया तु कर्मानेकत्वं ध्रुवं कृत्वा जन्मैकत्वानेकत्वगोचरा। तदेवं चत्वारो विकल्पाः। तत्र प्रथमं विकल्पमपाकरोति—न तावदेकं कर्मैकस्य जन्मनः कारणम्। पृच्छति—कस्मादिति। उत्तरम्—अनादिकालैकैकजन्मप्रचितस्यात एवासंख्येयस्यैकैकजन्मक्षपितादेकैकस्मात्कर्मणोऽवशिष्टस्य कर्मणः सांप्रतिकस्य च फलक्रमानियमादनाश्वासो लोकस्य प्रसक्तः स चानिष्ट इति। एतदुक्तं भवति—कर्मक्षयस्य विरलत्वात्तदुत्पत्तिबाहुल्याच्चान्योन्यसंपीडिताः कर्माशया निरन्तरोत्पत्तयो निरुच्छ्वासाः स्वविपाकं प्रतीति न फलक्रमः शक्योऽवधारयितुं प्रेक्षावतेत्यनाश्वासः पुण्यानुष्ठानं प्रति प्रसक्त इति। द्वितीयं विकल्पं निराकरोति—न चैकं कर्मानेकस्य जन्मनः कारणम्। पृच्छति—कस्मादिति। उत्तरम्—अनेकस्मिञ्जन्मन्याहितमेकैकमेव कर्मानेकस्य जन्मलक्षणस्य विपाकस्य निमित्तमित्यवशिष्टस्य विपाककालाभावः प्रसक्तः। स चाप्यनिष्टः। कर्मवैफल्येन तदननुष्ठानप्रसङ्गात्। यदैकजन्मसमुच्छेद्ये कर्मण्येकस्मिन्फलक्रमानियमादनाश्वासस्तदा कैव कथा बहुजन्मसमुच्छेद्ये कर्मण्येकस्मिंस्तत्र ह्यवसराभावाद्विपाककालाभाव एव सांप्रतिकस्येति

कस्य जन्मनः कारणम् । कस्मात्, तदनेकं जन्म युगपन्न संभवतीति क्रमेणैव वाच्यम् । तथा च पूर्वदोषानुषङ्गः ।

तस्माज्जन्मप्रायणान्तरे कृतः पुण्यापुण्यकर्माशयप्रचयो विचित्रः प्रधानोपसर्जनभावेनावस्थितः प्रायणाभिव्यक्त एकप्रघट्टकेन मरणं प्रसाध्य संमूर्छित एकमेव जन्म करोति । तच्च जन्म तेनैव कर्मणा लब्धायुष्कं भवति । तस्मिन्नायुषि तेनैव कर्मणा भोगः संपद्यत इति । असौ कर्माशयो जन्मायुर्भोगहेतुत्वात्त्रिविपाकोऽभिधीयत इति । अत एकभविकः कर्माशय उक्त इति ।

दृष्टजन्मवेदनीयस्त्वेकविपाकारम्भी भोगहेतुत्वाद्द्विविपाका·

---

भावः । तृतीयं विकल्पं निराकरोति–न चानेकं कर्मानेकस्य जन्मनः कारणम् । तत्र हेतुमाह—तदनेकं जन्म युगपन्न संभवत्ययोगिन इति क्रमेण वाच्यम् । यदि हि कर्मसहस्रं युगपज्जन्मसहस्रं प्रसुवीत तत एव कर्मसहस्रप्रक्षयादवशिष्टस्य विपाककालः फलक्रमनियमश्च स्याताम् । न ह्यस्ति जन्मनां यौगपद्यम् । एवमेव प्रथमपक्षोक्तं दूषणमित्यर्थः ।

तदेवं पक्षत्रये निराकृते पारिशेष्यादनेकं कर्मैकस्य जन्मनः कारणमिति पक्षो व्यवतिष्ठत इत्याह–तस्माज्जन्मेति । जन्म च प्रायणं च जन्मप्रायणे । तयोरन्तरं मध्यं तस्मिन्विचित्रसुखदुःखफलोपहारेण विचित्रः, यदत्यन्तमुद्भूतमनन्तरमेव फलं दास्यति तत्प्रधानं, यत्तु किंचिद्विलम्बेन तदुपसर्जनं, प्रायणं मरणं तेनाभिव्यक्तः स्वकार्यारम्भणाभिमुखमुपनीत एकप्रघट्टकेन युगपत्संमूर्छितो जन्मादिलक्षणे कार्ये कर्तव्य एकलोलीभावमापन्न एकमेव जन्म करोति नानेकम् । तच्च जन्म मनुष्यादिभावस्तेनैव कर्मणा लब्धायुष्कं कालभेदान्नियतजीवितं भवति । तस्मिन्नायुषि तेनैव कर्मणा भोगः सुखदुःखसाक्षात्कारः स्वसंबन्धितया संपद्यत इति । तस्मादसौ कर्माशयो जात्यायुर्भोगहेतुत्वात्त्रिविपाकोऽभिधीयते । औत्सर्गिकमुपसंहरति—अत एकभविकः कर्माशय उक्त इति । एको भव एकभवः । "पूर्वकाल०" [ पा० सू० २ । १ । ४९ ] इत्यादिना समासः । एकभवोऽस्यास्तीति मत्वर्थीयष्ठन् । क्वचित्पाठ ऐकभविक इति । तत्रैकभवशब्दाद्भवार्थे ठक्प्रत्ययः । एकजन्मावच्छिन्नस्य भवनमित्यर्थः ।

तदेवमौत्सर्गिकस्यैकभविकस्य त्रिविपाकत्वमुक्त्वा दृष्टजन्मवेदनीयस्यैहिकस्य कर्मणस्त्रिविपाकत्वं व्यवच्छिनत्ति—दृष्टेति । नन्दीश्वरस्य खल्वष्टवर्षावच्छिन्नायुषो

---

१ ग, घ. ङ. क्रमेण वा° । २ ग, घ. ङ. °न मिलित्वा म° ।

रम्भी वाऽऽयुर्भोगहेतु*त्वान्नन्दीश्वरवन्नहुषवद्वेति । क्लेशकर्मविपाकानुभवनिर्वर्तिताभिस्तु वासनाभिरनादिकालसंमूर्छितमिदं चित्तं[1] विचित्रीकृतमिव सर्वतो मत्स्यजालं ग्रन्थिभिरिवाऽऽततमित्येता अनेकभवपूर्विका वासनाः । यस्त्वयं कर्माशय एष एवैकभविक उक्त इति । ये संस्काराः स्मृतिहेतवस्ता वासनास्ताश्चानादिकालीना इति ।

यस्त्वसावेकभविकः कर्माशयः स नियतविपाकश्चानियतविपाकश्च । तत्र दृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायं नियमो न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य । कस्मात् । यो ह्यदृष्टजन्मवेदनीयोऽनियतविपाकस्तस्य त्रयी गतिः—कृतस्याविपक्वस्य[2] नाशः[3], प्रधानकर्मण्यावापगमनं वा, नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानमिति ।

तत्र कृतस्याविपक्वस्य नाशो यथा—शुक्लकर्मोदयादिहैव

---

मनुष्यजन्मनस्तीव्रसंवेगाधिमात्रोपायजन्मा पुण्यभेद आयुर्भोगहेतुत्वाद्द्वि[वि]पाकः । नहुषस्य तु पार्ष्णिप्रहारविरोधिनाऽगस्त्यस्येन्द्रपदप्राप्तिहेतुनैव कर्मणाऽऽयुषो विहितत्वादपुण्यभेदो भोगमात्रहेतुः । ननु यथैकभविकः कर्माशयस्तथा किं क्लेशवासनाः भोगानुकूलाश्च कर्मविपाकानुभववासनास्तथा च मनुष्यास्तिर्यग्योनिमापन्नो न तज्जातीयोचितं भुञ्जीतेत्यत आह—क्लेशेति । संमूर्छितमेकलोलीभावमापन्नम् । धर्माधर्माभ्यां व्यवच्छेत्तुं वासनायाः स्वरूपमाह—ये संस्कारा इति ।

औत्सर्गिकमेकभविकत्वं क्वचिदपवदितुं भूमिकामारचयति—यस्त्वसाविति । तुशब्देन वासनातो व्यवच्छिनत्ति । दृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायमेकभविकत्वनियमो न त्वदृष्टजन्मवेदनीयस्य । किंभूतस्यानियतविपाकस्येति । हेतुं पृच्छति—कस्मादिति । हेतुमाह—यो हीति । एकां तावद्गतिमाह—कृतस्येति । द्वितीयामाह—प्रधानेति । तृतीयामाह—नियतेति ।

तत्र प्रथमां विभजते—तत्र कृतस्येति । संन्यासिकर्मभ्योऽशुक्लाकृष्णेभ्योऽन्यानि त्रीण्येव कर्माणि कृष्णकृष्णशुक्लशुक्लानि । तदिह तपःस्वाध्यायादिसाध्यः शुक्लः कर्माशय उदित एवादत्तफलस्य कृष्णस्य नाशकोऽविशेषाच्च शबलस्यापि कृष्णभागयो-

---

* क. ख. छ. पुस्तकेषु स्वात्त्रिविपाकारम्भी वा जन्मभोगायुर्हेतुत्वान्नहुषेति प्रामादिकः पाठः ।

---

१ ग. घ. ङ. °त्तं चि° । २ क. ख. घ. ङ. °विपाकस्य । ३ क. ख. च. विनाशः ।

**नाशः कृष्णस्य । यत्रेदमुक्तम्—द्वे द्वे ह वै कर्मणी वेदितव्ये पापकस्यैको राशिः पुण्यकृतोऽपहन्ति तदिच्छस्व कर्माणि सुकृतानि कर्तुमिहैव ते कर्म कवयो वेदयन्ते " ।**

**प्रधानकर्मण्यावापगमनम् । यत्रेदमुक्तम्—" स्यात्स्वल्पः संकरः सपरिहारः सप्रत्यवमर्षः कुशलस्य नापकर्षायालम् ।**

---

गादिति मन्तव्यम् । अत्रैव भगवानाम्नायमुदाहरति–यत्रेदमिति । द्वे द्वे ह वै कर्मणी कृष्णकृष्णशुक्ले अपहन्तीति संबन्धः । वीप्सया भूयिष्ठता सूचिता । कस्येत्यत आह–**पापकस्य** पुंसः । कोऽसावपहन्तीत्यत आह—**एको राशिः पुण्यकृतः** । समूहस्य समूहिसाध्यत्वात् । तदनेन शुक्लः कर्माशयस्तृतीय उक्तः । एतदुक्तं भवति–ईदृशो नामायं परपीडादिरहितसाधनसाध्यः शुक्लः कर्माशयो यदेकोऽपि सन्कृष्णान्कृष्णशुक्लांश्चात्यन्तविरोधिनः कर्माशयान्भूयसोऽप्यपहन्ति । तत्तस्मादिच्छस्वेति च्छान्दसत्वादात्मनेपदम् । शेषं सुगमम् । अत्र च शुक्लकर्मोदयस्यैव स कोऽपि महिमा यत इतरेषामभावो न तु स्वाध्यायादिजन्मनो दुःखात् । नहि दुःखमात्रविरोध्ययधर्मोऽपि तु स्वकार्यदुःखविरोधी । न च स्वाध्यायादिजन्यं दुःखं तस्य कार्यम् । तत्कार्यत्वे स्वाध्यायादिविधानानर्थक्यात्तद्बलादेव तदुत्पत्तेः । अनुत्पत्तौ वा कुम्भीपाकाद्यपि विधीयेत । अविधाने तु तदनुत्पत्तेरिति सर्वं चतुरस्रम् ।

द्वितीयां गतिं विभजते—**प्रधाने कर्मणि** ज्योतिष्टोमादिके तदङ्गस्य पशुहिंसादेरावापगमनम् । द्वे खलु हिंसादेः कार्ये–प्रधानाङ्गत्वेन विधानात्तदुपकारः, " न हिंस्यात्सर्वा भूतानि " [मा०शा०२७८।५] इति हिंसायाः प्रतिषिद्धत्वादनर्थश्च । तत्र प्रधानाङ्गत्वेनानुष्ठानादप्रधानतैवेत्यतो न द्रागित्येव प्रधाननिरपेक्षा सती स्वफलमनर्थं प्रसोतुमर्हति, किंत्वारब्धविपाके प्रधाने साहायकमाचरन्ती व्यवतिष्ठते । प्रधानसाहायकमाचरन्त्याश्च स्वकार्ये बीजमात्रतयाऽवस्थानं प्रधाने कर्मण्यावापगमनम् । यत्रेदमुक्तं पञ्चशिखेन—**स्वल्पः संकरो** ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुनाऽपूर्वेण **सपरिहारः** शक्यो हि कियता प्रायश्चित्तेन परिहर्तुम् । अथ प्रमादतः प्रायश्चित्तमपि नाऽऽचरितं प्रधानकर्मविपाकसमये च विपच्येत तथाऽपि यावन्तमसावनर्थं प्रसूते तावान्**सप्रत्यवमर्षो** मृष्यन्ते हि पुण्यसंभारोपनीतसुखसुधामहाह्रदावगाहिनः **कुशलाः** पापमात्रोपपादितां दुःखवह्निकणिकाम् ।

---

१ क. ज. झ. तत्रैव ।

कस्मात्, कुशलं हि मे बह्वन्यदस्ति यत्रायमावापं गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यति " इति ।

नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानम् । कथमिति, अदृष्टजन्मवेदनीयस्यैव नियतविपाकस्य कर्मणः समानं मरणमभिव्यक्तिकारणमुक्तम्, न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य । यत्त्वदृष्टजन्मवेदनीयं कर्मानियतविपाकं तन्नश्येदावापं वा गच्छेदभिभूतं वा चिरमप्युपासीत, यावत्समानं कर्माभिव्यञ्जकं निमित्तमस्य न विपाकाभिमुखं करोतीति । तद्विपाकस्यैव देशकालनिमित्तानवधारणादियं कर्मगतिश्चित्रा दुर्विज्ञाना चेति । न चोत्सर्गस्यापवादान्निवृत्तिरित्येकभविकः कर्माशयोऽनुज्ञायत इति ॥ १३ ॥

**ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥**

ते जन्मायुर्भोगाः पुण्यहेतुकाः सुखफला अपुण्यहेतुका

---

अतः कुशलस्य सुमहतः पुण्यस्य नापकर्षाय प्रक्षयाय पर्याप्तः । पृच्छति—कस्मात् । पुण्यवत उत्तरम्—कुशलं हि मे बह्वन्यदस्ति । प्रधानकर्म[2] परिकरतया व्यवस्थितं दीक्षणीयादिदक्षिणान्तम् । यत्रायं संकरः स्वल्पः स्वर्गेऽप्यस्य फले संकीर्णपुण्यलब्धजन्मनः स्वर्गात्सर्वथा दुःखेनापरामृष्टादपकर्षमल्पमल्पदुःखसंभेदं करिष्यतीति ।

तृतीयां गतिं विभजते—नियतेति । बलीयस्त्वेनेह प्राधान्यमभिमतं न त्वाङ्गितया । बलीयस्त्वं च नियतविपाकत्वेनान्यदाऽनवकाशत्वात् । अनियतविपाकस्य तु दुर्बलत्वमन्यदा सावकाशत्वात् । चिरमवस्थानं बीजभावमात्रेण न पुनः प्रधानोपकारितया । तस्य स्वतन्त्रत्वात् । ननु प्रायणेनैकदैव कर्माशयोऽभिव्यज्यत इत्युक्तमिदानीं च पुनः चिरावस्थानमुच्यते तत्कथं परं पूर्वेण न विरुध्यत इत्याशयवान्पृच्छति—कथमिति । उत्तरम्—अदृष्टेति । जात्यभिप्रायमेकवचनम् । तदितरस्य गतिमुक्तामवधारयति—यत्त्वदृष्टेति । शेषं सुगमम् ॥ १३ ॥

उक्तं क्लेशमूलत्वं कर्मणाम् । कर्ममूलत्वं च विपाकानाम् । अथ विपाकाः कस्य मूलं येनामी त्यक्तव्या इत्यत आह—ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् । व्याचष्टे—ते जन्मायुर्भोगा इति । यद्यपि जन्मायुषोरेव ह्लादपरितापपूर्वभावितया

---

१ क. ख. °स्य बा य° । २ क. ज. झ. °मै विपाकत° ।

दुःखफला इति । यथा चेदं दुःखं प्रतिकूलात्मकमेवं विषयसुखकालेऽपि दुःखमस्त्येव प्रतिकूलात्मकं योगिनः ॥ १४ ॥

कथं, तदुपपाद्यते[1]—

**परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥ १५ ॥**

सर्वस्यायं रागानुविद्धश्चेतनाचेतनसाधनाधीनः सुखानुभव इति तत्रास्ति रागजः कर्माशयः । तथा च द्वेष्टि दुःखसाधनानि मुह्यति चेति द्वेषमोहकृतोऽप्यस्ति कर्माशयः । तथा चोक्तम्—

---

तत्फलत्वं न तु भोगस्य ह्लादपरितापोदयानन्तरभाविनस्तदनुभवात्मनस्तथाऽप्यनुभाव्यतया भोग्यतया भोगकर्मतामात्रेण भोगफलत्वमिति मन्तव्यम् । नन्वपुण्यहेतुका जात्यायुर्भोगाः परितापफला भवन्तु हेयाः प्रतिकूलवेदनीयत्वात् । कस्मात्पुनः पुण्यहेतवस्त्यज्यन्ते सुखफला अनुकूलवेदनीयत्वात् । न चैषां प्रत्यात्मवेदनीयानुकूलता शक्या सहस्रेणाप्यनुमानागमैरपाकर्तुम् । न च ह्लादपरितापौ परस्पराविनाभूतौ यतो ह्लाद उपादीयमाने परितापेऽप्यवर्जनीयतयाऽऽपतेत् । तयोर्भिन्नहेतुकत्वाद्भिन्नरूपत्वाच्चेत्यत आह—यथा चेदमिति ॥ १४ ॥

यद्यपि न पृथग्जनैः प्रतिकूलात्मतया विषयसुखकाले संवेद्यते दुःखं तथाऽपि संवेद्यते योगिभिरिति प्रश्नपूर्वकं तदुपपादनाय सूत्रमवतारयति—**कथं तदुपप(पा)द्यत इति** । **परिणामेत्यादि सूत्रम्** । परिणामश्च तापश्च संस्कारश्चैतान्येव दुःखानि तैरिति । परिणामदुःखतया विषयसुखस्य दुःखतामाह—**सर्वस्यायमिति** । न खलु सुखं रागानुवेधमन्तरेण संभवति । न ह्यस्ति संभवो न तत्र तुष्यति तच्च तस्य सुखमिति । रागस्य च प्रवृत्तिहेतुत्वात्प्रवृत्तेश्च पुण्यापुण्योपचयहेतुत्वात्तत्रास्ति **रागजः कर्माशयो**ऽसतोऽनुपजननात् । तदा(था) च सुखं भुञ्जानस्तत्र सक्तोऽपि विच्छिन्नावस्थेन द्वेषेण **द्वेष्टि दुःखसाधनानि**, तानि परिहर्तुमशक्तो **मुह्यति चेति द्वेषमोहकृतोऽप्यस्ति कर्माशयः** । द्वेषवन्मोहस्यापि विपर्ययापरनाम्नः कर्माशयहेतुत्वमविरुद्धम् । ननु कथं रक्तो द्वेष्टि मुह्यति वा रागसमये द्वेषमोहयोरदर्शनादित्यत आह—**तथा चोक्तं** विच्छिन्नावस्थान्क्लेशानुपपादयद्भिरस्माभिः । तदनेन वाङ्मनसप्रवृत्तिजन्मनी पुण्यापुण्ये दर्शिते । रागादिजन्मनः कर्तव्यमिदमिति मानसस्य संकल्पस्य साभिलाषत्वेन वाचनिकत्वस्याप्यविशेषात् । यथाऽऽहुः—

---

१ क. ख. घ. च. छ. °पपद्य°। २ क. °त्वमुद्यमि°। ३ क. °दयन्सूत्र°। ४ ज. झ. °यकारित्वा° ।

" नानुपहत्य भूतान्युपभोगः संभवतीति हिंसाकृतोऽप्यस्ति शारीरः कर्माशयः " इति । विषयसुखं चाविद्येत्युक्तम् ।

या भोगेष्विन्द्रियाणां तृप्तेरुपशान्तिस्तत्सुखम् । या लौल्यादनुपशान्तिस्तद्दुःखम् । न चेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्तुं शक्यम् । कस्मात्, यतो भोगाभ्यासमनु विवर्धन्ते रागाः कौशलानि चेन्द्रियाणामिति । तस्मादनुपायः सुखस्य भोगाभ्यास इति । स खल्वयं वृश्चिकविषभीत इवाऽऽशीविषेण दष्टो यः सुखार्थी विषयानुवासितो महति दुःखपङ्के निमग्न इति । एषा परिणामदुःखता नाम प्रतिकूला सुखावस्थायामपि योगिनमेव क्लिश्नाति ।

---

'.साभिलाषश्च संकल्पो वाच्यार्थान्नातिरिच्यते ' इति ।

शारीरमपि कर्माशयं दर्शयति—नानुपहत्येति । अत एव धर्मशास्त्रकाराः " पञ्च सूना गृहस्थस्य " [ मनु० ३ । ६८ ] इत्याहुः । स्यादेतन्न प्रत्यात्मवेदनीयस्य विषयसुखस्य प्रत्याख्यानमुचितं योगिनामनुभवविरोधादित्यत आह—**विषयसुखं चाविद्येत्युक्तं** चतुर्विधविपर्यासलक्षणामविद्यां दर्शयद्भिरिति । नाऽऽपातमात्रमाद्रियन्ते वृद्धाः । अस्ति खल्वापाततो मधुविषसंपृक्तान्नोप[2]भोगेऽपि सुखानुभवः प्रत्यात्मवेदनीयः किंत्वायत्यामसुखम् । इयं च दर्शिता भगवतैव[3]—

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ [ भ०गी० १८।३८ ] इति ।

चोदयति—**या भोगेष्विति** । न वयं विषयह्लादं सुखमातिष्ठामहे किंतु तृप्य-(प्ति)तां पुंसाम् । तत्तद्विषयप्रार्थनापरिक्लिष्टचेतसां तृष्णैव महद्दुःखम् । न चेयमुपभोगमन्तरेण शाम्यति । न चास्याः प्रशमो रागाद्यनुविद्ध इति नास्य परिणामदुःखतेति भावः । तृप्तेस्तृष्णाक्षयाद्धेतोरिन्द्रियाणामुपशान्तिरप्रवर्तनं विषयेष्वित्यर्थः । एतदेव व्यतिरेकमुखेन(ण) स्पष्टयति—**या लौल्यादिति** । परिहरति—**न चेन्द्रियाणामिति** । हेतावनोः प्रयोगः । सत्यं तृष्णाक्षयः सुखमनवद्यं तस्य तु न भोगाभ्यासो हेतुरपि तु तृष्णाया एव तद्विरोधिन्याः । यथाऽऽहुः—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ [ भा०आदि०८९।१२ ] इति ।

शेषमतिरोहितम् ।

---

१ घ. ङ. च. मग्न । २ ख. ज. °पयोगे° । ३ ख. ज. °तैवेति । ४ ज. सुखं नाऽऽति° ।

अथ का तापदुःखता, सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्तापानुभव इति तत्रास्ति द्वेषजः कर्माशयः। सुखसाधनानि च प्रार्थयमानः कायेन वाचा मनसा च परिस्पन्दते ततः परमनुगृह्णात्युपहन्ति चेति परानुग्रहपीडाभ्यां धर्माधर्मावुपचिनोति। स कर्माशयो लोभान्मोहाच्च भवतीत्येषा तापदुःखतोच्यते। का पुनः संस्कारदुःखता, सुखानुभवात्सुखसंस्काराशयो[१] दुःखानुभवादपि दुःखसंस्काराशय इति। एवं कर्मभ्यो विपाकेऽनुभूयमाने सुखे दुःखे वा पुनः कर्माशयप्रचय इति।

एवमिदमनादि दुःखस्रोतो विप्रसृतं योगिनमेव प्रतिकूलात्मकत्वादुद्वेजयति। कस्मात्, अक्षिपात्रकल्पो हि विद्वानिति। यथोर्णातन्तुरक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति[३] न चान्येषु गात्रावयवेषु, एवमेतानि दुःखान्यक्षिपात्रकल्पं योगिनमेव क्लिश्नन्ति नेतरं प्रतिपत्तारम्। इतरं तु स्वकर्मोपहृतं दुःखमुपात्तमुपात्तं त्यजन्तं त्यक्तं त्यक्तमुपाददानमनादिवासनाविचित्रया चित्तवृत्त्या समन्ततोऽनुविद्धमिवाविद्यया हातव्य एवाहंकारममकारानुपातिनं जातं जातं बाह्याध्यात्मिकोभयनिमित्तास्त्रिपर्वाणस्तापा अनुप्लवन्ते। तदेवमनादिना[४] दुःखस्रोतसा व्युह्यमानमात्मानं भूतग्रामं च दृष्ट्वा योगी सर्वदुःखक्षयकारणं सम्यग्दर्शनं शरणं प्रपद्यत इति।

---

तापदुःखतां पृच्छति—अथ केति। उत्तरं—सर्वस्येति। सर्वजनप्रसिद्धत्वेन तत्स्वरूपप्रपञ्चमकृत्वा तापदुःखताऽपि परिणामदुःखतासमतया प्रपञ्चितेति। संस्कारदुःखतां पृच्छति—केति। उत्तरं—सुखेति। सुखानुभवो हि संस्कारमाधत्ते। स च सुखस्मरणं तच्च रागं स च मनःकायवचनचेष्टां सा च पुण्यापुण्ये ततो विपाकानुभवस्ततो वासनेत्येवमनादितेति। अत्र च सुखदुःखसंकारातिशयात्तत्स्मरणं तस्माच्च रागद्वेषौ ताभ्यां कर्माणि कर्मभ्यो विपाक इति योजना।

तदेवं दुःखस्रोतः प्रसृतं योगिनमेव क्लिश्नाति नेतरं पृथग्जनमित्याह—एवमिदमनादीति। इतरं तु त्रिपर्वाणस्तापा अनुप्लवन्त इति संबन्धः। आधिभौतिकाधिदैविकयोस्तापयोर्बाह्यत्वेनैकत्वं विवक्षितम्। चित्ते वृत्तिरस्या इत्यविद्या चित्तवृत्तिस्तया हातव्य एव बुद्धीन्द्रियशरीरादौ दारापत्यादौ चाहंकारममकारानुपातिनमिति। तदत्र न सम्यग्दर्शनादन्यत्परित्राणमस्तीत्याह—तदेवमिति।

---

१ घ. ङ. °रातिश°। २ घ. ङ. च. °रातिश°। ३ ग. घ. ङ. च. °ति नान्ये°। ४ ग. घ. ङ. °दिदुः°।

गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः । प्रख्याप्रवृत्ति-स्थितिरूपा बुद्धिगुणाः परस्परानुग्रहतन्त्री भूत्वा शान्तं घोरं मूढं वा प्रत्ययं त्रिगुणमेवाऽऽरभन्ते । चलं च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम् । रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते, सामान्यानि त्वतिशयैः सह प्रवर्तन्ते । एवमेते गुणा इतरेतराश्रयेणोपार्जितसुखदुःखमोहप्रत्यया[1]ः सर्वे सर्वरूपा भवन्तीति[2], गुणप्रधानभावकृतस्त्वेषां विशेष इति । तस्माद्दुःखमेव सर्वं विवेकिन इति ।

तदस्य महतो दुःखसमुदायस्य प्रभवबीजमविद्या । तस्याश्च

---

तदेवमौपाधिकं विषयसुखस्य परिणामतः संस्कारतस्तापसंयोगाच्च दुःखत्वमभिधाय स्वाभाविकमादर्शयति—गुणवृत्तिविरोधाच्चेति । व्याचष्टे—प्रख्याप्रवृत्ति-स्थितिरूपा । बुद्धिरूपेण परिणता गुणाः सत्त्वरजस्तमांसि परस्परानुग्रहतन्त्राः शान्तं सुखात्मकं घोरं दुःखात्मकं मूढं विषादात्मकमेव प्रत्ययं सुखोपभोगरूपमपि त्रिगुणमारभन्ते । न च सोऽपि तादृशप्रत्ययरूपोऽस्य परिणामः स्थिर इत्याह—चलं च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम् । नन्वेकः प्रत्ययः कथं परस्परविरुद्धशान्तघोरमूढत्वान्येकदा प्रतिपद्यत इत्यत आह—रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते । रूपाणि अष्टौ भावा धर्मादयो वृत्तयः सुखाद्यास्तदिह धर्मेण विपच्यमानेनाधर्मस्तादृशो विरुध्यते । एवं ज्ञानवैराग्यैश्वर्यैः सुखादिभिश्च तादृशान्येव तद्विपरीतानि विरुध्यन्ते । सामान्यानि त्वसमुदाचरद्रूपाण्यतिशयैः समुदाचरद्भिः सहाविरोधात्प्रवर्तन्त इति । ननु गृह्णीम एतत्तथाऽपि विषयसुखस्य कुतः स्वाभाविकी दुःखतेत्यत आह—एवमेत इति । उपादानाभेदादुपादानात्मकत्वाच्चोपादेयस्याप्यभेद इत्यर्थः । तत्किमिदानीमात्यन्तिकमेव तादात्म्यं तथा च बुद्धिव्यपदेशभेदौ न कल्पेते इत्यत आह—गुणप्रधानेति । सामान्यात्मना गुणभावोऽतिशयात्मना च प्राधान्यम् । तस्मादुपाधितः स्वभावतश्च दुःखमेव सर्वं विवेकिन इति ।

दुःखं च हेयं प्रेक्षावता[3] । न च तन्निदानहानमन्तरेण तद्धेयं भवितुमर्हति । न चापरिज्ञातं निदानं शक्यं हातुमिति मूलनिदानमस्य दर्शयति—तदस्येति । दुःखसमुदायस्य प्रभव उत्पत्तिर्यतस्तद्बीजमित्यर्थः । तदुच्छेदहेतुं दर्शयति—तस्याश्चेति । इदानीमस्य शास्त्रस्य सर्वानुग्रहार्थं प्रवृत्तस्य तद्विधेनैव शास्त्रेण सादृश्यं दर्शयति—

---

१ ग. घ. ङ. च. छ. °त्यया इति स° । २ ग. घ. ङ. च. भवन्ति । ३ क. प्रेक्षावताम् । झ. प्रज्ञावताम् ।

सम्यग्दर्शनमभावहेतुः । यथा चिकित्साशास्त्रं चतुर्व्यूहम्-रोगो रोगहेतुरारोग्यं भैषज्यमिति । एवमिदमपि शास्त्रं चतुर्व्यूहमेव । तद्यथा—संसारः संसारहेतुर्मोक्षो मोक्षोपाय इति । तत्र दुःखबहुलः संसारो हेयः । प्रधानपुरुषयोः संयोगो हेयहेतुः । संयोगस्याऽऽत्यन्तिकी निवृत्तिर्हानम् । हानोपायः सम्यग्दर्शनम् । तत्र हातुः स्वरूपमुपादेयं[३] वा हेयं वा न भवितुमर्हतीति हाने तस्योच्छेदवादप्रसङ्ग उपादाने च हेतुवादः । उभयप्रत्याख्याने शाश्वतवाद इत्येतत्सम्यग्दर्शनम् ॥ १५ ॥

तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते—

**हेयं दुःखमनागतम् ॥ १६ ॥**

---

**यथेति** । चत्वारो व्यूहाः संक्षिप्तावयवरचना यस्य तत्तथोक्तम् । ननु दुःखं हेयमुक्त्वा संसारं हेयमभिदधतः कुतो न विरोध इत्यत आह—**तत्र दुःखबहुल इति** । यत्कृत्वाऽविद्या संसारं करोति तदस्या अवान्तरव्यापारं संसारहेतुमाह—**प्रधानपुरुषयोरिति** । मोक्षस्वरूपमाह—**संयोगस्येति** । मोक्षोपायमाह—**हानोपाय इति** । केचित्पश्यन्ति, हातुः स्वरूपोच्छेद एव मोक्षः । यथाऽऽहुः—

प्रदीपस्येव निर्वाणं विमोक्षस्तस्य चेतसः ॥ इति ।

अन्ये तु सवासनक्लेशसमुच्छेदाद्विशुद्धविज्ञानोत्पाद एव मोक्ष इत्याचक्षते तान्प्रत्याह—**तत्रेति** । तत्र हानं तावद्दूषयति—**हाने तस्येति** । न हि प्रेक्षावान्कश्चिदात्मोच्छेदाय यतते । ननु दृश्यन्ते तीव्रगदोन्मूलितसकलसुखा दुःखमयीमिव मूर्तिमुद्वहन्तः स्वोच्छेदाय यतमानाः । सत्यम् । केचिदेव ते, न त्वेवं संसारिणो विविधविचित्रदेवाद्यानन्दभोगभागिनस्तेऽपि च मोक्षमाणा दृश्यन्ते । तस्मादपुरुषार्थत्वप्रसक्तेर्न हातुः स्वरूपोच्छेदो मोक्षोऽभ्युपेयः । अस्तु तर्हि हातुः स्वरूपमुपादेयमित्यत आह—**उपादाने च हेतुवादः** । उपादाने हि कार्यत्वेनानित्यत्वे सति मोक्षत्वादेव च्यवेत । अमृतत्वं हि मोक्षः । नापि विशुद्धो विज्ञानसंतानो भवत्यमृतः । संतानिभ्यो व्यतिरिक्तस्य संतानस्य वस्तुसतोऽभावात् । संतानिनां चानित्यत्वात् । तस्मात्तथा यतितव्यं[४] यथा शाश्वतवादो भवति । तथा च पुरुषार्थताऽपवर्गस्येत्याह—**उभयप्रत्याख्यान इति** । तस्मात्स्वरूपावस्थानमेवाऽऽत्मनो मोक्ष इति । एतदेव सम्यग्दर्शनम् ॥ १५ ॥

**तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते—हेयं दुःखमनागतम्** । अनागतमित्यती-

---

१ क. ख. च. छ. एवोति । २ च. छ. हेतुः । ३ ग. घ. ङ. °यं हे° । ४ ख. भवितव्यं ।

दुःखमतीतमुपभोगेनातिवाहितं न हेयपक्षे वर्तते । वर्तमानं च स्वक्षणे भोगारूढमिति न तत्क्षणान्तरे हेयतामापद्यते । तस्माद्यदेवानागतं दुःखं तदेवाक्षिपात्रकल्पं योगिनं क्लिश्नाति नेतरं प्रतिपत्तारम् । तदेव हेयतामापद्यते ॥ १६ ॥

तस्माद्यदेव हेयमित्युच्यते तस्यैव कारणं प्रतिनिर्दिश्यते--

**द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥**

द्रष्टा बुद्धेः प्रतिसंवेदी पुरुषः । दृश्या बुद्धिसत्त्वोपारूढाः सर्वे धर्माः । तदेतद्दृश्यमयस्कान्तमणिकल्पं संनिधिमात्रोपकारि दृश्यत्वेन[1] स्वं भवति पुरुषस्य[2] दृशिरूपस्य स्वामिनः, अनुभवकर्मविषयतामापन्नं[3] यतः । अन्य[4]स्वरूपेण[5] प्रतिलब्धात्मकं स्वतन्त्रमपि परार्थत्वात्परतन्त्रम् ।

---

तवर्तमाने व्यवच्छिन्ने । तत्रोपपत्तिमाह—दुःखमतीतमिति । ननु वर्तमानमुपभुज्यमानं न भोगेनातिवाहितमिति कस्मान्न हेयमित्यत आह—वर्तमानं चेति । सुगमम् ॥ १६ ॥

हेयमुक्तं तस्य निदानमुच्यते—-द्रष्टृदृश्ययोः संयोगो हेयहेतुः । द्रष्टुः स्वरूपमाह—द्रष्टेति । चितिच्छायापत्तिरेव बुद्धेर्बुद्धिप्रतिसंवेदित्वमुदासीनस्यापि पुंसः । नन्वेतावताऽपि बुद्धिरेवानेन दृश्येत, न दृश्येरञ्शब्दादयोऽत्यन्तव्यवहिता इत्यत आह—दृश्या बुद्धिसत्त्वेति । इन्द्रियप्रणालिकया बुद्धौ शब्दाद्याकारेण परिणतायां दृश्यायां भवन्ति शब्दादयोऽपि धर्मा दृश्या इत्यर्थः । ननु तदाकारापत्त्या बुद्धिः शब्दाद्याकारा भवतु, पुंसस्तु बुद्धिसंबन्धेऽभ्युपगम्यमाने परिणामित्वमसंबन्धे वा कथं तेषां बुद्धिसत्त्वोपारूढानामपि शब्दादीनां दृश्यत्वम् । नहि दृशिनाऽसंस्पृष्टं[6] दृश्यं दृष्टमित्यत आह—तदेतद्दृश्यमिति । प्रपञ्चितमिदमस्माभिः प्रथमपाद एव यथा चित्याऽसंप्रयुक्तमपि बुद्धिसत्त्वमत्यन्तस्वच्छतया चितिबिम्बोद्ग्राहितया समापन्नचैतन्यमिव शब्दाद्यनुभवतीति । अत एव च शब्दाद्याकारपरिणतबुद्धिसत्त्वोपनीताञ्शब्दादीन्भुञ्जानः स्वामी भवति द्रष्टा तादृशं चास्य बुद्धिसत्त्वं स्वं भवति । तदेतद्बुद्धिसत्त्वं शब्दाद्याकारवद्दृश्यमयस्कान्तमणिकल्पं पुरुषस्य स्वं भवति दृशिरूपस्य स्वामिनः । कस्मात्, अनुभवकर्मविषयतामापन्नं यतः । अनुभवो भोगः पुरुषस्य कर्म क्रिया तद्विषयतां भुज्यमानतामापन्नं यस्मादतः स्वं भवति । ननु स्वयंप्रकाशं बुद्धिसत्त्वं कथमनुभवविषय इत्यत आह—अन्यस्वरूपेणेति । यदि हि चैत-

---

१ ग. घ. ङ. °न भ° । २ ग. घ. ङ. च. °स्य स्वं दृ° । ३ ग. घ. ङ. °पन्नमन्य° । ४ च. °न्यरू° । ५ क. °ण प्रतिपन्नमन्यस्वरूपप्र° । ख. च. छ. °ण प्रतिपन्नमन्यस्वरूपेण प्र° । ६ ख. °संसृष्टं° ।

तयोर्दृग्दर्शनशक्त्योरनादिरर्थकृतः संयोगो हेयहेतुर्दुःखस्य कारणमित्यर्थः । तथा चोक्तम्—तत्संयोगहेतुविवर्जनात्स्यादयमात्यन्तिको दुःखप्रतीकारः । कस्मात्, दुःखहेतोः परिहार्यस्य प्रतीकारदर्शनात् । तद्यथा—पादतलस्य भेद्यता, कण्टकस्य भेत्तृत्वं, परिहारः कण्टकस्य पा(प)दाऽनधिष्ठानं पादत्राणव्यवहितेन वाऽधिष्ठानम्, एतत्त्रयं यो वेद लोके स तत्र प्रतीकारमारभमाणो भेदजं दुःखं नाऽऽप्नोति । कस्मात्, त्रित्वो-

---

न्यरूपं वस्तुतो बुद्धिसत्त्वं [1]स्याद्भवेत्स्वयंप्रकाशं किंतु[2] स्वं चैतन्यादन्यज्जडरूपं तेन प्रतिलब्धात्मकं तस्मात्तदनुभवविषयः। ननु यस्य हि यत्र किंचिदा[3]यतते तत्तदधीनम् । न च बुद्धिसत्त्वस्य पुरुषमुदासीनं प्रति किंचिदा[4]यतत इति कथं तत्तन्त्रम् । तथा च न तस्य कर्मेत्यत आह—स्वतन्त्रमपि परार्थत्वात्पुरुषार्थत्वात्परतन्त्रं पुरुषतन्त्रम् ।

नन्वयं दृग्दर्शनशक्त्योः संबन्धः स्वाभाविको वा स्यान्नैमित्तिको वा । स्वाभाविकत्वे संबन्धिनोर्नित्यत्वादशक्योच्छेदः संबन्धः । तथा च संसारनित्यत्वम् । नैमित्तिकत्वे तु क्लेशकर्मतद्वासनानामन्तःकरणवृत्तितया सत्यन्तःकरणे भावादन्तःकरणस्य च तन्निमित्तत्वे परस्पराश्रयप्रसङ्गादनादित्वस्य च सर्गादावसंभवादनुत्पाद एव संसारस्य स्यात् । यथोक्तम्—

पुमानकर्ता येषां तु तेषामपि गुणैः क्रिया ।
कथमादौ भवेत्तत्र कर्म तावन्न विद्यते ॥
मिथ्याज्ञानं न तत्रास्ति रागद्वेषादयोऽपि वा ।
मनोवृत्तिर्हि सर्वेषां न चोत्पन्नं मनस्तदा ॥

इति शङ्कामपनयति—तयोर्दृग्दर्शनशक्त्योरनादिरर्थकृतः संयोगो हेयहेतुः । सत्यम् । न स्वाभाविकः संबन्धो नैमित्तिकस्तु । न चैवमादिमाननादिनिमित्तप्रभवतया तस्याप्यनादित्वात् । क्लेशकर्मतद्वासनासंतानश्चायमनादिः प्रतिसर्गावस्थायां च सहान्तःकरणेन प्रधानसाम्यमुपगतोऽपि सर्गादौ पुनस्तादृगेव प्रादुर्भवति[5] वर्षापाय इवोद्भिज्जभेदो मृद्भावमुपगतोऽपि पुनर्वर्षासु पूर्वरूप इत्यसकृदावेदितम् । प्राग्भावितया संयोगस्याविद्या कारणं स्थितिहेतुतया पुरुषार्थः कारणं तद्वशेन तस्य स्थितेस्तदिदमुक्तमर्थकृत इति । तथा चोक्तं पञ्चशिखेन तत्संयोगो बुद्धिसंयोगः स एव हेतुर्दुःखस्य । तस्य विवर्जनात्स्यादयमात्यन्तिको दुःखप्रतीकारः । अर्थात्तदपरिवर्जने दुःखमित्युक्तं भवति । तत्रैवात्यन्तप्रसिद्धं निदर्शनमाह—तद्यथेति । पादत्राणमुपानत् ।

---

१ ज. स्यात्तर्हि भवतु स्वयं° । २ ज. °तु चै° । ३ क. °दापत° । ४ क. °दापत° । ५ ख. प्रभवति ।

पलब्धिसामर्थ्यादिति । अत्रापि तापकस्य रजसः सत्त्वमेव तप्यम् । कस्मात्, तपिक्रियायाः कर्मस्थत्वात् । सत्त्वे कर्मणि तपिक्रिया नापरिणामिनि निष्क्रिये क्षेत्रज्ञे । दर्शितविषयत्वात् । सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽप्यनुतप्यत इति ॥ १७ ॥

दृश्यस्वरूपमुच्यते—

**प्रकाशक्रियास्थितिशीलं भूतेन्द्रि-**
**यात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥**

प्रकाशशीलं सत्त्वम् । क्रियाशीलं रजः । स्थितिशीलं तम इति । एते गुणाः परस्परोपरक्तप्रविभागाः परिणामिनः संयोग-

---

स्यादेतत् । गुणसंयोगस्तापहेतुरित्युच्यमाने गुणानां तापकत्वमभ्युपेतम् । न च तपिक्रियाया अस्त्यादेरिव कर्तृस्थो भावो येन तप्यमन्यन्नापेक्षेत । न चास्यास्तप्यतया पुरुषः कर्म तस्यापरिणामितया क्रियाजनितफलशालित्वायोगात् । तस्मात्तपेस्तप्यव्यासस्य तन्निवृत्तौ निवृत्तिमवगच्छामो ज्वलनविरहेणेव धूमाभावमित्यत आह—**अत्रापि तापकस्येति** । गुणानामेव तप्यतापकभावस्तत्र मृदुत्वात्पादतलवत्सत्त्वं तप्यं रजस्तु तीव्रतया तापकम् । पृच्छति—**कस्मात्सत्त्वमेव** तप्यं नतु पुरुषः । उत्तरम्—**तपिक्रियाया इति** । तत्किमिदानीं पुरुषो न तप्यते । तथा चाचेतनस्यास्तु सत्त्वस्य तापः किं नश्छिन्नमित्यत आह—**दर्शितविषयत्वात्सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽप्यनुतप्यत इति** । दर्शितविषयत्वमनुतापहेतुस्तच्च प्राग्व्याख्यातम् ॥ १७ ॥

**प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्** । व्याचष्टे—**प्रकाशेति** । सत्त्वस्य हि भागः प्रकाशस्तामसेन भागेन दैन्येन वा राजसेन वा दुःखेनानुरज्यते । एवं राजसादिष्वपि द्रष्टव्यम् । तदिदमुक्तम्—**परस्परोपरक्तविभागा इति** । पुरुषेण सह संयोगवियोगधर्माणः । यथाऽऽम्नायते—

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥
[ तै० आ० ६ । १० ] इति ।

इतरेतरोपाश्रयेणोपार्जिता मूर्तिः पृथिव्यादिरूपा यैस्ते तथोक्ताः । स्यादेतत् । सत्त्वेन शान्तप्रत्यये जनयितव्ये रजस्तमसोरपि सत्त्वाङ्गत्वेन तत्र हेतुभावादस्ति सामर्थ्यमिति यदाऽपि च रजस्तमसोराङ्गित्वं तदाऽपि शान्त एव प्रत्यय

---

१ क. ख. ग. घ. ङ. छ. °षोऽनु° । २ ग. घ. ङ. °ति दृश्यते ॥ १७ ॥ ३ ज. °व्याप्यस्य ।

**वियोगधर्माण इतरेतरोपाश्रयेणोपार्जितमूर्तयः परस्पराङ्गाङ्गित्वेऽप्यसंभिन्नशक्तिप्रविभागास्तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिनः प्रधानवेलायामुपदर्शितसंनिधाना गुणत्वेऽपि च व्यापारमात्रेण प्रधानान्तर्णीतानुमितास्तिताः पुरुषार्थकर्तव्यतया प्रयुक्तसामर्थ्याः संनिधिमात्रोपकारिणोऽयस्कान्तमणिकल्पाः**

---

उदीयेत न घोरो मूढो वा सत्त्वप्राधान्य इवेत्यत आह—**परस्पराङ्गाङ्गित्वेऽप्यसंभिन्नशक्तिप्रविभागाः** । भवतु शान्ते प्रत्यये जनयितव्ये रजस्तमसोरङ्गभावस्तथाऽपि नैषां शक्तयः संकीर्यन्ते कार्यासंकरोन्नेयो हि शक्तीनामसंकरः । असंकीर्णेन च समुदाचरता रूपेण शान्तघोरमूढरूपाणि कार्याणि दृश्यन्त इति सिद्धं शक्तीनामसंभेद इति । स्यादेतत् । असंभेदश्चेच्छक्तीनां न संभूयकारित्वं गुणानाम् । न जातु भिन्नशक्तीनां संभूयकारित्वं दृष्टम् । न हि तन्तुमृत्पिण्डवीरणादीनि घटादीन्संभूय कुर्वत इत्यत आह—**तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिनः** । यद्यपि तुल्यजातीय उपादानशक्तिर्नान्यत्र सहकारिशक्तिस्त्वतुल्यजातीये । पटे तु जनयितव्ये न वीरणानामस्ति सहकारिशक्तिरपीति न तैस्तन्तूनां संभूयकारितेति भावः । तुल्यजातीयातुल्यजातीयेषु शक्येषु ये शक्तिभेदास्ताननुपतितुं शीलं येषां ते तथोक्ताः । **प्रधानवेलायामिति** । दिव्यशरीरे जनयितव्ये सत्त्वगुणः प्रधानम् । अङ्गे रजस्तमसी । एवं मनुष्यशरीरे जनयितव्ये रजः प्रधानमङ्गे सत्त्वतमसी । एवं तिर्यक्शरीरे जनयितव्ये तमः प्रधानमङ्गे सत्त्वरजसी । तेनैते गुणाः प्रधानत्ववेलाया**मुपदर्शितसंनिधानाः** कार्योपजननं प्रत्युद्भूतवृत्तय इत्यर्थः । प्रधानशब्दश्च भावप्रधानः । यथा ' द्व्येकयोर्द्विवचनैकवचने ' [ पा० सू० १ । ४ । २२ ] इत्यत्र द्वित्वैकत्वयोरिति । अन्यथा द्व्येकेष्विति स्यात् । ननु तदा प्रधानमुद्भूततया शक्यमस्तीति वक्तुमनुद्भूतानां तु तदङ्गानां सद्भावे किं प्रमाणमित्यत आह—**गुणत्वेऽपि चेति** । यद्यपि नोद्भूतास्तथाऽपि गुणानामविवेकित्वात्संभूयकारित्वाच्च व्यापारमात्रेण सहकारितया प्रधानेऽन्तर्णीतं सदनुमितमस्तित्वं येषां ते तथोक्ताः । ननु सन्तु गुणाः संभूयकारिणः समर्थाः कस्मात्पुनः कुर्वन्ति नहि समर्थमित्येव कार्यं जनयति । मा भूदस्य कार्योपजननं प्रति विराम इत्यत आह—**पुरुषार्थकर्तव्यतयेति** । ततो निर्वर्तितनिखिलपुरुषार्थानां गुणानामुपरमः कार्यानारम्भणमित्युक्तं भवति । ननु पुरुषस्यानुपकुर्वतः कथं पुरुषार्थेन प्रयुज्यत इत्यत आह—**संनिधिमात्रेति** । ननु धर्माधर्मल-

---

१ ग. घ. ङ. °विभाग° । २ ज. °सिद्धः । ३ क. ख. °त् । तदसं° । ४ झ. °स्मात्तत्पु° । ५ ख. प्रवि° । ज. प्रत्यधि° ।

प्रत्ययमन्तरेणैकतमस्य वृत्तिमनु वर्तमानाः प्रधानशब्दवाच्या भवन्ति । एतद्दृश्यमित्युच्यते ।

तदेतद्भूतेन्द्रियात्मकं भूतभावेन पृथिव्यादिना सूक्ष्मस्थूलेन परिणमते । तथेन्द्रियभावेन श्रोत्रादिना सूक्ष्मस्थूलेन परिणमत इति । तत्तु नाप्रयोजनमपि तु प्रयोजनमुररीकृत्य प्रवर्तत इति भोगापवर्गार्थं हि तद्दृश्यं पुरुषस्येति । तत्रेष्टानिष्टगुणस्वरूपाव-धारणमविभागापन्नं भोगो भोक्तुः स्वरूपावधारणमपवर्ग इति । द्वयोरतिरिक्तमन्यद्दर्शनं नास्ति । तथा चोक्तम्—अयं तु खलु त्रिषु गुणेषु कर्तृष्वकर्तरि च पुरुषे तुल्यातुल्यजातीये चतुर्थे तत्क्रियासाक्षिण्युपनीयमानान्सर्वभावानुपपन्नाननुपश्यन्नदर्शनम-न्यच्छङ्कत इति ।

तावेतौ भोगापवर्गौ बुद्धिकृतौ बुद्धावेव वर्तमानौ कथं पुरुषे व्यपदिश्येते इति । यथा विजयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते, स हि तत्फलस्य भोक्तेति, एवं बन्ध-मोक्षौ बुद्धावेव वर्तमानौ पुरुषे व्यपदिश्येते, स हि तत्फ-

---

क्षणमेव निमित्तं प्रयोजकं गुणानां तत्किमुच्यते पुरुषार्थप्रयुक्ता इत्यत आह—**प्रत्य-यमन्तरेणेति** । एकतमस्य सत्त्वस्य रजसस्तमसो वा प्रधानस्य स्वकार्ये प्रवृत्तस्य वृत्तिमितरे प्रत्ययं निमित्तं धर्मादिकं विनैवानुवर्तमानाः । यथा च वक्ष्यति—"निमि-त्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्" [ यो० सू० ४।३ ] इति । एते गुणाः प्रधानशब्दवाच्या भवन्तीति संबन्धः । प्रधीयत आधीयते विश्वं कार्यमे-भिरिति व्युत्पत्त्यैतद्दृश्यमुच्यते ।

तदेवं गुणानां शीलमभिधाय तस्य कार्यमाह—**तदेतदिति** । सत्कार्यवादसिद्धौ यद्य-दात्मकं तत्तेन रूपेण परिणमत इति भूतेन्द्रियात्मकत्वं दीपयति—**भूतभावेनेत्या-दिना** । भोगापवर्गार्थमिति सूत्रावयवमवतारयति—**तत्तु नाप्रयोजनमपि तु प्रयोजन-मुररीकृत्य प्रवर्तते** । भोगं विवृणोति—**तत्रेति** । सुखदुःखे हि त्रिगुणाया बुद्धेः स्वरूपे तस्यास्तथात्वेन परिणामात्तथाऽपि गुणगततयाऽवधारणे न भोग इत्यत आह—**अविभागापन्नमिति** । एतच्चासकृद्विवेचितम् । अपवर्गं विवृणोति—**भोक्तुरिति** । अपवृज्यतेऽनेनेत्यपवर्गः । प्रयोजनान्तरस्याभावमाह—**द्वयोरिति** । **तथा चोक्तं** पञ्च-शिखेन—**अयं तु खल्विति** ।

ननु वस्तुतो भोगापवर्गौ बुद्धिकृतौ बुद्धिवर्तिनौ च कथं तदकारणे तदनधिकरणे च पुरुषे व्यपदिश्येते इत्यत आह—**तावेताविति** । भोक्तृत्वं च पुरुषस्योपपादितमग्रे

लस्य भोक्तेति । बुद्धेरेव पुरुषार्थापरिसमाप्तिर्बन्धस्तदर्थावसायो मोक्ष इति । एतेन ग्रहणधारणोहापोहतत्त्वज्ञानाभिनिवेशा बुद्धौ वर्तमानाः पुरुषेऽध्यारोपितसद्भावाः । स हि तत्फलस्य भोक्तेति ॥ १८ ॥

दृश्यानां गुणानां स्वरूपभेदावधारणार्थमिदमारभ्यते—

**विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥**

तत्राऽऽकाशवाय्वग्न्युदकभूमयो भूतानि शब्दस्पर्शरूपरसगन्धतन्मात्राणामविशेषाणां विशेषाः । तथा श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि बुद्धीन्द्रियाणि, वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाणि, एकादशं मनः सर्वार्थम्, इत्येतान्यस्मितालक्षणस्याविशेषस्य विशेषाः । गुणानामेष षोडशको विशेषपरिणामः

षडविशेषाः । तद्यथा—शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं

---

च वक्ष्यते । परमार्थतस्तु—बुद्धेरेव पुरुषार्थापरिसमाप्तिरिति । एतेन भोगापवर्गयोः पुरुषसंबन्धित्वकथनमार्गेण ग्रहणादयोऽपि पुरुषसंबन्धिनो वेदितव्याः । तत्र स्वरूपमात्रेणार्थज्ञानं ग्रहणं, तत्र स्मृतिर्धारणं, तद्गतानां विशेषाणामूहनमूहः, समारोपितानां च युक्त्याऽपनयोऽपोहः । ताभ्यामेवोहापोहाभ्यां तदवधारणं तत्त्वज्ञानम् । तत्त्वावधारणपूर्वं हानोपादान[३]ज्ञानमभिनिवेशः ॥ १८ ॥

दृश्यानां गुणानां स्वरूपभेदावधारणार्थमिदमारभ्यते—**विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि** । येषामविशेषाणां शान्तघोरमूढलक्षणविशेषरहितानां ये विशेषा विकारा एव न तु तत्त्वान्तरप्रकृतयस्तेषां तानाह—**तत्राऽऽकाशेति** । उत्पादक्रमानुरूप एवोपन्यासक्रमः । अस्मितालक्षणस्याविशेषस्य सत्त्वप्रधानस्य बुद्धीन्द्रियाणि विशेषाः । राजसस्य कर्मेन्द्रियाणि । मनसस्तूभयात्मकमुभयप्रधानस्येति मन्तव्यम् । अत्र च पञ्च तन्मात्राणि बुद्धिकारणकान्यविशेषत्वादस्मितावदिति । विकारहेतुत्वं चाविशेषत्वं तन्मात्रेषु चास्मितायां चाविशिष्टम् । संकलय्य विशेषान्परिगणयति—**गुणानामेष इति** ।

अविशेषानपि गणयति—षडिति संकलय्योदाहरति—**तद्यथेति** । विशि[४]ष्टं ह्यपरं परेणेति गन्ध आत्मना पञ्चलक्षणो रस आत्मना चतुर्लक्षणो रूपमात्मना त्रिल-

---

१ क. ग. घं. ङ. च. °नां तु गु° । २ क. ख. ग. घ. ङ. छ. °पस्थानि क° । ३ ज. झ. °नम° । ४ ज. विष्टब्धं ।

रसतन्मात्रं गन्धतन्मात्रं चेत्येकद्वित्रिचतुःपञ्चलक्षणाः शब्दादयः पञ्चाविशेषाः, षष्ठश्चाविशेषोऽस्मितामात्र इति । एते सत्तामात्रस्याऽऽत्मनो महतः षडविशेषपरिणामाः । यत्तत्परमविशेषेभ्यो लिङ्गमात्रं महत्तत्त्वं तस्मिन्नेते सत्तामात्रे महत्यात्मन्यवस्थाय विवृद्धिकाष्ठामनुभवन्ति ।

प्रतिसंसृज्यमानाश्च तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय यत्तन्निःसत्तासत्तं निःसदसन्निरसदव्यक्तमलिङ्गं प्रधानं तत्प-

---

क्षणं स्पर्श आत्मना द्विलक्षणः शब्दः शब्दलक्षण एवेति। कस्य पुनरमी षडविशेषाः कार्यमित्यत आह–**एते सत्तामात्रस्याऽऽत्मन** इति । पुरुषार्थक्रियाक्षमं सत्तस्य भावः सत्ता । तन्मात्रं तन्महत्तत्त्वम् । यावती काचित्पुरुषार्थक्रिया शब्दादिभोगलक्षणा सत्त्वपुरुषान्यताख्यातिलक्षणा वाऽस्ति सा सर्वा महति बुद्धौ समाप्यत इत्यर्थः । आत्मन इति स्वरूपोपदर्शनेन तुच्छत्वं निषेधति । प्रकृतेरयमाद्यः परिणामो वास्तवो न तु तद्विवर्त इति यावत् । यत्तत्परं विप्रकृष्टकालमविशेषेभ्यस्तदपेक्षया संनिकृष्टकालेभ्यो लिङ्गमात्रं महत्तत्त्वं तस्मिन्नेते षडविशेषाः सत्तामात्रे महत्यात्मन्यवस्थाय सत्कार्यवादसिद्धेर्विवृद्धिकाष्ठामनुभवन्ति प्राप्नुवन्ति । ये पुनरविशेषाणां विशेषपरिणामास्तेषां च धर्मलक्षणावस्थाः परिणामा इति । सेयमेषां विवृद्धिकाष्ठा परिणामकाष्ठेति ।

तदेवमुत्पत्तिक्रममभिधाय प्रलयक्रममाह—**प्रतिसंसृज्यमानाः** प्रलीयमानाः स्वात्मनि लीनविशेषा अविशेषास्त**स्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय** विलीय सहैव महता तेऽविशेषा अव्यक्तमन्यत्र लयं न गच्छतीत्यलिङ्गं प्रतियन्ति । तस्यैव विशेषणं **निःसत्तासत्तं** सत्ता पुरुषार्थक्रियाक्षमत्वम् । असत्ता तुच्छता निष्क्रान्तं सत्ताया असत्तायाश्च यत्तत्तथोक्तम् । एतदुक्तं भवति—सत्त्वरजस्तमसां साम्यावस्था न क्वचित्पुरुषार्थ उपयुज्यत इति न सती नापि गगनकमलिनीव तुच्छस्वभावा तेन नासत्यपीति । स्यादेतत् । अव्यक्तावस्थायामप्यस्ति महदादि तदात्मना, न हि सतो विनाशो विनाशे वा न पुनरुत्पादो न ह्यसत उत्पाद इति महदादिसद्भावात्पुरुषार्थक्रिया प्रवर्तेत तत्कथं निःसत्त्वमव्यक्तमित्यत आह–**निःसदसदिति** । निष्क्रान्तं कारणं सतः कार्यात् । यद्यपि कारणावस्थायां सदेव शक्त्यात्मना कार्यं तथाऽपि स्वोचितामर्थक्रियामकुर्वदसदित्युक्तम् । न चैतत्कारणं शशविषाणायमानकार्यमित्याह–**निरसदिति** । निष्क्रान्तमसतस्तुच्छरूपात्कार्यात्तथा सति हि व्योमारविन्दमिवास्मान्न

तिर्यन्ति । एष तेषां लिङ्गमात्रः परिणामो निःसत्तासत्त्वं चालिङ्गपरिणाम इति ।

अलिङ्गावस्थायां न पुरुषार्थो हेतुर्नालिङ्गावस्थायामादौ पुरुषार्थता कारणं भवतीति । न तस्याः पुरुषार्थता कारणं भवतीति । नासौ पुरुषार्थकृतेति नित्याऽऽख्यायते । त्रयाणां त्ववस्थाविशेषाणामादौ पुरुषार्थता कारणं भवति । स चार्थो हेतुर्निमित्तं कारणं भवतीत्यनित्याऽऽख्यायते । गुणास्तु सर्वधर्मानुपातिनो न प्रत्यस्तमयन्ते नोपजायन्ते । व्यक्तिभिरेवातीतानागतव्ययागमवतीभिर्गुणान्वयिनीभिरुपजननापायधर्मका इव प्रत्यवभासन्ते । यथा देवदत्तो दरिद्राति । कस्मात् । यतोऽस्य म्रियन्ते गाव इति, गवामेव मरणात्तस्य दरिद्राणं न स्वरूपहानादिति समः समाधिः ।

लिङ्गमात्रमलिङ्गस्य प्रत्यासन्नं, तत्र तत्संसृष्टं विविच्यते क्रमानतिवृत्तेः । तथा षडविशेषा लिङ्गमात्रे संसृष्टा विविच्यन्ते ।

---

कार्यमुत्पद्येतेति भावः । प्रतिसर्गमुक्तमुपसंहरति—**एष तेषामिति** । एष इत्यनन्तरोक्तात्पूर्वस्य परामर्शः ।

लिङ्गमात्राद्यवस्थाः पुरुषार्थकृतत्वादनित्या अलिङ्गावस्था तु पुरुषार्थेनाकृतत्वान्नित्येत्यत्र हेतुमाह—**अलिङ्गावस्थायामिति** । कस्मात्पुनर्न पुरुषार्थो हेतुरित्यत आह—**नालिङ्गावस्थायामिति** । भवतिना विषयेण विषयिज्ञानमुपलक्षयति । एतदुक्तं भवति—एवं हि पुरुषार्थता कारणमलिङ्गावस्थायां ज्ञायेत । यद्यलिङ्गावस्था शब्दाद्युपभोगं वा सत्त्वपुरुषान्यताख्यातिं वा पुरुषार्थं निर्वर्तयेत्तन्निर्वर्तने हि न साम्यावस्था स्यात् । तस्मात्पुरुषार्थकारणत्वमस्यां न ज्ञायत इति नास्याः पुरुषार्थता हेतुः । उपसंहरति—**नासाविति** । इतिस्तस्मादर्थे । अनित्यामवस्थामाह—**त्रयाणां लिङ्गमात्राविशेषविशेषाणामिति** । पर्वस्वरूपं दर्शयित्वा गुणस्वरूपमाह—**गुणास्त्विति** । निदर्शनमाह—**यथा देवदत्त इति** । यत्रात्यन्तभिन्नानां गवामुपचयापचयौ देवदत्तोपचयापचयहेतू तत्र कैव कथा गुणेभ्यो भिन्नाभिन्नानां व्यक्तीनामुपजनापाययोरित्यर्थः ।

ननु सर्गक्रमः किमनियतो नेत्याह—**लिङ्गमात्रमिति** । न खलु न्यग्रोधधाना अह्नायैव न्यग्रोधशाखिनं सान्द्रशाद्वलदलजटिलशाखाकाण्डानिपीतमार्तण्डचण्डातपमण्डल-

---

१ ग. घ. ङ. च. °यन्तीति । ए° । २ च. °त्या व्याख्या° । ३ ख. ग. घ. ङ. च. °जना° ४ ज. °णामवस्थाविशेषाणामि° ।

परिणामक्रमनियमात् । तथा तेष्वविशेषेषु भूतेन्द्रियाणि संसृष्टानि विविच्यन्ते । तथा चोक्तं पुरस्तात् । न विशेषेभ्यः परं तत्त्वान्तरमस्तीति विशेषाणां नास्ति तत्त्वान्तरपरिणामः । तेषां तु धर्मलक्षणावस्थापरिणामा व्याख्यायिष्यन्ते ॥ १९ ॥

व्याख्यातं दृश्यमथ द्रष्टुः स्वरूपावधारणार्थमिदमारभ्यते—

**द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥**

दृशिमात्र इति दृक्शक्तिरेव विशेषणापरामृष्टेत्यर्थः । स पुरुषो बुद्धेः प्रतिसंवेदी । स बुद्धेर्न सरूपो नात्यन्तं विरूप इति । न तावत्सरूपः । कस्मात् । ज्ञाताज्ञातविषयत्वात्परिणामिनी हि

---

मारभन्ते किंतु क्षितिसलिलतेजःसंपर्कात्परम्परयोपजायमानाङ्कुरपत्रकाण्डनालादिक्रमेण । एवमिहापि युक्त्यागमसिद्धः क्रम आस्थेय इति । कथं भूतेन्द्रियाण्यविशेषसंसृष्टानीत्यत आह—तथा चोक्तं पुरस्तादिदमेव सूत्रं प्रथमं व्याचक्षाणैः । अथ विशेषाणां कस्मान्न तत्त्वान्तरपरिणाम उक्त इत्यत आह—न विशेषेभ्य इति । [1]तत्किमिदानीमपरिणामिन एव विशेषास्तथा च नित्याः प्रसज्येरन्नित्यत आह—तेषां त्विति ॥ १९ ॥

व्याख्यातं दृश्यं द्रष्टुः स्वरूपावधारणार्थमिदमारभ्यते—द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः । व्याचष्टे—दृशिमात्र इति । विशेषणानि धर्मास्तैरपरामृष्टा । तदनेन मात्रग्रहणस्य तात्पर्यं दर्शितम् । स्यादेतत् । यदि सर्वविशेषणरहिता दृक्शक्तिर्न तर्हि शब्दादयो दृश्येरन् । नहि दृशिनाऽसंस्पृष्टं दृश्यं भवतीत्यत आह—स पुरुष इति । बुद्धिदर्पणे पुरुषप्रतिबिम्बसंक्रान्तिरेव बुद्धिप्रतिसंवेदित्वं पुंसः । तथा च दृशिच्छायापन्नया बुद्ध्या संसृष्टाः शब्दादयो भवन्ति दृश्या इत्यर्थः । स्यादेतत् । पारमार्थिकमेव बुद्धिचैतन्ययोः कस्मादैक्यं नोपेयते किमनया तच्छायापत्त्येत्यत आह—स बुद्धेर्न सरूप इति । तथाऽसरूपस्य तच्छायापत्तिरपि दुर्घटेत्यत आह—नात्यन्तं विरूप इति । तत्र सारूप्यं निषेधति—न तावदिति । हेतुं पृच्छति-कस्मात् । सहेतुकं वैरूप्ये हेतुमाह—ज्ञातेति । परिणामिनी बुद्धिर्यस्मात्तस्माद्विरूपा । यदा खल्वियं शब्दाद्याकारा भवति तदा ज्ञातोऽस्याः शब्दादिलक्षणो भवति विषयस्तदनाकारत्वे त्वज्ञातः।तथा च कदाचिदेव तदाकारतां दधती

---

१ ज. °तत्कथम° ।

बुद्धिः। तस्याश्च विषयो गवादिर्घटादिर्वा ज्ञातश्चाज्ञातश्चेति परिणामित्वं दर्शयति।

सदाज्ञातविषयत्वं तु पुरुषस्यापरिणामित्वं परिदीपयति। कस्मात्। नहि बुद्धिश्च नाम पुरुषविषयश्च स्यादगृहीता गृहीता चेति सिद्धं पुरुषस्य सदाज्ञातविषयत्वं ततश्चापरिणामित्वमिति। किंच परार्था बुद्धिः संहत्यकारित्वात्, स्वार्थः पुरुष इति। तथा सर्वार्थाध्यवसायकत्वात्त्रिगुणा बुद्धिस्त्रिगुणत्वादचेतनेति। गुणानां तूपद्रष्टा पुरुष इत्यतो न सरूपः।

अस्तु तर्हि विरूप इति। नात्यन्तं विरूपः। कस्मात्, शुद्धोऽप्यसौ

---

परिणामिनीति। प्रयोगश्च भवति—बुद्धिः परिणामिनी ज्ञाताज्ञातविषयत्वाच्छ्रोत्रादिवदिति।

तद्वैधर्म्यं पुरुषस्य तद्विपरीताद्धेतोः सिध्यतीत्याह—सदेति। स्यादेतत्। सदाज्ञातविषयश्चेत्पुरुषो न तर्हि केवली स्यादित्याशयवान्पृच्छति—कस्मादिति। उत्तरम्—न हि बुद्धिश्च नामेति। बुद्ध्यग्रहणयोरस्ति सहसंभवो निरोधावस्थायामत उक्तविरोधसूचनाय पुरुषविषयश्चेति। तेनाऽऽद्यश्चकारो बुद्धिं विषयत्वेन समुच्चिनोति। परिशिष्टौ तु विरोधद्योतकौ चकाराविति। प्रयोगस्तु पुरुषोऽपरिणामी सदासंप्रज्ञातव्युत्थानावस्थयोर्ज्ञातविषयत्वात्। यस्तु परिणामी नासौ सदाज्ञातविषयः। यथा श्रोत्रादिरिति व्यतिरेको हेतुः। अपरमपि वैधर्म्यमाह—किं च परार्थेति। बुद्धिः खलु क्लेशकर्मवासनादिभिर्विषयेन्द्रियादिभिश्च संहत्य पुरुषार्थमभिनिर्वर्तयन्ती परार्था। प्रयोगश्च परार्था बुद्धिः संहत्यकारित्वाच्छयनासनाभ्यङ्गवदिति। पुरुषस्तु न तथेत्याह—स्वार्थः पुरुष इति। सर्वं पुरुषाय कल्पते। पुरुषस्तु न कस्मैचिदित्यर्थः। वैधर्म्यान्तरमाह—सर्वेति। सर्वानर्थाञ्शान्तघोरमूढांस्तदाकारपरिणता बुद्धिरध्यवस्यति सत्त्वरजस्तमसां चैते परिणामा इति सिद्धा त्रिगुणा बुद्धिरिति। न चैवं पुरुष इत्याह—गुणानामिति। तत्प्रतिबिम्बितः पश्यति न तु तदाकारपरिणत इत्यर्थः। उपसंहरति—अत इति।

अस्तु तर्हि विरूप इति। नात्यन्तं विरूपः कस्माद्यतः शुद्धोऽपि

---

१ क. ख. °दिश्च ज्ञाताज्ञातश्चे°। घ. ङ. च. छ. °दिर्ज्ञात°। २ ग. स्याद्ग्रहीताऽग्रहीता चे°। ३ घ. ङ. °ता चे°। ४ क. °नाभि°। ५ ख. ज. °नायङ्ग°।

प्रत्ययानुपश्यो यतः । प्रत्ययं बौद्धमनुपश्यति, तमनुपश्यन्नतदात्माऽपि तदात्मक इव प्रत्यवभासते । तथा चोक्तम्—अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति, तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते ॥ २० ॥

**तदर्थ एव दृश्यस्याऽऽत्मा ॥ २१ ॥**

दृशिरूपस्य पुरुषस्य कर्म[2]रूपतामापन्नं दृश्यमिति तदर्थ एव दृश्यस्याऽऽत्मा[3] भवति । स्वरूपं भवतीत्यर्थः । स्वरूपं तु पररू-

---

प्रत्ययानुपश्यः । यथा चैतत्तथोक्तं "वृत्तिसारूप्यमितरत्र" [ यो० सू० १ । ४ ] इत्यत्र । तथा चोक्तं पञ्चशिखेनापरिणामिनी हि भोक्तृशक्तिरात्मा । अत एव बुद्धावप्रतिसंक्रमा च परिणामिनि बुद्धिरूपेऽर्थे संक्रान्तेव तद्वृत्तिं बुद्धिवृत्तिमनुपतति । नन्वसंक्रान्ता कथं संक्रान्तेव कथं वा वृत्तिं विनाऽनुपततीत्यत आह—तस्याश्चेति । प्राप्तश्चैतन्योपग्रह उपरागो येन रूपेण तत्तथा प्राप्तचैतन्योपग्रहं रूपं यस्याः सा तथोक्ता । एतदुक्तं भवति—यथा निर्मले जलेऽसंक्रान्तोऽपि चन्द्रमाः संक्रान्तप्रतिबिम्बतया संक्रान्त इव, एवमत्राप्यसंक्रान्ताऽपि संक्रान्तप्रतिबिम्बा चितिशक्तिः संक्रान्तेव । तेन बुद्ध्यात्मत्वमापन्ना बुद्धिवृत्तिमनुपततीति । तदनेनानुपश्य इति व्याख्यातं तामनुकारेण पश्यतीत्यनुपश्य इति ॥ २० ॥

द्रष्टृदृश्ययोः स्वरूपमुक्त्वा स्वस्वामिलक्षणसंबन्धाङ्गं दृश्यस्य द्रष्टृर्थत्वमाह—तदर्थ एव दृश्यस्याऽऽत्मा । व्याचष्टे—दृशिरूपस्य पुरुषस्य भोक्तुः कर्मरूपतां भोग्यतामापन्नं दृश्यमिति तस्मात्तदर्थ एव द्रष्ट्रर्थ एव दृश्यस्याऽऽत्मा भवति न तु दृश्यार्थः । ननु नाऽऽत्माऽऽत्मार्थ इत्यत आह—स्वरूपं भवतीति । एतदुक्तं भवति—सुखदुःखात्मकं दृश्यं भोग्यम् । सुखदुःखे चानुकूलयितृप्रतिकूलयितृणी तत्त्वेन तदर्थे एव व्यवतिष्ठेते । विषया अपि हि शब्दादयस्तादात्म्यादेव चानुकूलयितारः प्रतिकूलयितारश्च । न चाऽऽत्मैवैषामनुकूलनीयः प्रतिकूलनीयश्च स्वात्मनि वृत्तिविरोधादतः पारिशेष्याच्चितिशक्तिरेवानुकूलनीया प्रतिकूलनीया च । तस्मात्तदर्थमेव दृश्यं न तु दृश्यार्थम् । अतश्च तदर्थ एव दृश्यस्याऽऽत्मा न दृश्यार्थो यत्स्वरूपमस्य यावत्पुरुषार्थमनुवर्तते । निर्वर्तिते च पुरुषार्थे निवर्तत इत्याह—स्वरूपमिति । स्वरूपं तु दृश्यस्य जडं पररूपेणाऽऽत्मरूपेण चैतन्येन प्रतिलब्धात्मक-

---

१ क. ख. °वृत्त्याऽवि° । २ ख. घ. ङ. छ. °र्मविषयता° । ३ ग. छ. °त्मा स्व° । ४ क. ख. ग. घ. ङ. छ. °र्थः । तत्स्वरू° ।

पेण प्रतिलब्धात्मकं भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यत इति। स्वरूपहानादस्य नाशः प्राप्तो न तु विनश्यति ॥ २१ ॥

कस्मात्—

कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥

कृतार्थमेकं पुरुषं प्रति दृश्यं नष्टमपि नाशं प्राप्तमप्यनष्टम्। तदन्यपुरुषसाधारणत्वात्। कुशलं पुरुषं प्रति नाशं प्राप्तमप्यकुशलान्पुरुषान्प्रति न कृतार्थमिति तेषां दृशेः कर्मविषयतामापन्नं लभत एव पररूपेणाऽऽत्मरूपमिति। अतश्च दृग्दर्शनशक्त्यो-

---

मनुभूतस्वरूपं भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यते। भोगः सुखाद्याकारः शब्दाद्यनुभावोऽपवर्गः सत्त्वपुरुषान्यतानुभवस्तच्चैतदुभयमप्याजानतो जडाया बुद्धेः पुरुषच्छायापत्त्येति पुरुषस्यैव। तथा च पुरुषभोगापवर्गयोः कृतयोर्दृश्यस्य भोगापवर्गार्थता समाप्यत इति भोगापवर्गार्थतायां कृतायामित्युक्तम्। अत्रान्तरे चोदयति—स्वरूपहानादिति। परिहरति—न तु विनश्यतीति ॥ २१ ॥

नन्वत्यन्तानुपलभ्यं कथं न विनश्यतीत्याशयवान्पृच्छति—कस्मादिति। सूत्रेणोत्तरमाह—कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्। कृतोऽर्थो यस्य पुरुषस्य स तथा। तं प्रति नष्टमप्यनष्टं तद्दृश्यं कुतः सर्वान्पुरुषान्कुशलानकुशलान्प्रति साधारणत्वात्। व्याचष्टे—कृतार्थमेकमिति। नाशोऽदर्शनम्। अनष्टं तु दृश्यमन्यपुरुषसाधारणत्वात्। तस्माद्दृश्यात्परस्याऽऽत्मनश्चैतन्यं रूपं तेन तदिह श्रुतिस्मृतीतिहासपुराणप्रसिद्धमव्यक्तमनवयवमेकमनाश्रयं व्यापि नित्यं विश्वकार्यशक्तिमत्। यद्यपि कुशलेन तं प्रति कृतकार्यं न दृश्यते तथाऽप्यकुशलेन दृश्यमानं न नास्ति। न हि रूपमन्धेन न दृश्यत इति चक्षुष्मताऽपि दृश्यमानमभावप्राप्तं भवति। न च प्रधानवदेक एव पुरुषस्तन्नानात्वस्य जन्ममरणसुखदुःखोपभोगमुक्तिसंसारव्यवस्थया सिद्धेः। एकत्वश्रुतीनां च प्रमाणान्तरविरोधात्कथंचिद्देशकालविभागाभावेन भक्त्याऽप्युपपत्तेः। प्रकृत्येकत्वपुरुषनानात्वयोश्च श्रुत्यैव साक्षात्प्रतिपादनात्।

---

१ घ. ङ. °नाद्दृश्यता°। २ ग. घ. ङ. °म्यत्यक्त°। ३ क. ख. °णानात्म°।

नित्यत्वादनादिः संयोगो व्याख्यात इति । तथा चोक्तम्— धर्मिणामनादिसंयोगाद्धर्ममात्राणामप्यनादिः संयोग इति॥२२॥

संयोगस्वरूपाभिधित्सयेदं सूत्रं प्रववृते—

**स्वस्वामिशक्त्योः स्वरूपोपल-**
**ब्धिहेतुः संयोगः ॥ २३ ॥**

पुरुषः स्वामी दृश्येन स्वेन दर्शनार्थं संयुक्तः । तस्मात्संयोगाद्दृश्यस्योपलब्धिर्या स भोगः । या तु द्रष्टुः स्वरूपोपलब्धिः सोऽपवर्गः । दर्शनकार्यावसानः संयोग इति दर्शनं वियो-

---

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥
[ तै० आ० १ । १० ] इति श्रुतिः ।

अस्या एव श्रुतेश्चानेन सूत्रेणार्थोऽनूदित इति । यतो दृश्यं नष्टमप्यनष्टं पुरुषान्तरं प्रत्यस्त्यतो दृग्दर्शनशक्त्योर्नित्यत्वादनादिः संयोगो व्याख्यातः । अत्रैवाऽऽगमिनामनुमतिमाह—तथा चोक्तमिति । धर्मिणां गुणानामात्मभिरनादिसंयोगाद्धर्ममात्राणां महदादीनामप्यनादिः संयोग इति । एकैकस्य महदादेः संयोगोऽनादिरप्यनित्य एव यद्यपि तथाऽपि सर्वेषां महदादीनां नित्यः पुरुषान्तराणां साधारणत्वादत उक्तं धर्ममात्राणामिति । मात्रग्रहणेन व्याप्तिं गमयति । अत एतद्भवति—यद्यप्येकस्य महतः संयोगोऽतीततामापन्नस्तथाऽपि महदन्तरस्य पुरुषान्तरेण संयोगो नातीत इति नित्य उक्तः ॥ २२ ॥

तदेवं तादर्थ्ये[1] संयोगकारण उक्ते प्रासङ्गिके प्रधाननित्यत्वे संयोगसामान्यनित्यत्वे[2] हेतौ चोक्ते[3] संयोगस्य यत्स्वरूपमसाधारणो विशेष इति यावत्तदभिधित्सयेदं सूत्रं प्रववृते—**स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः** । यतो दृश्यं तदर्थमतस्तज्जनितमुपकारं भजमानः पुरुषस्तस्य स्वामी भवति । भवति च तद्दृश्यमस्य स्वं स चानयोः संयोगः शक्तिमात्रेण व्यवस्थितस्तत्स्वरूपोपलब्धिहेतुस्तदेतद्भाष्यमवद्योतयति—**पुरुषः स्वामी** योग्यतामात्रेण **दृश्येन स्वेन** योग्यतयैव **दर्शनार्थं संयुक्तः** । शेषं सुगमम् । स्यादेतत् । द्रष्टुः स्वरूपोपलब्धिरपवृज्यतेऽनेनेत्यपवर्ग उक्तो न च मोक्षः साधनवांस्तथा सत्ययं मोक्षत्वादेव च्यवेतेत्यत आह—**दर्शनकार्यावसानो** बुद्धिविशेषेण सह पुरुषविशेषस्य संयोग इति दर्शनं वियोगकारण-

---

१ ख. तादात्म्यसंयोगे का° । २ ख. °त्यत्वहे° । ३ ज. °त्वे च हेतावुक्ते ।

गस्य कारणमुक्तम् । दर्शनमदर्शनस्य प्रतिद्वंद्वीत्यदर्शनं संयोग- निमित्तमुक्तम् । नात्र दर्शनं मोक्षकारणमदर्शनाभावादेव बन्धा- भावः स मोक्ष इति । दर्शनस्य भावे बन्धकारणस्यादर्शनस्य नाश इत्यतो दर्शनं ज्ञानं कैवल्यकारणमुक्तम् ।

किंचेदमदर्शनं नाम, किं गुणानामधिकार आहोस्विद्दृशिरू- पस्य स्वामिनो दर्शितविषयस्य प्रधानचित्तस्यानुत्पादः । स्वस्मिन्दृश्ये विद्यमाने यो दर्शनाभावः ।

किमर्थवत्ता गुणानाम् । अथाविद्या स्वचित्तेन सह निरुद्धा स्वचित्तस्योत्पत्तिबीजम् । किं स्थितिसंस्कारक्षये गतिसंस्का-

---

मुक्तम् । कथं पुनर्दर्शनकार्यावसानत्वं संयोगस्येत्यत आह—दर्शनमिति । ततः किमित्यत आह—अदर्शनमविद्या संयोगनिमित्तमित्युक्तम् । उक्तमर्थं स्पष्टयति—नात्रेति । ननु दर्शनमदर्शनं विरोधि निवर्तयतु बन्धस्य कुतो निवृत्तिरित्यत आह—दर्शनस्येति । बुद्ध्यादिविविक्तस्याऽऽत्मनः स्वरूपावस्थानं मोक्ष उक्तो न तस्य साधनं दर्शनमपि त्वदर्शननिवृत्तेरित्यर्थः ।

असाधारणं संयोगहेतुमदर्शनविशेषं ग्रहीतुमदर्शनमात्रं विकल्पयति—किंचेद- मिति । पर्युदासं गृहीत्वाऽऽह—किं गुणानामधिकारः कार्यारम्भणसामर्थ्यं ततो हि संयोगः संसारहेतुरुपजायते । प्रसज्यप्रतिषेधं गृहीत्वा द्वितीयं विकल्पमाह—आहोस्विदिति । दर्शितो विषयः शब्दादिः सत्त्वपुरुषान्यता च[१] येन चित्तेन तस्य तद्विषयस्यानुत्पादः । एतदेव स्फोरयति—स्वस्मिन्दृश्ये शब्दादौ सत्त्वपुरुषान्य- तायां चेति । तावदेव प्रधानं विचेष्टते न यावद्द्विविधं दर्शनमभिनिर्वर्तयति । निष्पादितोभयदर्शनं तु निवर्तत इति ।

पर्युदास एव तृतीयं विकल्पमाह—किमर्थवत्ता गुणानाम् । सत्कार्यवादसिद्धौ हि भाविनावपि भोगापवर्गावर्थावव्यपदेश्यतया स्त इत्यर्थः। पर्युदास एव चतुर्थं विक- ल्पमाह—अथाविद्या प्रतिसर्गकाले स्वचित्तेन सह निरुद्धा प्रधानसाम्यमागता वासनारूपेण स्वचित्तोत्पत्तिबीजम् । तेन दर्शनादन्याऽविद्यावासनैवादर्शनमुक्ता । पर्यु- दास एव पञ्चमं विकल्पमाह—किं स्थितिसंस्कारस्य प्रधानवर्तिनः साम्यपरिणामपरम्प- रावाहिनः क्षये गतिर्महदादिविकारारम्भस्तद्धेतुः संस्कारः प्रधानस्य गतिसंस्कारस्त-

---

१ ख. ज. °द्धया हि वि° । २ °ताख्यातिश्च ये° । ३ ख. वा ।

राभिव्यक्तिः । यत्रेदमुक्तं प्रधानं स्थित्यैव वर्तमानं विकारा-करणादप्रधानं स्यात् ।

तथा गत्यैव वर्तमानं विकारनित्यत्वादप्रधानं स्यात् । उभ-यथा चास्य वृत्तिः प्रधानव्यवहारं लभते नान्यथा । कारणान्त-रेष्वपि कल्पितेष्वेव समानश्चर्चः । दर्शनशक्तिरेवादर्शनमित्येके, "प्रधानस्याऽऽत्मख्यापनार्था प्रवृत्तिः" इति श्रुतेः ।

सर्वबोध्यबोधसमर्थः प्राक्प्रवृत्तेः पुरुषो न पश्यति सर्वकार्य-करणसमर्थं दृश्यं तदा न दृश्यत इति । उभयस्याप्यदर्शनं धर्म इत्येके ।

---

स्याभिव्यक्तिः कार्योन्मुखत्वम् । तदुभयसंस्कारसद्भावे मतान्तरानुमतिमाह—**यत्रेदमुक्त**-मैकान्तिकत्वं व्यासेधद्भिः, प्रधीयते जन्यते विकारजातमनेनेति **प्रधानं** तच्चेत्स्थित्यैव व-र्तेत न कदाचिद्गत्या ततो **विकाराकरणान्न** प्रधीयते तेन किंचिदित्य**प्रधानं स्यात्** ।

अथ गत्यैव वर्तेत न कदाचिदपि स्थित्या तत्राऽऽह—**तथा गत्यैवेति** । क्वचित्पाठः "स्थित्यै गत्यै" इति । तादर्थ्ये चतुर्थी, एवकारश्च द्रष्टव्यः । स्थित्यै चेन्न वर्तेत न क्वचिद्विकारो विनश्येत् । तथा च भावस्य सतोऽविनाशिनो नोत्पत्तिरपीति विका-रत्वादेव च्यवेत । एवं च न प्रधीयतेऽत्र किंचिदित्यप्रधानं स्यात्तदुभयथा स्थित्या गत्या चास्य वृत्तिः प्रधानव्यवहारं लभते नान्यथैकान्ताभ्युपगमे । न केवलं प्रधाने कारणा-न्तरेष्वपि परब्रह्मतन्मायापरमाण्वादिषु कल्पितेषु समानश्चर्चो विचारः । तान्यपि हि स्थित्यैव वर्तमानानि विकाराकरणादकारणानि स्युः, गत्यैव वर्तमानानि विकारनित्य-त्वादकारणानि स्युरिति च । पर्युदास एव षष्ठं विकल्पमाह—**दर्शनशक्तिरेवेति** । यथा प्रजापतिव्रते नेक्षेतोद्यन्तमादित्यमित्यनीक्षणप्रत्यासन्नः संकल्पो गृह्यत एवमिहापि दर्शननिषेधे तत्प्रत्यासन्ना तन्मूला शक्तिरुच्यते । सा च दर्शनं भोगादिलक्षणं प्रसोतुं द्रष्टारं दृश्येन योजयतीति । अत्रैव श्रुतिमाह—**प्रधानस्येति** ।

स्यादेतत् । आत्मख्यापनार्थं प्रधानं प्रवर्तत इति श्रुतिराह न त्वात्मदर्शनशक्तेः प्रव-र्तत इत्यत आह—**सर्वबोध्यबोधसमर्थ इति** । प्राक्प्रवृत्तेः प्रधानस्य नाऽऽत्मख्यापन-मात्रं प्रवृत्तौ प्रयोजकमसामर्थ्ये तदयोगात्तस्मात्सामर्थ्यं प्रवृत्तेः प्रयोजकमिति श्रुत्याऽर्था-दुक्तमित्यर्थः । दर्शनशक्तिः[1] प्रधानाश्रयेत्यङ्गीकृत्य षष्ठः कल्पः । इमामेवोभयाश्रया-मास्थाय सप्तमं विकल्पमाह—**उभयस्य** पुरुषस्य च **दृश्यस्य चादर्शनं दर्शनश-क्तिर्धर्म इत्येके** ।

---

१ क. ख. झ. °शक्तिः । प्र° ।

तत्रेदं दृश्यस्य स्वात्मभूतमपि पुरुषप्रत्ययापेक्षं दर्शनं दृश्यधर्मत्वेन भवति। तथा पुरुषस्यानात्मभूतमपि दृश्यप्रत्ययापेक्षं पुरुषधर्मत्वेनेवादर्शनमवभासते। दर्शनं ज्ञानमेवादर्शनमिति केचिदभिदधति। इत्येते शास्त्रगता विकल्पाः। तत्र विकल्पबहुत्वमेतत्सर्वपुरुषाणां गुणानां संयोगे साधारणविषयम् ॥ २३ ॥

यस्तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोगः—

**तस्य हेतुरविद्या ॥ २४ ॥**

---

स्यादेतत्। मृष्यामहे दृश्यस्येति, तस्य सर्वशक्त्याश्रयत्वान्न द्रष्टुरिति पुनर्मृष्यामः। न हि तदाधारा ज्ञानशक्तिस्तत्र ज्ञानस्यासमवायादन्यथा परिणामापत्तिरित्यत आह—**तत्रेदमिति**। भवतु दृश्यात्मकं तथाऽपि तस्य जडत्वेन तद्गतशक्तिकार्यं दर्शनमपि जडमिति न शक्यं तद्धर्मत्वेन विज्ञातुं जडस्य स्वयमप्रकाशत्वादतो दृशेरात्मनः प्रत्ययं चैतन्यच्छायापत्तिमपेक्ष्य दर्शनं तद्धर्मत्वेन भवतीति ज्ञायते विषयेण विषयिणो लक्षणात्। नन्वेतावताऽपि दृश्यधर्मत्वमस्य ज्ञानस्य भवति न तु पुरुषधर्मत्वमपीत्यत आह—**तथा पुरुषस्येति**। सत्यं पुरुषस्यानात्मभूतमेव तथाऽपि दृश्यबुद्धिसत्त्वस्य यः प्रत्ययश्चैतन्यच्छायापत्तिस्तमपेक्ष्य पुरुषधर्मत्वेनेव न तु पुरुषधर्मत्वेन। एतदुक्तं भवति—चैतन्यबिम्बोद्ग्राहितया बुद्धिचैतन्ययोरभेदाद्बुद्धिधर्माश्चैतन्यधर्मा इव चकासतीति। अष्टमं विकल्पमाह—दर्शनं ज्ञानमेव शब्दादीनामदर्शनं न तु सत्त्वपुरुषान्यताया इति केचित्। यथा चक्षुरूपे प्रमाणमपि रसादावप्रमाणमुच्यते। एतदुक्तं भवति—सुखाद्याकारशब्दादिज्ञानानि स्वसिद्ध्यनुगुणतया द्रष्टृदृश्यसंयोगमाक्षिपन्तीति। तदेवं विकल्प्य चतुर्थं विकल्पं स्वीकर्तुमितरेषां विकल्पानां सांख्यशास्त्रगतानां सर्वपुरुषसाधारण्येन भोगवैचित्र्याभावप्रसङ्गेन दूषयति—**इत्येते शास्त्रगता इति** ॥ २३ ॥

चतुर्थं विकल्पं निर्धारयितुं सूत्रमवतारयति—**यस्तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोग इति**। प्रतीपमञ्चति प्राप्नोतीति प्रत्यगसाधारणस्तु संयोग एकैकस्य पुरुषस्यैकैकया बुद्ध्या वैचित्र्यहेतुः। सूत्रं पठति—**तस्येति**। नन्वविद्या विपर्ययज्ञानं तस्य भोगापवर्गयोरिव स्वबुद्धिसंयोगो हेतुः। असंयुक्तायां बुद्धौ तदनुत्पत्तेस्तत्कथमविद्या

---

१ घ. ङ. °त्ययमपेक्ष्य द° । च. °त्ययमपेक्ष्याद° । २ छ. °पेक्षमद° । ३ घ. च. °त्ययमपेक्ष्य पु° । ४ ख. °त्वेनैवा° । ५ ग. घ. ङ. छ. गुणसं° । ६ ख. °वतीति ज्ञा° । ७ झ. °ति विज्ञा° । ८ ख. ज. °तदतो भ° । ९ ज. प्रत्यञ्च° । झ. प्रति प्रत्यञ्च° ।

* विपर्ययज्ञानवासनेत्यर्थः । विपर्ययज्ञानवासनावासिता च न कार्यनिष्ठां पुरुषख्यातिं बुद्धिः प्राप्नोति साधिकारा पुनरावर्तते । सा तु पुरुषख्यातिपर्यवसानां कार्यनिष्ठां प्राप्नोति, चरिताधिकारा निवृत्तादर्शना बन्धकारणाभावान्न पुनरावर्तते ।

अत्र कश्चित्पण्डकोपाख्यानेनोद्घाटयति—मुग्धया भार्ययाऽभिधीयते—पण्डकाऽऽर्यपुत्र, अपत्यवती मे भगिनी किमर्थं नाम नाहमिति। स तामाह—मृतस्तेऽहमपत्यमुत्पादयिष्यामीति। तथेदं विद्यमानं ज्ञानं चित्तनिवृत्तिं न करोति, विनष्टं करिष्यतीति का प्रत्याशा । तत्राऽऽचार्यदेशीयो वक्ति—ननु बुद्धिनिवृत्तिरेव मोक्षोऽदर्शनकारणाभावाद्बुद्धिनिवृत्तिः । तच्चादर्शनं

---

संयोगभेदस्य हेतुरित्यत आह—विपर्ययज्ञानवासनेति । सर्गान्तरीयाया अविद्यायाः स्वचित्तेन सह निरुद्धाया अपि प्रधानेऽस्ति वासना । तद्वासनावासितं च प्रधानं तत्तत्पुरुषसंयोगिनीं तादृशीमेव बुद्धिं सृजति । एवं पूर्वपूर्वसर्गेष्वित्यनादित्वाददोषः । अत एव प्रतिसर्गावस्थायां न पुरुषो मुच्यत इत्याह—विपर्ययज्ञानेति । यदा पुरुषख्यातिं कार्यनिष्ठां प्राप्ता तदा विपर्ययज्ञानवासनाया बन्धकारणस्याभावान्न पुनरावर्तत इत्याह—सा त्विति ।

अत्र कश्चिन्नास्तिकः कैवल्यं पण्डकोपाख्यानेनोपहसति । पण्डकोपाख्यानमाह—मुग्धयेति । किमर्थमित्यर्थशब्दो निमित्तमुपलक्षयति । प्रयोजनस्यापि निमित्तत्वात् । पण्डकोपाख्यानेन साम्यमापादयति—तथेदं विद्यमानं गुणपुरुषान्यताज्ञानं चित्तनिवृत्तिं न करोति, परवैराग्येण ज्ञानप्रसादमात्रेण ससंस्कारं निरुद्धं विनष्टं करिष्यतीति का प्रत्याशा । यस्मिन्सत्येव यद्भवति तत्तस्य कार्यम् । न तु यस्मिन्नसतीति भावः । अत्रैकदेशिमतेन परिहारमाह—तत्रेति । ईषदपरिसमाप्त आचार्य आचार्यदेशीयः । आचार्यस्तु वायुप्रोक्ते कृतलक्षणः—

आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते ॥ [ वा०पु०५९।३ ] इति ।

भोगविवेकख्यातिरूपपरिणतबुद्धिनिवृत्तिरेव मोक्षः । न च बुद्धिस्वरूपनिवृत्तिः । सा च धर्ममेघान्तविवेकख्यातिप्रतिष्ठाया अनन्तरमेव भवति सत्यपि बुद्धिस्वरूपमात्रावस्थान इत्यर्थः । एतदेव स्फोरयति—अदर्शनस्य बन्धकारणस्याभावाद्बुद्धिनि-

---

* एतस्मात्प्राक्, ङ. पुस्तके ' बुद्धिसंयोगस्य हेतुः ' इति पाठो विद्यते स प्रामादिकः ।

१ ग. घ. ङ. च. °ता न । २ ङ. °रुषान्यताख्या° । ३ ग. घ. ङ. °साना का° । ४ ख. ज. सत्पु° । ५ क. °प्रोक्तलक्ष° ।

बन्धकारणं दर्शनान्निवर्तते । तत्र चित्तनिवृत्तिरेव मोक्षः, किमर्थमस्थान एवास्य मतिविभ्रमः ॥ २४ ॥

हेयं दुःखं हेयकारणं च संयोगाख्यं सनिमित्तमुक्तमतः परं हानं वक्तव्यम्—

तदभावात्संयोगाभावो हानं
तद्दृशेः कैवल्यम् ॥२५॥

तस्यादर्शनस्याभावाद्बुद्धिपुरुषसंयोगाभाव आत्यन्तिको बन्धनोपरम इत्यर्थः। एतद्धानम्। तद्दृशेः कैवल्यं पुरुषस्यामिश्रीभावः पुनरसंयोगो गुणैरित्यर्थः। दुःखकारणनिवृत्तौ दुःखोपरमो हानं, तदा स्वरूपप्रतिष्ठः पुरुष इत्युक्तम् ॥ २५ ॥

अथ हानस्य कः प्राप्त्युपाय इति—

विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥

---

वृत्तिः। तच्चादर्शनं बन्धकारणं दर्शनान्निवर्तते । दर्शननिवृत्तिस्तु परवैराग्यसाध्या । सत्यपि बुद्धिस्वरूपावस्थाने मोक्ष इति भावः। एकदेशिमतमुपन्यस्य स्वमतमाह—तत्र चित्तनिवृत्तिरेव मोक्षः । ननूक्तं दर्शने निवृत्तेऽचिराच्चित्तस्वरूपनिवृत्तिर्भवतीति कथं दर्शनकार्येत्यत आह—किमर्थमस्थाने मतिविभ्रम इति । अयमभिसंधिः। यदि दर्शनस्य साक्षाच्चित्तनिवृत्तौ कारणभावमङ्गीकुर्वीमहि तत एवमुपालभ्येमहि । किंतु विवेकदर्शनं प्रकर्षकाष्ठां प्राप्तं निरोधसमाधिभावनाप्रकर्षक्रमेण चित्तनिवृत्तिमत्पुरुषस्वरूपावस्थानोपयोगीत्यातिष्ठामहे तत्कथमुपालभ्येमहीति ॥२४॥

तदेवं व्यूहद्वयमुक्त्वा तृतीयव्यूहाभिधानाय सूत्रमवतारयति—हेयं दुःखमिति । तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् । व्याचष्टे—तस्येति । अस्ति हि महाप्रलयेऽपि संयोगाभावोऽत उक्तमात्यन्तिक इति । दुःखोपरमो हानमिति पुरुषार्थता दर्शिता । शेषमतिरोहितम्[1] ॥ २५ ॥

हानोपायलक्षणं चतुर्थं व्यूहमाख्यातुं सूत्रमवतारयति—अथेति । विवेकख्यातिरविप्लवा हानोपायः । आगमानुमानाभ्यामपि विवेकख्यातिरस्ति। न चासौ व्युत्थानं तत्संस्कारं वा निवर्तयति तद्वतोऽपि तदनुवृत्तेरिति तन्निवृत्त्यर्थमविप्लवेति । विप्लवो मिथ्याज्ञानं तद्रहिता । एतदुक्तं भवति—श्रुतमयेन ज्ञानेन विवेकं गृहीत्वा युक्तिमयेन च व्यवस्थाप्य दीर्घकालनैरन्तर्यसत्कारासेविताया भावनायाः प्रकर्षपर्यन्तं

---

१ ख. ङ. °हितार्थम् ।

सत्त्वपुरुषान्यताप्रत्ययो विवेकख्यातिः । सा त्वनिवृत्तमिथ्याज्ञाना प्लवते । यदा मिथ्याज्ञानं दग्धबीजभावं वन्ध्यप्रसवं संपद्यते तदा विधूतक्लेशरजसः सत्त्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्तमानस्य विवेकप्रत्ययप्रवाहो निर्मलो भवति । सा विवेकख्यातिरविप्लवा हानोपायः[1] । ततो मिथ्याज्ञानस्य दग्धबीजभावोपगमः पुनश्चाप्रसव इत्येष मोक्षस्य मार्गो हानस्योपाय इति ॥ २६ ॥

**तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥**

तस्येति प्रत्युदितख्यातेः प्रत्याम्नायः । सप्तधेत्यशुद्ध्यावरणमलापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे सति सप्तप्रकारैव[2] प्रज्ञा विवेकिनो भवति ।

तद्यथा—परिज्ञातं हेयं नास्य पुनः परिज्ञेयमस्ति । क्षीणा हेयहेतवो न पुनरेतेषां क्षेतव्यमस्ति । साक्षात्कृतं निरोधसमा-

---

समधिगता साक्षात्कारवती विवेकख्यातिर्निवर्तितसवासनमिथ्याज्ञाना निर्विप्लवा हानोपाय इति । शेषं सुगमं भाष्यम् ॥ २६ ॥

विवेकख्यातिनिष्ठायाः स्वरूपमाह सूत्रेण—तस्य सप्तधा प्रान्तभूमिः प्रज्ञा । व्याचष्टे—तस्येति । प्रत्युदितख्यातेर्वर्तमानख्यातेर्योगिनः प्रत्याम्नायः परामर्शः । अशुद्धिरेवाऽऽवरणं चित्तसत्त्वस्य तदेव मलं तस्यापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे तामसराजसव्युत्थानप्रत्ययानुत्पादे निर्विप्लवविवेकख्यातिनिष्ठामापन्नस्य सप्तप्रकारैव प्रज्ञा विवेकिनो भवति । विषयभेदात्प्रज्ञाभेदः । प्रकृष्टोऽन्तो यासां भूमीनामवस्थानां तास्तथोक्ताः । यतः परं नास्ति स प्रकर्षः । प्रान्ता भूमयो यस्याः प्रज्ञाया विवेकख्यातेः सा तथोक्ता ।

ता एव सप्तप्रकाराः प्रान्तभूमीरुदाहरति—तद्यथेति । तत्र पुरुषप्रयत्ननिष्पाद्यासु चतसृषु भूमिषु प्रथमामुदाहरति—परिज्ञातं हेयम् । यावत्किल प्राधानिकं तत्सर्वं परिणामतापसंस्कारैर्गुणवृत्तिविरोधाद्दुःखमेवेति हेयं तत्परिज्ञातम् । प्रान्ततां दर्शयति—**नास्य पुनः** किंचिदपरिज्ञातं परिज्ञेयमस्ति । द्वितीयामाह—**क्षीणा इति** । प्रान्ततामाह—न **पुनरिति** । तृतीयामाह—साक्षात्कृतं प्रत्यक्षेण निश्चितं मया संप्रज्ञातावस्था-

---

१ ग. घ. ङ. च. °हानस्योपा° । २ क. ख. छ. °ति सप्तधैव स° ।

धिना हानम् । भावितो विवेकख्यातिरूपो हानोपाय इति । एषा चतुष्टयी कार्या विमुक्तिः प्रज्ञायाः । चित्तविमुक्तिस्तु त्रयी चरिताधिकारा बुद्धिः । गुणा गिरिशिखरतटच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति । न चैषां प्रविलीनानां पुनरस्त्युत्पादः प्रयोजनाभावादिति । एतस्यामवस्थायां गुणसंबन्धातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुष इति । एतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन्पुरुषः कुशल इत्याख्यायते । प्रतिप्रसवेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति ॥ २७ ॥

सिद्धा भवति विवेकख्यातिर्हानोपाय इति, न च सिद्धिरन्तरेण साधनमित्येतदारभ्यते—

**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः ॥ २८ ॥**

---

यामेव निरोधसमाधिसाध्यं हानं, न पुनरस्याः परं निश्चेतव्यमस्तीति शेषः । चतुर्थीमाह—**भावितो** निष्पादितो **विवेकख्यातिरूपो हानोपायो** नास्याः परं भावनीयमस्तीति शेषः । एषा चतुष्टयी कार्या विमुक्तिः समाप्तिः, कार्यतया प्रयत्नव्याप्यता दर्शिता । क्वचित्पाठः **कार्याविमुक्तिरिति** । कार्यान्तरेण विमुक्तिः प्रज्ञाया इत्यर्थः । प्रयत्ननिष्पाद्यानुनिष्पादनीयामप्रयत्नसाध्यां चित्तविमुक्तिमाह—**चित्तविमुक्तिस्तु त्रयी** । प्रथमामाह—**चरिताधिकारा बुद्धिः** । कृतभोगापवर्गकार्येत्यर्थः । द्वितीयामाह—**गुणा** इति । प्रान्ततमामाह—**न चैषामिति** । तृतीयामाह—**एतस्यामवस्थायामिति** । एतस्यामवस्थायां जीवन्नेव पुरुषः कुशलो मुक्त इत्युच्यते चरमदेहत्वादित्याह—**एतामिति** । अनौपचारिकं मुक्तमाह—**प्रतिप्रसवे** प्रधानलयेऽपि **चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति** ॥ २७ ॥

तदेवं चतुरो व्यूहानुक्त्वा तन्मध्यपतितस्य हानोपायस्य विवेकख्यातेर्गोदोहनादिवत्प्रागसिद्धेरसिद्धस्य चोपायत्वाभावात्सिद्ध्युपायान्वक्तुमारभत इत्याह—**सिद्धेति** । तत्राभिधास्यमानानां साधनानां येन प्रकारेण विवेकख्यात्युपायत्वं तद्दर्शयति सूत्रेण—**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः** । योगाङ्गानि हि यथा-

---

१ ङ. छ. °कार्यवि° । २ ग. च. °रकूट° । ३ ग. °पायः, न । ४ च. °मित्यतस्तदा° ।

योगाङ्गान्यष्टावभिधायिष्यमाणानि । तेषामनुष्ठानात्पञ्चपर्वणो विपर्ययस्याशुद्धिरूपस्य क्षयो नाशः । तत्क्षये सम्यग्ज्ञानस्याभिव्यक्तिः । यथा यथा च साधनान्यनुष्ठीयन्ते तथा तथा तनुत्वमशुद्धिरापद्यते । यथा यथा च क्षीयते तथा तथा क्षयक्रमानुरोधिनी ज्ञानस्यापि दीप्तिर्विवर्धते । सा खल्वेषा विवृद्धिः प्रकर्षमनुभवत्या विवेकख्यातेः, आ गुणपुरुषस्वरूपविज्ञानादित्यर्थः । योगाङ्गानुष्ठानमशुद्धेर्वियोगकारणम् । यथा परशुश्छेद्यस्य । विवेकख्यातेस्तु प्राप्तिकारणं यथा धर्मः सुखस्य नान्यथा कारणम् । कति चैतानि कारणानि शास्त्रे भवन्ति । नवैवेत्याह । तद्यथा—

उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः ।<br>
वियोगान्यत्वधृतयः कारणं नवधा स्मृतम् ॥ इति ।

तत्रोत्पत्तिकारणं मनो भवति विज्ञानस्य, स्थितिकारणं मनसः पुरुषार्थता, शरीरस्येवाऽऽहार इति । अभिव्यक्तिकारणं

---

योगं दृष्टादृष्टद्वारेणाशुद्धिं क्षिण्वन्ति । पञ्चपर्वणो विपर्ययस्येत्युपलक्षणं पुण्यापुण्ययोरपि । जात्यायुर्भोगहेतुत्वेनाशुद्धिरूपत्वादिति । शेषं सुगमम् । नानाविधस्य कारणभावस्य दर्शनाद्योगाङ्गानुष्ठानस्य कीदृशं कारणत्वमित्यत आह—**योगाङ्गानुष्ठानमिति** । अशुद्ध्या वियोजयति बुद्धिसत्त्वमित्यशुद्धेर्वियोगकारणम् । दृष्टान्तमाह—**यथा परशुरिति** । परशुश्छेद्यं वृक्षं मूलेन वियोजयति । अशुद्ध्या वियोजयद्बुद्धिसत्त्वं विवेकख्यातिं प्रापयति । यथा धर्मः सुखम् । तैथा योगाङ्गानुष्ठानं विवेकख्यातेः प्राप्तिकारणं नान्येन प्रकारेणेत्याह—**विवेकख्यातेस्त्विति** । नान्यथेति प्रतिषेधश्रवणात्पृच्छति—**कति चैतानीति** । उत्तरम्—**नवैवेति** । तानि दर्शयति कारिकया—**तद्यथा**—**उत्पत्तीति** ।

अत्रोदाहरणान्याह—**तत्रोत्पत्तिकारणमिति** । मनो हि विज्ञानमव्यपदेश्यावस्थातोऽपनीय वर्तमानावस्थामापादयदुत्पत्तिकारणं विज्ञानस्य । **स्थितिकारणं मनसः पुरुषार्थता** । अस्मिताया उत्पन्नं मनस्तावदवतिष्ठते न यावद्द्विविधं पुरुषार्थमभिनिर्वर्तयति । अथ निर्वर्तितपुरुषार्थद्वयं स्थितेरपैति । तस्मात्स्वकारणादुत्पन्नस्य मनसोऽनागतपुरुषार्थता स्थितिकारणम् । दृष्टान्तमाह—**शरीरस्येवेति** । प्रत्यक्षज्ञाननिमित्त-

---

१ क. ख. घ. ङ. च. छ. ॰ति ज्ञा॰ । २ ज. तस्माद्योगा॰ ।

**यथा रूपस्याऽऽलोकस्तथा रूपज्ञानं, विकारकारणं मनसो विषयान्तरम् । यथाऽग्निः पाक्यस्य । प्रत्ययकारणं धूमज्ञानमग्नि-ज्ञानस्य । प्राप्तिकारणं योगाङ्गानुष्ठानं विवेकख्यातेः ।**

**वियोगकारणं तदेवाशुद्धेः । अन्यत्वकारणं यथा सुवर्णस्य सुवर्णकारः । एवमेकस्य स्त्रीप्रत्ययस्याविद्या मूढत्वे द्वेषो दुःखत्वे**

मिन्द्रियद्वारा वा स्वतो वा विषयस्य संस्क्रियाऽभिव्यक्तिस्तस्याः कारणं यथा रूप-स्याऽऽलोकः । **विकारकारणं मनसो विषयान्तरम्** । यथा हि[1] कण्डोः समाहित-मनसो[2] वल्लकीविपञ्च्यमानपञ्चमस्वरश्रवणसमनन्तरमुन्मीलिताक्षस्य स्वरूपलावण्ययौव-नसंपन्नामप्सरसं प्रम्लोचामीक्षमाणस्य समाधिमपहाय तस्यां सक्तं[3] मनो बभूवेति । अत्रैव निदर्शनमाह—**यथाऽग्निः पाक्यस्य** तण्डुलादेः कठिनावयवसंनिवेशस्य प्रशिथिलावयवसंयोगलक्षणस्य विकारस्य करणम् । सत एव विषयस्य **प्रत्ययका-रणं धूमज्ञानमग्निज्ञानस्येति** । ज्ञायत इति ज्ञानमग्निश्चासौ ज्ञानं चेत्यग्निज्ञानं तस्य । एतदुक्तं भवति—वर्तमानस्यैवाग्नेर्ज्ञेयस्य प्रत्ययकारणतया कारणमिति । औत्सर्गिकी निरपेक्षाणां कारणानां कार्यक्रिया प्राप्तिस्तस्याः कुतश्चिदपवादोऽप्राप्तिः । यथा निम्नोपसर्पणस्वभावानामपां प्रतिबन्धः सेतुना तथेहापि बुद्धिसत्त्वस्य सुखप्रकाशशी-लस्य स्वाभाविकी सुखविवेकख्यातिजनकता प्राप्तिः । सा कुतश्चिदधर्मात्तमसो वा प्रतिबन्धान्न भवति । धर्माद्योगाङ्गानुष्ठानाद्वा तदपनये तदप्रतिबद्धवृत्तिस्वभावत एव तज्जनकतया तदाप्नोति । यथा वक्ष्यति—" निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् " [ यो० सू० ४ । ३ ] इति ।

तदेवं विवेकख्यातिलक्षणकार्यापेक्षया प्राप्तिकारणमुक्तम् । अवान्तरकार्यापेक्षया तु तदेव वियोगकारणमित्याह—**वियोगकारणमिति** । अन्यत्वकारणमाह—**अन्यत्व-कारणं यथा सुवर्णकारः सुवर्णस्य,** कटककुण्डलकेयूरादिभ्यो भिन्नाभिन्नस्य भेद-विवक्षया कटकादिभिन्नस्याभेदाविवक्षया कटकाद्यभिन्नस्य सुवर्णस्य कुण्डलादन्यत्वम् । तथा च कटककारी सुवर्णकारः कुण्डलादभिन्नात्सुवर्णादन्यत्कुर्वन्नन्यत्वकारणम् । अग्निरपि पाक्यस्यान्यत्वकारणं यद्यपि तथाऽपि धर्मिणो धर्मयोः पुलाकत्वतण्डुलत्वयो-र्भेदाविवक्षया धर्मयोरुपजनापाये[4]ऽपि धर्म्यनुवर्तत इति न तस्यान्यत्वं शक्यं वक्तुमिति विकारमात्रकारणत्वमुक्तमिति न संकरः । न च संस्थानभेदो धर्मिणोऽन्यत्वकारणमिति व्याख्येयम् । सुवर्णकार इत्यस्यासंगतेः । बाह्यमन्यत्वकारणमुपन्यस्याऽऽध्यात्मिकमुदा-हरति—**एवमेकस्येति** । अविद्या कमनीयेयं कन्यकेत्यादिज्ञानम्[5] । तन्मोहयोगात्स एव

१ क. ख. झ. हि मृक° । २ ख. ज. °हितं मनो व° । ३ ख. ज. °क्तं ब° । ४ ज. °पाय-भावेऽपि । ५ झ. °म् । संमोह° ।

रागः सुखत्वे तत्त्वज्ञानं माध्यस्थ्ये । धृतिकारणं शरीरमिन्द्रियाणाम् । तानि च तस्य महाभूतानि शरीराणां, तानि च परस्परं सर्वेषां तैर्यग्यौनमानुषदैवतानि च परस्परार्थत्वादित्येवं नव कारणानि । तानि च यथासंभवं पदार्थान्तरेष्वपि योज्यानि । योगाङ्गानुष्ठानं तु द्विधैव कारणत्वं लभत इति ॥ २८ ॥

तत्र योगाङ्गान्यवधार्यन्ते—

**यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥ २९ ॥**

---

स्त्रीप्रत्ययो मूढो विषण्णो भवति चैत्रस्य मैत्रस्य पुण्यवतो बत कलत्ररत्नमेतन्न तु मम भाग्यहीनस्येति । एवं सपत्नीजनस्य तस्यां द्वेषः स्त्रीप्रत्ययस्य दुःखत्वे । एवं मैत्रस्य तस्या भर्तू रागस्तस्यैव स्त्रीप्रत्ययस्य सुखत्वे । तत्त्वज्ञानं त्वङ्मांसमेदोऽस्थिमज्जासमूहः स्त्रीकायः स्थानबीजादिभिरशुचिरिति विवेकिनां माध्यस्थ्ये वैराग्ये कारणमिति । धृतिकारणं शरीरमिन्द्रियाणां विधारकमिन्द्रियाणि च शरीरस्य सामान्यीकरणवृत्तिर्हि प्राणाद्या वायवः पञ्च तदभावे शरीरपातात् । एवं मांसादिकीयाङ्गानामपि परस्परविधार्यविधारकत्वम् । एवं महाभूतानि पृथिव्यादीनि मनुष्यवरुणसूर्यगन्धवहशशिलोकनिवासिनां शरीराणां, तानि च परस्परं, पृथिव्यां हि गन्धरसरूपस्पर्शशब्दगुणायां पञ्च महाभूतानि परस्परं विधार्यविधारकभावेनावस्थितान्यप्सु चत्वारि तेजसि त्रीणि द्वे च मातरिश्वनीति । तैर्यग्यौनमानुषदैवतादीनि च विधार्यविधारकभावेनावस्थितानि । नन्वाधाराधेयभावरहितानां कुतस्तत्त्वमित्यत आह—परस्परार्थत्वादिति । मनुष्यशरीरं हि पशुपक्षिमृगसरीसृपस्थावरशरीरोपयोगेन ध्रियते । एवं व्याघ्रादिशरीरमपि मनुष्यपशुमृगादिशरीरोपयोगेन । एवं पशुमृगादिशरीरमपि स्थावराद्युपयोगेन । एवं दैवशरीरमपि मनुष्योपहृतच्छागमृगकपिञ्जलमांसाज्यपुरोडाशसहकारशाखाप्रस्तरादिभिरिज्यमानं तदुपयोगेन । एवं देवताऽपि वरदानवृष्ट्यादिभिर्मनुष्यादीनि धारयतीत्यस्ति परस्परार्थत्वमित्यर्थः । शेषं सुगमम् ॥ २८ ॥

संप्रति न्यूनाधिकसंख्याव्यवच्छेदार्थं योगाङ्गान्यवधारयति—**तत्र योगाङ्गान्यवधार्यन्त इति । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाव-**

---

१ क. °मान्यक° । २ ज. °न्याकारेण । ३ क. °वृत्तोर्हि । ४ ख. ज. °काङ्गा° । ५ ज. °पकृत° ।

यथाक्रममेषामनुष्ठानं स्वरूपं च वक्ष्यामः ॥ २९ ॥

तत्र—

अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ॥ ३० ॥

तत्राहिंसा सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः । उत्तरे च यमनियमास्तन्मूलास्तत्सिद्धिपरतयैव तत्प्रतिपादनाय प्रतिपाद्यन्ते। तदवदातरूपकरणायैवोपादीयन्ते । तथा चोक्तम्—स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सते तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो निवर्तमानस्तामेवावदातरूपा-महिंसां करोति ।

सत्यं यथार्थे वाङ्मनसे। यथा दृष्टं यथाऽनुमितं तथा वाङ्म-नश्चेति । परत्र स्वबोधसंक्रान्तये वागुक्ता, सा यदि न वञ्चिता

ङ्गानि । अभ्यासवैराग्यश्रद्धावीर्यादयोऽपि यथायोगमेतेष्वेव स्वरूपतो नान्तरीकतया चान्तर्भावयितव्याः ॥ २९ ॥

यमनियमाङ्गान्युद्दिश्य यमनिर्देशकं[3] सूत्रमवतारयति—तत्रेति । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः। योगाङ्गमहिंसामाह—सर्वथेति । ईदृशीमहिंसां स्तौति—उत्तरे चेति । तन्मूला इत्यहिंसामपरिपाल्य कृता अप्यकृतकल्पा निष्फलत्वादित्यर्थः। तत्सिद्धिपरतयैवानुष्ठानम् । अहिंसा चेन्मूलमुत्तरेषां कथं तेऽहिंसासिद्धिपरा इत्यत आह—तत्प्रतिपादनायेति । सिद्धिर्ज्ञानं नोत्पत्तिरित्यर्थः । स्यादेतत् । अहिंसा-ज्ञानार्था यद्युत्तरे कृतं तैरन्यत एव तदवगमादित्यत आह—तदवदातेति । यद्युत्तरे नानुष्ठीयेरन्नहिंसा मलिना स्यादसत्यादिभिरित्यर्थः । अत्रैवाऽऽगमिकानां संमतिमाह—तथा चेति । सुगमम् ।

सत्यलक्षणमाह—यथार्थे वाङ्मनसे इति । यथाशब्दं साकाङ्क्षं पूरयति—यथा दृष्टमिति । प्रतिसंबन्धिनं तथाशब्दं प्रतिक्षिपति[4]—तथा वाङ्मनश्च विवक्षायां कर्तव्यायामिति । अन्यथा तु न सत्यमेतत्सोपपत्तिकमाह—परत्र पुरुषे स्वबोधसं-क्रान्तये स्वबोधसदृशबोधजननाय वागुक्तोच्चारिता, अतः सा यदि न वञ्चिता वञ्चिका यथा द्रोणाचार्येण स्वतनयाश्वत्थाममरणमायुष्मन्सत्यधनाश्वत्थामा हत इति पृष्टस्य युधिष्ठिरस्य प्रतिवचनं हस्तिमभिसंधाय सत्यं हतोऽश्वत्थामेति,

१ ग. °मः । अ° । २ ग. घ. ङ. °तया त° । ३ ज. °निदर्शकं । ४ ज. प्राक्षि° ।

भ्रान्ता वा प्रतिपत्तिवन्ध्या वा भवेदिति । एषा सर्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय । यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यान्न सत्यं भवेत्पापमेव भवेत्तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टं तमः प्राप्नुयात् । तस्मात्परीक्ष्य सर्वभूतहितं सत्यं ब्रूयात् ।

स्तेयमशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणं, तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयमिति । ब्रह्मचर्यं गुप्तेन्द्रियस्योपस्थस्य संयमः । विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणमपरिग्रह इत्येते यमाः ॥ ३० ॥

---

तदिदमुक्तस्योत्तरं न युधिष्ठिरस्य स्वबोधं संक्रामयति । स्वबोधो ह्यस्य हस्तिहननविषय इन्द्रियजन्मा, न चासौ संक्रान्तः किंत्वन्य एव तस्य तनयवधबोधो जात इति । भ्रान्ता वा भ्रान्तिजा वा, भ्रान्तिश्च विवक्षासमये वा ज्ञेयार्थावधारणसमये वा । प्रतिपत्त्या वन्ध्या प्रतिपत्तिवन्ध्या यथाऽर्थान्प्रति म्लेच्छभाषा प्रतिपत्तिवन्ध्या, निष्प्रयोजना वा स्यादिति यथाऽनपेक्षिताभिधाना वाक्तत्र हि परत्र स्वबोधस्य संक्रान्तिरप्यसंक्रान्तिरेव निष्प्रयोजनत्वादिति । एवंलक्षणमपि सत्यं परापकारफलं सत्याभासं न तु सत्यमित्याह—**एषेति** । तद्यथा सत्यतपसस्तस्करैः सार्थगमनं पृष्टस्य सार्थगमनाभिधानमिति । अभिधीयमानोच्चार्यमाणा । शेषं सुगमम् ।

अभावस्य भावाधीननिरूपणतया स्तेयलक्षणमाह—**स्तेयमशास्त्रपूर्वकमिति** । विशेषेण सामान्यं लक्ष्यत इत्यर्थः । मानसव्यापारपूर्वकत्वाद्वाचनिककायिकव्यापारयोः प्राधान्यान्मनोव्यापार उक्तोऽस्पृहारूपमिति । ब्रह्मचर्यस्वरूपमाह—**गुप्तेति** । संयतोपस्थोऽपि हि स्त्रीप्रेक्षणतदालापकन्दर्पायतनतदङ्गस्पर्शनसक्तो न ब्रह्मचर्यवानिति तन्निरासायोक्तं गुप्तेन्द्रियस्येति । इन्द्रियान्तराण्यपि तत्र लोलुपानि रक्षणीयानीति । अपरिग्रहस्वरूपमाह—**विषयाणामिति** । तत्र सङ्गदोष उक्तो भोगाभ्यासमनु विवर्धन्ते[1] रागाः कौशलानि चेन्द्रियाणामिति, हिंसालक्षणश्च दोषो नानुपहत्य भूतान्युपभोगः संभवतीति । अशास्त्रीयाणामयत्नोपनतानामपि[2] विषयाणां निन्दितप्रतिग्रहादिरूपार्जनदोषदर्शनाच्छास्त्रीयाणामप्युपार्जितानां च रक्षणादिदोषदर्शनादस्वीकरणमपरिग्रहः ॥ ३० ॥

---

१ क. °र्धंते रागः कौ° । २ क. °पलभ्यानां ।

ते तु—

**जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥**

तत्राहिंसा जात्यवच्छिन्ना मत्स्यवधकस्य[1] मत्स्येष्वेव नान्यत्र हिंसा। सैव देशावच्छिन्ना न तीर्थे हनिष्यामीति। सैव कालावच्छिन्ना न चतुर्दश्यां न पुण्येऽहनि हनिष्यामीति। सैव त्रिभिरुपरतस्य समयावच्छिन्ना देवब्राह्मणार्थे नान्यथा हनिष्यामीति। यथा च क्षत्रियाणां युद्ध एव हिंसा नान्यत्रेति। एभिर्जातिदेशकालसमयैरनवच्छिन्ना अहिंसादयः सर्वथैव परिपालनीयाः। सर्वभूमिषु सर्वविषयेषु सर्वथैवाविदितव्यभिचाराः सार्वभौमा महाव्रतमित्युच्यन्ते[2] ॥ ३१ ॥

**शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ३२ ॥**

तत्र शौचं मृज्जलादिजनितं मेध्याभ्यवहरणादि च बाह्यम्। आभ्यन्तरं चित्तमलानामाक्षालनम्। संतोषः संनिहितसाधनादधिकस्यानुपादित्सा। तपो द्वंद्वसहनम्। द्वंद्वाश्च[3] जिघत्सापिपासे

सामान्यत उक्ता यादृशाः पुनर्योगिनामुपादेयास्तादृशान्वक्तुं सूत्रमवतारयति-ते त्विति। जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्। सर्वासु जात्यादिलक्षणासु भूमिषु विदिताः सार्वभौमाः। अहिंसादय इत्यन्यत्राप्यवच्छेदः ऊहनीयः। सुगमं भाष्यम् ॥ ३१ ॥

शौचादिनियमानाचष्टे—शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः। व्याचष्टे—शौचमिति। आदिशब्देन गोमयादयो गृह्यन्ते। गोमूत्रयावकादि मेध्यं तस्याभ्यवहरणादि। आदिशब्दाद्ग्रासपरिमाणसंख्यानियमादयो ग्राह्याः। मेध्याभ्यवहरणादिजनितमिति वक्तव्ये मेध्याभ्यवहरणादि चेत्युक्तं कार्ये कारणोपचारात्। चित्तमला मदमानासूयादयस्तदपनयो मनःशौचम्। प्राणयात्रामात्रहेतोरभ्यधिकस्यानुपादित्सा[4] संतोषः प्रागेव स्वीकरणपरित्यागादिति शेषः[5]।

१ ग. च. छ. °त्स्यवन्धक°। छ. °त्स्यवेध°। २ ग. घ. छ. °च्यते ॥ ३१ ॥ ३ क. द्वंद्वं च जि°। ग. घ. च. द्वंद्वश्च। ङ. द्वंद्वानि च जि°। ४ ख. ञ. °णयात्रामा°। ५ क. ख. ञ. विशेषः।

शीतोष्णे स्थानासने काष्ठमौनाकारमौने च । व्रतानि चैषां[1] यथायोगं कृच्छ्रचान्द्रायणसांतपनादीनि । स्वाध्यायो मोक्षशास्त्राणामध्ययनं प्रणवजपो वा । ईश्वरप्रणिधानं तस्मिन्परमगुरौ सर्वकर्मार्पणम् ।

शय्यासनस्थोऽथ पथि व्रजन्वा स्वस्थः परिक्षीणवितर्कजालः ।
संसारबीजक्षयमीक्षमाणः स्यान्नित्ययुक्तो[2]ऽमृतभोगभागी ॥

यत्रेदमुक्तं ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्चेति ॥३२॥

एतेषां यमनियमानाम्—

**वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥**

यदाऽस्य ब्राह्मणस्य हिंसादयो वितर्का जायेरन्हनिष्याम्यहमपकारिणमनृतमपि वक्ष्यामि द्रव्यमप्यस्य स्वी करिष्यामि दारेषु चास्य व्यवायी भविष्यामि परिग्रहेषु चास्य स्वामी भविष्यामीति । एवमुन्मार्गप्रवणवितर्कज्वरेणातिदीप्तेन बाध्यमानस्तत्प्रतिपक्षान्भावयेत् । घोरेषु संसाराङ्गारेषु पच्यमानेन मया शरणमुपागतः[3] सर्वभूताभयप्रदानेन योगधर्मः[4] । स खल्वहं त्यक्त्वा वितर्कान्पुनस्तानाददानस्तुल्यः श्ववृत्तेनेति भावयेत् ।

काष्ठमौनमिङ्गितेनापि स्वाभिप्रायाप्रकाशनम् । अवचनमात्रमाकारमौनम् । परिक्षीणवितर्कजाल इति । वितर्कौ वक्ष्यमाणः संशयविपर्ययौ वेति । एतावता शुद्धोऽभिसंधिरुक्तः । एते च यमनियमा विष्णुपुराण उक्ताः—

ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहान् ।
सेवेत योगी निष्कामो योग्यतां स्वमनो नयन् ॥
स्वाध्यायशौचसंतोषतपांसि नियतात्मवान् ।
कुर्वीत ब्रह्माणि तथा परस्मिन्प्रवणं मनः ॥
एते यमाः सनियमाः पञ्च पञ्च प्रकीर्तिताः ।
विशिष्टफलदाः काम्या निष्कामानां(णां) विमुक्तिदाः ॥

[ ६ । ७ । ३६—३८ ] इति ॥ ३२ ॥

'श्रेयांसि बहुविघ्नानि' इत्येषामपवादसंभवे तत्प्रतीकारोपदेशपरं सूत्रमवतारयति—एतेषां यमनियमानामिति । सूत्रं—वितर्कबाधने प्रतिपक्षभावनम्[6] । वितर्काणां

१ घ. ङ. °चैव य° । २ ख. ग. घ. ङ. छ. °त्युक्तो° । ३ क. च. °मुपग° । ४ घ. ङ. °गताः स° । ५ घ. ङ. °धर्माः । स । ६ ज. °म् । भा° ।

यथा श्वा वान्तावलेही तथा त्यक्तस्य पुनराददान इति । एव-मादि सूत्रान्तरेष्वपि योज्यम् ॥ ३३ ॥

**वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्ष-भावनम् ॥ ३४ ॥**

तत्र हिंसा तावत्—कृता कारिताऽनुमोदितेति त्रिधा । एकैका पुनस्त्रिधा—लोभेन मांसचर्मार्थेन क्रोधेनापकृतमनेनेति मोहेन धर्मो मे भविष्यतीति । लोभक्रोधमोहाः पुनस्त्रिविधाः—मृदुमध्या-धिमात्रा इति । एवं सप्तविंशतिर्भेदा भवन्ति हिंसायाः । मृदु-मध्याधिमात्राः पुनस्त्रिधा—मृदुमृदुर्मध्यमृदुस्तीव्रमृदुरिति । तथा मृदुमध्यो मध्यमध्यस्तीव्रमध्य इति । तथा मृदुतीव्रो मध्यती-व्रोऽधिमात्रतीव्र इति । एवमेकाशीतिभेदा हिंसा भवति । सा पुनर्नियमविकल्पसमुच्चयभेदादसंख्येया । प्राणभृद्भेदस्यापरिसं-ख्येयत्वादिति । एवमनृतादिष्वपि योज्यम् ।

ते खल्वमी वितर्का दुःखाज्ञानानन्तफला इति प्रतिपक्षभाव-नम् । दुःखमज्ञानं चानन्तं फलं येषामिति प्रतिपक्षभावनम् । तथा च हिंसकस्तावत्प्रथमं वध्यस्य वीर्यमाक्षिपति । ततश्च शस्त्रा-दिनिपातेन दुःखयति । ततो जीवितादपि मोचयति । ततो वीर्याक्षेपादस्य चेतनाचेतनमुपकरणं क्षीणवीर्यं भवति । दुःखो-

---

भाष्ये नास्ति तिरोहितमिव किंचन ॥ ३३ ॥

तत्र वितर्काणां स्वरूपप्रकारकारणधर्मफलभेदान्प्रतिपक्षभावनाविषयान्प्रतिपक्षभा-वनास्वरूपाभिधित्सया सूत्रेणाऽऽह—**वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभा-वनम्** । व्याचष्टे—तत्र हिंसेति ।

प्राणभृद्भेदस्यापरिसंख्येयत्वान्नियमविकल्पसमुच्चयाः संभविनो हिंसादिषु । तत्रा-धर्मतस्तमःसमुद्रेके सति चतुर्विधविपर्ययलक्षणस्याज्ञानस्याप्युदय इत्यज्ञानफलत्वम-प्येतेषामिति । दुःखाज्ञानानन्तफलत्वमेव हि प्रतिपक्षभावनं तद्वशादेभ्यो निवृत्तेरिति । तदेव प्रतिपक्षभावनं स्फोरयति—वध्यस्य पश्वादेर्वीर्यं प्रयत्नं कायव्यापा-

---

१ ज. °त्वादनियतत्वान्नि° । २ क. ख. झ. °वृत्तिरि° ।

त्पादान्नरकतिर्यक्प्रेतादिषु दुःखमनुभवति, जीवितव्यपरोपणा-त्प्रतिक्षणं च जीवितात्यये वर्तमानो मरणमिच्छन्नपि दुःखवि-पाकस्य नियतविपाकवेदनीयत्वात्कथंचिदेवोच्छ्वसिति। यदि च कथंचित्पुण्यावापगता हिंसा भवेत्तत्र सुखप्राप्तौ भवेदल्पायुरिति। एवमनृतादिष्वपि योज्यं यथासंभवम्। एवं वितर्काणां चामुमे-वानुगतं विपाकमनिष्टं भावयन्न वितर्केषु मनः प्रणिदधीत॥३४॥

प्रतिपक्षभावनाद्धेतोर्हेया वितर्का यदाऽस्य स्युरप्रसवधर्माण-स्तदा तत्कृतमैश्वर्यं योगिनः सिद्धिसूचकं भवति। तद्यथा—

**अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः॥ ३५॥**

सर्वप्राणिनां भवति॥ ३५॥

**सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्॥ ३६॥**

धार्मिको भूया इति भवति धार्मिकः। स्वर्गं प्राप्नुहीति स्वर्गं प्राप्नोति। अमोघाऽस्य वाग्भवति॥ ३६॥

---

रहेतुं प्रथममाक्षिपति यूपनियोजनेन। तेन हि पशोरप्रागल्भ्यं भवति। शेषमति-स्फुटम्॥ ३४॥

उक्ता यमनियमास्तदपवादकानां च वितर्काणां प्रतिपक्षभावनातो हानिरुक्ता, संप्र-त्यप्रत्यूहं यमनियमाभ्यासात्तत्सिद्धिपरिज्ञानसूचकानि चिह्नान्युपन्यस्यति यत्परिज्ञाना-द्योगी तत्र तत्र कृतकृत्यः कर्तव्येषु प्रवर्तेत इत्याह( ति )—यदेति (प्रतिपक्षेति)। अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः। शाश्वतिकविरोधा अप्यश्वमहिषमूषक-मार्जाराहिनकुलादयोऽपि भगवतः प्रतिष्ठिताहिंसस्य संनिधानात्तच्चित्तानुकारिणो वैरं परित्यजन्तीति॥ ३५॥

सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्। क्रियसाध्यौ धर्माधर्मौ क्रिया तत्फलं च स्वर्गनरकादि। ते एवाऽऽश्रयतीत्याश्रयस्तस्य भावस्तत्त्वं तदस्य भगवतो वाचो भवतीति। क्रियाश्रयत्वमाह—धार्मिक इति। फलाश्रयत्वमाह—स्वर्गमिति। अमोघाऽप्रतिहता॥ ३६॥

---

१ ख. ग. ङ. च. छ. 'तवे°'। २ क. ख. च. छ. 'नाहेतो°'।

**अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥**

सर्वदिक्स्थान्यस्योपतिष्ठन्ते रत्नानि ॥ ३७ ॥

**ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥ ३८ ॥**

यस्य लाभादप्रतिघान्गुणानुत्कर्षयति । सिद्धश्च विनेयेषु ज्ञानमाधातुं समर्थो भवतीति ॥ ३८ ॥

**अपरिग्रहस्थैर्ये जन्मकथंतासंबोधः ॥ ३९ ॥**

अस्य भवति । कोऽहमासं कथमहमासं किंस्विदिदं[1] कथंस्विदिदं के वा भविष्यामः कथं वा भविष्याम इत्येवमस्य पूर्वा[2]न्तपरान्तमध्येष्वात्मभावजिज्ञासा स्वरूपेणोपावर्तते । एता यमस्थैर्ये सिद्धयः ॥ ३९ ॥

---

**अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्** । सुबोधम् ॥ ३७ ॥

**ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः** । वीर्यं सामर्थ्यं यस्य लाभादप्रति[3]घानप्रतिघातान्गुणानणिमादीनुत्कर्षयत्युपचिनोति । सिद्धश्चे[4] तारा( तर्का )दिभिरष्टाभिः सिद्धिभिरूहाद्यपरनामभिरुपेतो विनेयेषु शिष्येषु ज्ञानं यो[5]गतदङ्गविषयमाधातुं समर्थो भवतीति ॥ ३८ ॥

**अपरिग्रहस्थैर्ये जन्मकथंतासंबोधः** । निकायविशिष्टैर्देहेन्द्रियादिभिरभिसंबन्धो जन्म तस्य कथंता किंप्रकारता तस्याः संबोधः साक्षात्कारः। सप्रकारातीन्द्रियशान्तोदिताव्यपदेश्यजन्मपरिज्ञानमिति यावत् । अतीतं जिज्ञासते—**कोऽहमासमिति** । तस्यैव प्रकारभेदमुत्पादे स्थितौ च जिज्ञासते—**कथमहमासमिति** । वर्तमानस्य जन्मनः स्वरूपं जिज्ञासते—**किंस्विदिति** । शरीरं भौतिकं किं भूतानां समूहमात्रमाहोस्वित्तेभ्योऽन्यदिति । अत्रापि कथंस्विदित्यनुषञ्जनीयम् । क्वचित्तु पठ्यत एव । अनागतं जिज्ञासते—**के वा भविष्याम** इति । अत्रापि कथंस्विदित्यनुषङ्गः । **एवमस्येति** । पूर्वान्तोऽतीतः का[6]लः परान्तो भविष्यन्मध्यो वर्तमानस्तेष्वात्मनो भावः शरीरादिसंबन्धस्तस्मिञ्जिज्ञासा ततश्च ज्ञानम्। यो हि यदिच्छति स तत्करोतीति न्यायात् ॥ ३९ ॥

---

१ ख. °दं के । २ क. ख. °र्वान्ताप° । ग. च. छ. °र्वाप° । ३ ज. °तिहता° । ४ ज. °श्च भावादि° । ५ ज. °गवि° । ६ ज. कालोऽप° ।

नियमेषु वक्ष्यामः—

शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥

स्वाङ्गे जुगुप्सायां शौचमारभमाणः कायावद्यदर्शी कायानभिष्वङ्गी यतिर्भवति । किंच परैरसंसर्गः कायस्वभावावलोकी स्वमपि कायं जिहासुर्मृज्जलादिभिराक्षालयन्नपि कायशुद्धिमपश्यन्कथं परकायैरत्यन्तमेवाप्रयतैः संसृज्येत ॥ ४० ॥

किंच—

सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च ॥ ४१ ॥

भवन्तीति वाक्यशेषः । शुचेः सत्त्वशुद्धिस्ततः सौमनस्यं तत ऐकाग्र्यं तत इन्द्रियजयस्ततश्चाऽऽत्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवतीत्येतच्छौचस्थैर्यादधिगम्यत इति ॥ ४१ ॥

संतोषादनुत्तमः सुखलाभः ॥ ४२ ॥

तथा चोक्तम्—

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ इति ॥ ४२ ॥

---

शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः । अनेन बाह्यशौचसिद्धिसूचकं कथितम् ॥ ४० ॥

आन्तरशौचसिद्धिसूचकमाह—किंचेति । सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च । चित्तमलानामाक्षालने चित्तसत्त्वममलं प्रादुर्भवति वैमल्यात्सौमनस्यं स्वच्छता स्वच्छं तदेकाग्रं ततो मनस्तन्त्राणामिन्द्रियाणां तज्जयाज्जयस्तत आत्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवतीति ॥ ४१ ॥

संतोषादनुत्तमः सुखलाभः । न विद्यतेऽस्मादुत्तम इत्यनुत्तमः । यथा चोक्तं ययातिना पूरौ यौवनमर्पयता—

या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यताम् ।
तां तृष्णां संत्यजन्प्राज्ञः सुखेनैवाभिपूर्यते ॥ [भार०आ०८५।१४]इति ।

तदेतद्दर्शयति—यच्च कामसुखं लोक इत्यादिना ॥ ४२ ॥

---

१ क. ख. ज. °शौचं सि° । २ क. ख. ज. °शौचं सि° । ३ ज. पूरवे ।

**कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥**

निर्वर्त्यमानमेव तपो हिनस्त्यशुद्ध्यावरणमलं तदावरणमलापगमात्कायसिद्धिरणिमाद्या । तथेन्द्रियसिद्धिर्दूराच्छ्रवणदर्शनाद्येति ॥ ४३ ॥

**स्वाध्यायादिष्टदेवतासंप्रयोगः ॥ ४४ ॥**

देवा ऋषयः सिद्धाश्च स्वाध्यायशीलस्य दर्शनं गच्छन्ति, कार्ये चास्य वर्तन्त इति ॥ ४४ ॥

**समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥**

ईश्वरार्पितसर्वभावस्य समाधिसिद्धिर्यया सर्वमीप्सितमवितथं जानाति देशान्तरे देहान्तरे कालान्तरे च । ततोऽस्य प्रज्ञा यथाभूतं प्रजानातीति ॥ ४५ ॥

उक्ताः सह सिद्धिभिर्यमनियमाः । आसनादीनि वक्ष्यामः । तत्र—

**स्थिरसुखमासनम् ॥ ४६ ॥**

---

तपःसिद्धिसूचकमाह—कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः । अशुद्धिलक्षणमावरणं तामसमधर्मादि । अणिमाद्या महिमा लघिमा प्राप्तिश्च । सुगमम् ॥ ४३ ॥

स्वाध्यायसिद्धिसूचकमाह—स्वाध्यायादिष्टदेवतासंप्रयोगः । सुगमम् ॥ ४४ ॥

समाधिसिद्धिरीश्वरप्रणिधानात् । न च वाच्यमीश्वरप्रणिधानादेव चेत्संप्रज्ञातस्य समाधेरङ्गिनः सिद्धिः कृतं सप्तभिरङ्गैरिति । ईश्वरप्रणिधानसिद्धौ दृष्टादृष्टावान्तरव्यापारेण तेषामुपयोगात् । संप्रज्ञातसिद्धौ च संयोगपृथक्त्वेन दध्न इव क्रत्वर्थता पुरुषार्थता च । न चैवमनन्तरङ्गता धारणाध्यानसमाधीनां संप्रज्ञातसिद्धौ । संप्रज्ञातसमानगोचरतयाऽङ्गान्तरेभ्योऽतद्गोचरेभ्योऽस्यान्तरङ्गत्वप्रतीतेः । ईश्वरप्रणिधानमपि हीश्वरगोचरं न संप्रज्ञेयगोचरमिति बहिरङ्गमिति सर्वमवदातम् । प्रजानातीति प्रज्ञापदव्युत्पत्तिर्दर्शिता ॥ ४५ ॥

उत्तरसूत्रमवतारयति—उक्ताः सह सिद्धिभिर्यमनियमाः । आसनादीनि वक्ष्यामः । तत्र—स्थिरसुखमासनम् । स्थिरं निश्चलं यत्सुखं सुखावहं तदासनमिति

---

१ क. ख. च. छ. °णमनना° ।

तद्यथा—पद्मासनं भद्रासनं स्वस्तिकं दण्डासनं सोपाश्रयं पर्यङ्कं क्रौञ्चनिषदनं हस्तिनिषदनमुष्ट्रनिषदनं समसंस्थानं स्थिरसुखं यथासुखं चेत्येवमादीनि ॥ ४६ ॥

**प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७ ॥**

भवतीति वाक्यशेषः। प्रयत्नोपरमात्सिध्यत्यासनं येन नाङ्गमेजयो भवति। अनन्ते वा समापन्नं चित्तमासनं निर्वर्तयतीति॥४७॥

**ततो द्वंद्वानभिघातः ॥ ४८ ॥**

शीतोष्णादिभिर्द्वंद्वैरासनजयान्नाभिभूयते ॥ ४८ ॥

---

सूत्रार्थः । आस्यत आस्ते वाऽनेनेत्यासनम् । तस्य प्रभेदानाह—तद्यथेति । पद्मासनं प्रसिद्धम् । स्थितस्यैकतरः पादो भून्यस्त एकतरश्चाऽऽकुञ्चितजानोरुपरि न्यस्त इत्येतद्वीरासनम् । पादतले वृषणसमीपे संपुटीकृत्य तस्योपरि पाणिकच्छपिकां कुर्यात्तद्भद्रासनम् । सव्यमाकुञ्चितं चरणं दक्षिणजङ्घोर्वन्तरे दक्षिणं चाऽऽकुञ्चितं वामजङ्घोर्वन्तरे निक्षिपेदेतत्स्वस्तिकम् । उपविश्य श्लिष्टाङ्गुलिकौ श्लिष्टगुल्फौ भूमिश्लिष्टजङ्घोरुपादौ प्रसार्य दण्डासनमभ्यसेत् । योगपट्टकयोगात्सोपाश्रयम् । जानुप्रसारितबाहोः शयनं पर्यङ्कः । क्रौञ्चनिषदनादीनि क्रौञ्चादीनां निषण्णानां संस्थानदर्शनात्प्रत्येतव्यानि । पार्ष्ण्यग्रपादाभ्यां द्वयोराकुञ्चितयोरन्योन्यसंपीडनं समसंस्थानं, येन संस्थानेनावस्थितस्य स्थैर्यं सुखं च सिध्यति तदासनं स्थिरसुखम् । तदेतद्भगवतः सूत्रकारस्य संमते, तस्य विवरणं यथासुखं चेति ॥ ४६ ॥

आसनस्वरूपमुक्त्वा तत्साधनमाह—**प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्** । सांसिद्धिको हि प्रयत्नः शरीरधारको न योगाङ्गस्योपदेष्टव्यासनस्य कारणं तस्य तत्कारणत्व उपदेशवैयर्थ्यात्स्वरसत एव तत्सिद्धेः । तस्मादुपदेष्टव्यस्याऽऽसनस्यायमसाधको विरोधी च स्वाभाविकः प्रयत्नस्तस्य च याहच्छिकासनहेतुतयाऽऽसननियमोपहन्तृत्वात् । तस्मादुपदिष्टनियमासनमभ्यस्यता स्वाभाविकप्रयत्नशैथिल्याय प्रयत्न आस्थेयो नान्यथोपदिष्टमासनं सिध्यतीति स्वाभाविकप्रयत्नशैथिल्यमासनसिद्धिहेतुः । अनन्ते वा नागनायके स्थिरतरफणासहस्रविधृतविश्वंभरामण्डले समापन्नं चित्तमासनं निर्वर्तयतीति ॥ ४७ ॥

आसनविजयसूचकमाह—**ततो द्वंद्वानभिघातः** । निगदव्याख्यातं भाष्यम् । आसनमप्युक्तं विष्णुपुराणे—

---

१ क. झ. °स्यतेऽत्राऽऽस्ते । २ झ. पार्ष्णिपादाग्राभ्यां । ३ ख. ज. स्थैर्यसु° । ४ ख. ज. झ. °खं सि° । ५ क. झ. तत्तत्र भग° । ज. तत्रभव° । ६ ख. ज. °ल्यात्मा प्र° । ७ ख. ज. °तरे फ° ।

**तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥**

सत्यासनजये बाह्यस्य वायोराचमनं श्वासः, कौष्ठ्यस्य वायोर्निःसारणं प्रश्वासः, तयोर्गतिविच्छेद उभयाभावः प्राणायामः ॥ ४९ ॥

स तु—

**बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥**

यत्र प्रश्वासपूर्वको गत्यभावः स बाह्यः। यत्र श्वासपूर्वको गत्यभावः स आभ्यन्तरः। तृतीयः स्तम्भवृत्तिर्यत्रोभयाभावः सकृत्प्रयत्नाद्भवति। यथा तप्ते न्यस्तमुपले जलं सर्वतः संकोचमापद्यते तथा द्वयोर्युगपद्गत्यभाव इति। त्रयोऽप्येते देशेन परि-

---

एवं भद्रासनादीनां समास्थाय गुणैर्युतम्। [ १ । ७ । ३९ ] इति ॥ ४८ ॥

आसनानन्तरं तत्पूर्वकतां प्राणायामस्य दर्शयंस्तल्लक्षणमाह—**तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः**। रेचकपूरककुम्भकेष्वस्ति श्वासप्रश्वासयोर्गतिविच्छेद इति प्राणायामसामान्यलक्षणमेतदिति। तथा हि—यत्र बाह्यो वायुराचम्यान्तर्धार्यते पूरके तत्रास्ति श्वासप्रश्वासयोर्गतिविच्छेदः। यत्रापि कौष्ठ्यो वायुर्विरेच्य बाहिर्धार्यते रेचके तत्रास्ति श्वासप्रश्वासयोर्गतिविच्छेदः। एवं कुम्भकेऽपीति। तदेतद्भाष्येणोच्यते—**सत्यासनेति** ॥ ५० ॥

प्राणायामविशेषत्रयलक्षणपरं सूत्रमवतारयति—**स त्विति**। **बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः**। वृत्तिशब्दः प्रत्येकं संबध्यते। रेचकमाह—**यत्र प्रश्वासेति**। पूरकमाह—**यत्र श्वासेति**। कुम्भकमाह—**तृतीय इति**। तदेव स्फुटयति—**यत्रोभयोः** श्वासप्रश्वासयोः सकृदेव विधारकात्प्रयत्नादभावो भवति न पुनः पूर्ववदापूरणप्रयत्नौघविधारकप्रयत्नो नापि रेचकप्रयत्नौघविधारकप्रयत्नोऽपेक्ष्यते। किंतु यथा तप्त उपले निहितं जलं परिशुष्यत्सर्वतः संकोचमापद्यत एवमयमपि मारुतो वहनशीलो बलवद्विधारकप्रयत्ननिरुद्धक्रियः शरीर एव सूक्ष्मीभूतोऽवतिष्ठते नतु पूरयति येन पूरकः। न तु रेचयति येन रेचक इति।

---

१ ग. घ. °पद्गत्यय°। २ ख. ज. °रणप्र°। ३ ख. ज. झ. °रणप्र°। ४ ख. ज. °यत्नः। किं°।

दृष्टा इयानस्य विषयो देश इति । कालेन परिदृष्टाः क्षणाना-मियत्तावधारणेनावच्छिन्ना इत्यर्थः । संख्याभिः परिदृष्टा एता-वद्भिः श्वासप्रश्वासैः प्रथम उद्घातस्तद्वन्निगृहीतस्यैतावद्भिर्द्वितीय उद्घात एवं तृतीयः । एवं मृदुरेवं मध्य एवं तीव्र इति संख्या-परिदृष्टः । स खल्वयमेवमभ्यस्तो दीर्घसूक्ष्मः ॥ ५० ॥

**बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥**

देशकालसंख्याभिर्बाह्यविषयपरिदृष्ट आक्षिप्तः । तथाऽऽभ्य-न्तरविषयपरिदृष्ट आक्षिप्तः । उभयथा दीर्घसूक्ष्मः । तत्पूर्वको भूमिजयात्क्रमेणोभयोर्गत्यभावश्चतुर्थः प्राणायामः । तृतीयस्तु

---

इयानस्य देशो विषयः प्रादेशवितस्तिहस्तादिपरिमितो निवातप्रदेश ईषीकातूलादिक्रिया-नुमितो बाह्य एवमान्तरोऽप्यापादतलमामस्तकं पिपीलिकास्पर्शसदृशेनानुमितः स्पर्शेन । निमेषक्रियावच्छिन्नस्य कालस्य चतुर्थो भागः क्षणस्तेषामियत्तावधारणेनावच्छिन्नः । स्वजानुमण्डलं पाणिना त्रिः परामृश्य च्छोटिकावच्छिन्नः कालो मात्रा ताभिः षट्त्रिं-शता मात्राभिः परिमितः प्रथम उद्घातो मृदुः । स एव द्विगुणीकृतो द्वितीयो मध्यमः । स एव त्रिगुणीकृतस्तृतीयस्तीव्रः । तमिमं संख्यापरिदृष्टं प्राणायाममाह—संख्याभिरिति । स्वस्थस्य हि पुंसः श्वासप्रश्वासक्रियावच्छिन्नेन कालेन यथोक्तच्छोटिकाकालः समानः । प्रथमोद्घातकर्मतां नीत उद्घातो विजितो वशीकृतो निगृहीतः । क्षणानामियत्ता कालो विवक्षितः । श्वासप्रश्वासेयत्ता संख्येति कथंचिद्भेदः । स खल्वयं प्रत्यहमभ्यस्तो दिवस-पक्षमासादिक्रमेण देशकालप्रचयव्यापितया दीर्घः । परमनैपुण्यसमधिगमनीयतया च सूक्ष्मो न तु मन्दतया ॥ ५० ॥

एवं त्रयो विशेषा लक्षिताः । चतुर्थं लक्षयति—**बाह्याभ्यन्तरविषया-क्षेपी चतुर्थः** । व्याचष्टे—**देशकालसंख्याभिरिति** । आक्षिप्तोऽभ्यासवशीकृताद्रू-पादवरोपितः सोऽपि दीर्घसूक्ष्म एव तत्पूर्वको बाह्याभ्यन्तरविषयप्राणायामो देश-कालसंख्यादर्शनपूर्वकः । न चासौ चतुर्थस्तृतीय इव सकृत्प्रयत्नादह्नाय जायते किं-त्वभ्यस्यमानस्तां तामवस्थामापन्नस्तत्तदवस्थाविजयानुक्रमेण भवतीत्याह—**भूमिज-यादिति** । ननूभयोर्गत्यभावः स्तम्भवृत्तावप्यस्तीति कोऽस्मादस्य विशेष इत्यत आह—**तृतीय इति** । अनालोचनपूर्वः सकृत्प्रयत्ननिर्वर्तितस्तृतीयः । चतुर्थस्त्वालोचनपूर्वो

---

१ ख. ज. झ. मन्दः । २ ज. °श्वासप्रचयोपपन्ना तु सं° ।

विषयानालोचितो गत्यभावः सकृदारब्ध एव देशकालसं-ख्याभिः परिदृष्टो दीर्घसूक्ष्मः। चतुर्थस्तु श्वासप्रश्वासयोर्विष-यावधारणात्क्रमेण भूमिजयादुभयाक्षेपपूर्वको गत्यभावश्चतुर्थः प्राणायाम इत्ययं विशेष इति ॥ ५१ ॥

ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥

प्राणायामानभ्यस्यतोऽस्य योगिनः क्षीयते विवेकज्ञानाव-रणीयं कर्म। यत्तदाचक्षते–महामोहमयेनेन्द्रजालेन प्रकाशशीलं सत्त्वमावृत्य तदेवाकार्ये नियुङ्क्त इति। तदस्य प्रकाशावरणं कर्म संसारनिबन्धनं प्राणायामाभ्यासाद्दुर्बलं भवति प्रतिक्षणं च क्षीयते। तथा चोक्तम्– 'तपो न परं प्राणायामात्ततो विशु-द्धिर्मलानां दीप्तिश्च ज्ञानस्य' इति ॥ ५२ ॥

---

बहुप्रयत्ननिर्वर्तनीय इति विशेषः। तयोः पूरकरेचकयोर्विषयोऽनालोचितोऽयं तु देश-कालसंख्याभिरालोचित इत्यर्थः ॥ ५१ ॥

प्राणायामस्यावान्तरप्रयोजनमाह–ततः क्षीयते प्रकाशावरणम्[1]। आव्रियतेऽनेन बुद्धिसत्त्वप्रकाश इत्यावरणं क्लेशः पाप्मा च। व्याचष्टे–प्राणायामानिति। ज्ञायते-ऽनेनेति ज्ञानं बुद्धिसत्त्वप्रकाशो विवेक[2]स्य ज्ञा[3]नं[4] विवेकज्ञानम्। विवेकज्ञानमावृणोतीति विवेकज्ञानावरणीयम्। भव्यगेयप्रवचनीयादीनां (पा॰सू॰ ३।४।६८) कर्तरि निपा-तनस्य प्रदर्शनार्थत्वात्कोपनीयरञ्जनीयवदत्रापि कर्तरि कृत्यप्रत्ययः। कर्मशब्देन तज्जन्यमपु[5]ण्यं तत्कारणं क्लेशं [ च ] लक्षयति। अत्रैवाऽऽगमिनामनुमतिमाह—यत्त-दाचक्षत इति। महामोहो रागः, तदविनिर्भागवर्तिन्यविद्याऽपि तद्ग्रहणेन गृह्यते। अकार्यमधर्मः। ननु प्राणायाम एव चेत्पाप्मानं क्षिणोति कृतं तर्हि तपसेत्यत आह-दुर्बलं भवतीति। न तु सर्वथा क्षीयतेऽतस्तत्प्रक्षयाय तपोऽपेक्ष्यत इति। अत्राप्यागमिनामनुमतिमाह—तथा चोक्तमिति। मनुरप्याह—'प्राणायामैर्दहेद्दो-षान्' ( मनुस्मृ॰ ६। ७२ ) इति। प्राणायामस्य योगाङ्गता विष्णुपुराणोक्ता—

---

१ ज. °म्। व्या°। २ ज. °कज्ञा°। ३ ज. °ज्ञानमाव्रियतेऽनेन बुद्धिसत्त्वप्रकाश इत्यावरणं क्लेशः पाप्मा स हि विवेकज्ञानमा°। ४ क. ख. °नं स हि विवेकज्ञानमा°। ५ ज. °ण्यं च क्ले°।

किंच—

**धारणासु च योग्यता मनसः ॥ ५३ ॥**

प्राणायामाभ्यासादेव । 'प्रच्छर्दनविधारणाभ्यां वा प्राणस्य' इति वचनात् ॥ ५३ ॥

अथ कः प्रत्याहारः—

**स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥**

स्वविषयसंप्रयोगाभावे चित्तस्वरूपानुकार इवेति, चित्तनिरोधे चित्तवन्निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवदुपायान्तरमपेक्षन्ते । यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति निविश-

---

प्राणाख्यमनिलं वश्यमभ्यासात्कुरुते तु यः ।
प्राणायामः स विज्ञेयः सबीजोऽबीज एव च ॥
परस्परेणाभिभवं प्राणापानौ यदाऽनिलौ ।
कुरुतस्तद्विधानेन तृतीयं संयमात्तयोः ॥

( ६ । ७ । ४०–४१ ) इति ॥ ५२ ॥

**किंच—धारणासु च योग्यता मनसः** । प्राणायामो हि मनः स्थिरीकुर्वन्धारणासु योग्यं करोति ॥ ५३ ॥

तदेवं यमादिभिः संस्कृतः संयमाय प्रत्याहारमारमते । तस्य लक्षणसूत्रमवतारयितुं पृच्छति–**अथेति** । **स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः** । चित्तमपि मोहनीयरञ्जनीयकोपनीयैः शब्दादिभिर्विषयैर्न संप्रयुज्यते तदसंप्रयोगाच्चक्षुरादीन्यपि न संप्रयुज्यन्त इति सोऽयमिन्द्रियाणां चित्तस्वरूपानुकारः । यत्पुनस्तत्त्वं चित्तमभिनिविशते न तदिन्द्रियाणि बाह्यविषयाणीत्यननुकारोऽपि । **अत उक्तमनुकार इवेति** । स्वविषयासंप्रयोगस्य साधारणस्य धर्मस्य चित्तानुकारनिमित्तत्वं सप्तम्या दर्शयति—**स्वेति** । अनुकारं विवृणोति–**चित्तनिरोध इति** । द्वयोर्निरोधहेतुश्च प्रयत्नस्तुल्य इति सादृश्यम् । अत्रैव दृष्टान्तमाह–**यथा मधुकरराजमिति** ।

---

१ क. ग. घ. ङ. च. छ. °त्तस्य स्व° । २ क. °राजानं म° । ३ क. °त्तस्य स्व° । ४ क. झ तत्रेन्द्रियाणां बा° । ख. तत्रेन्द्रियाणामनुकारो विषयाणाम् । अ° । ५ क. °ह्यविषयवि° । ६ क. °याणामन° । झ. °याणामनु° । ७ क. °रोधे निरोधहेतौ च प्र° । ज. °रोधानिरोध° । ८ क. °राजानमि° ।

मानमनु निविशन्ते तथेन्द्रियाणि चित्तनिरोधे निरुद्धानीत्येष प्रत्याहारः ॥ ५४ ॥

ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥

( इति श्रीपतञ्जलिविरचितयोगसूत्रेषु द्वितीयः साधनपादः ॥ २ ॥ )

शब्दादिष्वव्यसनमिन्द्रियजय इति केचित् । सक्तिर्व्यसनं व्यस्यत्येनं श्रेयस इति । अविरुद्धा प्रतिपत्तिर्न्याय्या । शब्दादिसंप्रयोगः स्वेच्छयेत्यन्ये । रागद्वेषाभावे सुखदुःखशून्यं शब्दादिज्ञानमिन्द्रियजय इति केचित् । चित्तैकाग्र्यादप्रतिपत्तिरेवेति जैगीषव्यः । ततश्च परमा त्वियं वश्यता यच्चित्तनिरोधे निरु-

---

दार्ष्टान्तिके योजयति—तथेति । अत्रापि विष्णुपुराणवाक्यम्—

शब्दादिष्वनुषक्तानि निगृह्याक्षाणि योगवित् ।
कुर्याच्चित्तानुकारीणि प्रत्याहारपरायणः ॥ ( ६ । ७ । ४३ ) इति ।

तस्य प्रयोजनं तत्रैव दर्शितम्—

वश्यता परमा तेन जायते निश्चलात्मनाम् ।
इन्द्रियाणामवश्यैस्तैर्न योगी योगसाधकः ॥
( ६ । ७ । ४४ ) इति ॥ ५४ ॥

अस्यानुवादकं सूत्रम्—ततः परमा वश्यतेन्द्रियाणाम् । ननु सन्ति किमन्या अपरमा इन्द्रियाणां वश्यता या अपेक्ष्य परमेयमुच्यते, अद्धा ता दर्शयति—शब्दादिष्विति । एतदेव विवृणोति—सक्ती रागो व्यसनम् । कया व्युत्पत्त्या, व्यस्यति क्षिपति निरस्यत्येनं श्रेयस इति । तदभावोऽव्यसनं वश्यता । अपरामपि वश्यतामाह—अविरुद्धा श्रुत्याद्यविरुद्धशब्दादिसेवनं तद्विरुद्धेष्वप्रवृत्तिः, सैव न्याय्या न्यायादनपेता यतः । अपरामपि वश्यतामाह—शब्दादिसंप्रयोग इति । शब्दादिष्विन्द्रियाणां संप्रयोगः स्वेच्छया भोग्येषु खल्वयं स्वतन्त्रो न भोग्यतन्त्र इत्यर्थः । अपरामपि वश्यतामाह—रागद्वेषाभावे सुखदुःखशून्यं माध्यस्थ्येन शब्दादिज्ञानमित्येके । सूत्रकाराभिमतां वश्यतां परमर्षिसंमतामाह—चित्तस्यैकाग्र्यात्सहेन्द्रियैरप्रवृत्तिरेव शब्दादिष्विति जैगीषव्यः । अस्याः परमतामाह—परमा त्विति । तुशब्दो वश्यतान्तरेभ्यो विशिनष्टि । वश्यतान्तराणि हि विषयाशीविषसंप्रयोगशालितया क्लेशविषसंपर्कशङ्कां नापक्रामन्ति । न हि विषविद्यावित्प्रकृष्टोऽपि वशीकृतभुजंगमो भुजंगममङ्के निधाय स्वपिति विश्रब्धः । इयं तु वश्यता विदूरीकृतनिखिलविषयव्यतिषङ्गा

द्धानीन्द्रियाणि नेतरेन्द्रियजयवत्प्रयत्नकृतमुपायान्तरमपेक्षन्ते यो-
गिन इति ॥ ५५ ॥

इति श्रीपातञ्जले सांख्यप्रवचने योगशास्त्रे श्रीमद्व्यासभाष्ये
द्वितीयः साधनपादः ॥ २ ॥

---

निराशङ्कतया परमेत्युच्यते । नेतरेन्द्रियजयवदिति । यथा यतमानसंज्ञायामेकेन्द्रि-
यजयेऽपीन्द्रियान्तरजयाय प्रयत्नान्तरमपेक्षन्ते न[1] चैवं चित्तनिरोधे बाह्येन्द्रियनिरोधाय
प्रयत्नान्तरापेक्षेत्यर्थः ॥ ५५ ॥

क्रियायोगं जगौ क्लेशान्विपाकान्कर्मणामिह ।
तद्दुःखत्वं तथा व्यूहान्पादे योगस्य पञ्चकम् ॥ इति ।

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलयोगसूत्रभाष्यव्याख्यायां
द्वितीयः साधनपादः ॥ २ ॥

---

१ ख. ज. नैवं ।

वाचस्पतिकृतटीकासंवलितव्यासभाष्यसमेतानि

# पातञ्जलयोगसूत्राणि ।

———:o:———

( तत्र तृतीयो विभूतिपादः ) ।

उक्तानि पञ्च बहिरङ्गानि(णि) साधनानि । धारणा वक्तव्या—

**देशबन्धश्चित्तस्य धारणा ॥ १ ॥**

नाभिचक्रे हृदयपुण्डरीके मूर्ध्नि ज्योतिषि नासिकाग्रे जिह्वाग्र इत्येवमादिषु देशेषु बाह्ये वा विषये चित्तस्य वृत्तिमात्रेण बन्ध इति धारणा ॥ १ ॥

---

प्रथमद्वितीयपादाभ्यां समाधिस्तत्साधनं चोक्तम् । तृतीयपादे तत्प्रवृत्त्यनुगुणाः श्रद्धोत्पादहेतवो विभूतयो वक्तव्याः । ताश्च संयमसाध्याः । संयमश्च धारणाध्यानसमाधिसमुदाय इति विभूतिसाधनतया पञ्चभ्यश्च योगाङ्गेभ्यो बहिरङ्गेभ्योऽस्याङ्गत्रयस्यान्तरङ्गतया विशेषज्ञापनार्थमत्र त्रयस्योपन्यासः । तत्रापि च धारणाध्यानसमाधीनां कार्यकारणभावेन नियतपौर्वापर्यत्वात्तदनुरोधेनोपन्यासे क्रम इति प्रथमं धारणालक्षणीयेत्याह—**उक्तानीति** । **देशबन्धश्चित्तस्य धारणा** । आध्यात्मिकदेशमाह—**नाभिचक्र इति** । आदिशब्देन ताल्वादयो ग्राह्याः । बन्धः संबन्धः । बाह्यदेशमाह—**बाह्य इति** । बाह्ये च न स्वरूपेण चित्तस्य संबन्धः संभवतीत्युक्तं **वृत्तिमात्रेण** ज्ञानमात्रेणेति । अत्रापि पुराणम्—

प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम् ।
वशीकृत्य ततः कुर्याच्चित्तस्थानं शुभाश्रये ॥ [६।७।४५] इति ।

शुभाश्रया बाह्या हिरण्यगर्भवासवप्रजापतिप्रभृतयः । इदं च तत्रोक्तम्—

मूर्तं भगवतो रूपं सर्वोपाश्रयनिःस्पृहम् ।
एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्यते ॥
तच्च मूर्तं हरे रूपं यद्विचिन्त्यं नराधिप ।
तच्छ्रूयतामनाधारा धारणा नोपपद्यते ॥
प्रसन्नवदनं चारुपद्मपत्रनिभेक्षणम् ।
सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम् ॥
समकर्णान्तविन्यस्तचारुकुण्डलभूषणम् ।
कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम् ॥
वलीविभङ्गिना मग्ननाभिना चोदरेण च ।
प्रलम्बाष्टभुजं विष्णुमथवाऽपि चतुर्भुजम् ॥

## तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥

तस्मिन्देशे ध्येयालम्बनस्य प्रत्ययस्यैकतानता सदृशः प्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम् ॥ २ ॥

## तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥

ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्य[1]-मिव यदा भवति ध्येयस्वभावावेशात्तदा समाधिरित्युच्यते ॥ ३ ॥

---

समस्थितोरुजङ्घं च स्वस्तिकाङ्घ्रि[2]वराम्बुजम् ।
चिन्तयेद्ब्रह्मभूतं तं पीतनिर्मलवाससम् ॥
किरीटचारुकेयूरकटकादिविभूषितम् ।
शार्ङ्गचक्रगदाशङ्खखड्गाक्षवलयान्वितम्[3] ॥
चिन्तयेत्तन्मयो योगी समाधायाऽऽत्ममानसम् ।
तावद्यावद्दृढीभूता तत्रैव नृप धारणा ॥
एतदातिष्ठतोऽन्यद्वा स्वेच्छया कर्म कुर्वतः ।
नापयाति यदा चित्तं सिद्धां मन्येत तां तदा ॥

[ ६ । ७ । ७७–८९ ] इति ॥ १ ॥

धारणासाध्यं ध्यानं लक्षयति—तत्र प्रत्ययैकतानता ध्यानम् । एकतानतैकाग्रता । सुगमं भाष्यम् । अत्रापि पुराणम्—

तद्रूपप्रत्ययैकाग्र्यसंततिश्चान्यनिःस्पृहा ।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ॥ [६।७।८९]इति ॥ २ ॥

ध्यानसाध्यं समाधिं लक्षयति—तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः । व्याचष्टे—ध्यानमेवेति । ध्येयाकारनिर्भासमिति । ध्येयाकारस्यैव निर्भासो न ध्यानाकारस्येति । अत एवाऽऽह—शून्यमिति । ननु शून्यं चेत्कथं ध्येयं प्रकाशेतेत्यत आह—इवेति । अत्रैव हेतुमाह—ध्येयस्वभावावेशादिति । अत्रापि पुराणम्—

तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् ।
मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते ॥ [६।७।९०] इति ।

ध्येयाद्ध्यानस्य भेदः कल्पना तद्धीनमित्यर्थः । अष्टाङ्गयोगमुक्त्वा खाण्डिक्याय केशिध्वजो विष्णुपुराण उपसंजहार—

---

१ ख. च. °ते ॥ ३ ॥ तत्त्रय°। २ क. ज. झ. °ङ्घ्रिकरा°। ३ ख. ज. झ. °याञ्चितम् ।

**त्रयमेकत्र संयमः ॥ ४ ॥**

तदेतद्धारणाध्यानसमाधित्रयमेकत्र संयमः । एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते । तदस्य त्रयस्य तान्त्रिकी परिभाषा संयम इति ॥ ४ ॥

**तज्जयात्प्रज्ञालोकः ॥ ५ ॥**

तस्य संयमस्य जयात्समाधिप्रज्ञाया भवत्यालोको यथा यथा संयमः स्थिरपदो भवति तथा तथा समाधिप्रज्ञा विशारदी भवति ॥ ५ ॥

**तस्य भूमिषु विनियोगः ॥ ६ ॥**

तस्य संयमस्य जितभूमेर्याऽनन्तरा भूमिस्तत्र विनियोगः ।

---

क्षेत्रस्य करणी ज्ञानं करणं तदचेतनम् ।
निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तते ॥ [१।७।९२] इति ॥३ ॥

धारणाध्यानसमाधिरित्येतत्त्रयस्य तत्र तत्र नियुज्यमानस्य प्रातिस्विकसंज्ञोच्चारणे गौरवं स्यादिति लाघवार्थं परिभाषासूत्रम*वतारयति—**त्रयमेकत्र संयमः** । व्याचष्टे—**एकविषयाणीति** ( **तदेतदिति** )। वाचकत्वशङ्कामपनयति—**तदस्येति** । तन्त्र्यते व्युत्पाद्यते योगो येन शास्त्रेण तत्तन्त्रं तद्भवा तान्त्रिकी । संयमप्रदेशाः " परिणामत्रयसंयमात्० " [ यो० सू० ३ । १६ ] इत्येवमादयः ॥ ४ ॥

संयमविजयस्याभ्याससाधनस्य फलमाह—**तज्जयात्प्रज्ञालोकः** । प्रत्ययान्तरानभिभूतस्य निर्मलप्रवाहेऽवस्थानमालोकः प्रज्ञायाः । सुगमं भाष्यम् ॥ ५ ॥

क्व पुनर्विनियुक्तस्य संयमस्य फलमेतदित्यत आह—**तस्य भूमिषु विनियोगः** । भूमिं विशेषयति भाष्यकारः—**तस्येति** । जिताया भूमेर्याऽनन्तरा भूमिरवस्थाऽजिता तत्र विनियोगः । स्थूलविषये सवितर्के समाधौ वशीकृते संयमेन संयमस्याविजिते निर्वितर्के विनियोगः । तस्मिन्नपि वशीकृते सविचारे विनियोगः । एवं निर्विचारे विनियोग इत्यर्थः । अत एव स्थूलविषयसमापत्तिसिद्धौ सत्यां पुराणे तत्तदायुधभूषणापनयेन सूक्ष्मविषयः समाधिरवतारितः—

तत: शङ्खगदाचक्रशार्ङ्गादिरहितं बुधः ।
चिन्तयेद्भगवद्रूपं प्रशान्तं साक्षसूत्रकम् ॥

---

* अवतारयतीत्यधिकं प्रतिभाति ।

---

१ घ. ङ. तथेश्वरप्रसादात्समा° ।

न ह्यजिताधरभूमिरनन्तरभूमिं विलङ्घ्य प्रान्तभूमिषु संयमं लभते। तदभावाच्च कुतस्तस्य प्रज्ञालोकः। ईश्वरप्रसादाज्जितोत्तरभूमिकस्य च नाधरभूमिषु परचित्तज्ञानादिषु संयमो युक्तः। कस्मात्, तदर्थस्यान्यत एवावगतत्वात् । भूमेरस्या इयमनन्तरा भूमिरित्यत्र योग एवोपाध्यायः । कथम् । एवं ह्युक्तम्—

योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्तते ।
योऽप्रमत्तस्तु योगेन स योगे रमते चिरम् ॥ इति ॥ ६ ॥

त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥

तदेतद्धारणाध्यानसमाधित्रयमन्तरङ्गं संप्रज्ञातस्य समाधेः पूर्वेभ्यो यमादिभ्यः पञ्चभ्यः साधनेभ्य इति ॥ ७ ॥

---

यदा च धारणा तस्मिन्नवस्थानवती ततः ।
किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत् ॥
तदेकावयवं देवं सोऽहं चेति पुनर्बुधः ।
कुर्यात्ततो ह्यहमिति प्रणिधानपरो भवेत् [ ६ ।७।८६–८८ ] इति ॥

कस्मात्पुनरधरां भूमिं विजित्योत्तरां विजयते विपर्ययः कस्मान्न भवतीत्यत आह—न ह्यजिताधरभूमिरिति । न हि शिलाह्रदाद्गङ्गां प्रति प्रस्थितोऽप्राप्य मेघवनं गङ्गां प्राप्नोति । ईश्वरप्रसादाज्जितोत्तरभूमिकस्य चेति । कस्मात्तदर्थस्योत्तरभूमिविजयस्य प्रत्यासन्नस्यान्यत एवेश्वरप्रणिधानादेवावगतत्वात् । निष्पादितक्रिये कर्मण्यविशेषाधायिनः साधनस्य साधनन्यायातिपातादिति । स्यादेतत् । आगमतः सामान्यतोऽवगतानामप्यवान्तरभूमिभेदानां कुतः पौर्वापर्यावगतिरित्यत आह—भूमेरस्या इति । जितः पूर्वो योग उत्तरस्य योगस्य ज्ञानप्रवृत्त्यधिगमहेतुः । अवस्थैवावस्थावानित्यभिप्रेत्यैतद्द्रष्टव्यम् ॥ ६ ॥

कस्मात्पुनर्योगाङ्गत्वाविशेषेऽपि संयमस्य तत्र तत्र विनियोगो नेतरेषां पञ्चानामित्यत आह—त्रयमन्तरङ्गं पूर्वेभ्यः । तदिदं साधनत्रयं साध्यसमानविषयत्वेनान्तरङ्गं न त्वेवं यमादयस्तस्मात्ते बहिरङ्गा इत्यर्थः ॥ ७ ॥

---

१ क. ख. °प्रणिधानाज्जि° । २ क. ख. च. °न्यथैवा° । ३ घ. ङ. एवमुक्त° ।

तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥

तदप्यन्तरङ्गं साधनत्रयं निर्बीजस्य योगस्य बहिरङ्गं भवति । कस्मात्, तदभावे भावादिति ॥ ८ ॥

अथ निरोधचित्तक्षणेषु चलं गुणवृत्तमिति कीदृशस्तदा चित्तपरिणामः--

व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥९॥

---

साधनत्रयस्य संप्रज्ञात एवान्तरङ्गत्वं न त्वसंप्रज्ञाते तस्य निर्बीजतया तैः सह समानविषयत्वाभावाच्चेषु चिरनिरुद्धेषु संप्रज्ञातपरमकाष्ठापरनामज्ञानप्रसादरूपपरवैराग्यानन्तरमुत्पादाच्चेत्याह—*तदिति । तदपि बहिरङ्गं निर्बीजस्य । समानविषयत्वमन्तरङ्गत्वप्रयोजकमिह न तु तदनन्तरभावस्तस्य बहिरङ्गेश्वरप्रणिधानवर्तितया सव्यभिचारत्वादिति स्थिते सव्यभिचारमप्यन्तरङ्गलक्षणं तदनन्तरभावित्वमस्य नास्ति । तस्माद्दूरापेताऽन्तरङ्गता संयमस्यासंप्रज्ञात इति दर्शयितुं तदभावे भावादित्युक्तम् ॥ ८ ॥

परिणामत्रयसंयमादित्यत्रोपयोक्ष्यमाणपरिणामत्रयं प्रतिपिपादयिषुर्निर्बीजप्रसङ्गेन पृच्छति—अथेति । व्युत्थानसंप्रज्ञातयोश्चित्तस्य स्फुटतरपरिणामभेदप्रचयानुभवान्न प्रश्नावतारो निरोधे तु नानुभूयते परिणामः । न चाननुभूयमानो नास्ति, चित्तस्य त्रिगुणतया चलत्वेन गुणानां क्षणमप्यपरिणामस्यासंभवादित्यर्थः । प्रश्नोत्तरं सूत्रम्—**व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः** । असंप्रज्ञातं समाधिमपेक्ष्य संप्रज्ञातो व्युत्थानम् । निरुध्यतेऽनेनेति निरोधो ज्ञानप्रसादः परं वैराग्यं तयोर्व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ । तत्र व्युत्थानसंस्कारस्याभिभवो निरोधसंस्कारस्याऽऽविर्भावश्चित्तस्य धर्मिणो निरोधक्षणस्य निरोधावसरस्य द्वयोरवस्थयोरन्वयः । नहि चित्तं धर्मि संप्रज्ञातावस्थायामसंप्रज्ञातावस्थायां च संस्काराभिभवप्रादुर्भावयोः स्वरूपेण भिद्यत इति । ननु यथोत्तरे क्लेशा अविद्यामूला अविद्यानिवृत्तौ निवर्तन्त इति न तु तन्निवृत्तौ पृथक्प्रयत्नान्तरमास्थीयत एवं व्युत्थानप्रत्ययमूलाः संस्कारा व्युत्थानप्रत्ययनिवृत्तावेव

---

* तदितीत्यधिकम् ।

---

१ ख. ञ. झ. °ननि° ।

व्युत्थानसंस्काराश्चित्तधर्मा न ते प्रत्ययात्मका इति प्रत्ययनिरोधे न निरुद्धा निरोधसंस्कारा अपि चित्तधर्मास्तयोरभिभवप्रादुर्भावौ व्युत्थानसंस्कारा हीयन्ते निरोधसंस्कारा आधीयन्ते निरोधक्षणं चित्तमन्वेति तदेकस्य चित्तस्य प्रतिक्षणमिदं संस्कारान्यथात्वं निरोधपरिणामः । तदा संस्कारशेषं चित्तमिति निरोधसमाधौ व्याख्यातम् ॥ ९ ॥

**तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥**

निरोधसंस्कारा[1]भ्यासपाटवापेक्षा प्रशान्तवाहिता चित्तस्य भवति । तत्संस्कारमान्द्ये व्युत्थानधर्मिणा संस्कारेण निरोधधर्मसंस्कारोऽभिभूयत इति ॥ १० ॥

**सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥**

सर्वार्थता चित्तधर्मः । एकाग्रताऽपि चित्तधर्मः । सर्वार्थतायाः क्षयस्तिरोभाव इत्यर्थः । एकाग्रताया उदय आविर्भाव

---

निवर्तन्त इति तन्निवृत्तौ न निरोधसंस्कारोऽपेक्षितव्य इत्यत आह—व्युत्थानसंस्कारा इति । न कारणमात्रनिवृत्तिः कार्यनिवृत्तिहेतुर्मा भूत्कुविन्दनिवृत्तावपि पटस्य निवृत्तिरपि तु यत्कारणात्मकं यत्कार्यं तत्कारणनिवृत्तौ तत्कारणनिवृत्तिः । उत्तरे च क्लेशा अविद्यात्मान इत्युक्तमतस्तन्निवृत्तौ तेषां निवृत्तिरुपपन्ना । न त्वेवं प्रत्ययात्मानः संस्काराश्चिरानिरुद्धे प्रत्यये संप्रति स्मरणदर्शनात् । तस्मात्प्रत्ययनिवृत्तावपि तन्निवृत्तौ निरोधसंस्कारप्रचय एवोपासनीय इत्यर्थः । सुगममन्यत् ॥ ९ ॥

सर्वथा व्युत्थानसंस्काराभिभवे तु बलवता निरोधसंस्कारेण चित्तस्य कीदृशः परिणाम इत्यत आह—**तस्य प्रशान्तवाहिता संस्कारात्** । व्युत्थानसंस्कारमलरहितनिरोधसंस्कारपरम्परामात्रवाहिता प्रशान्तवाहिता । कस्मात्पुनः संस्कारपाटवमपेक्षते न तु संस्कारमात्रमित्यत आह—**तत्संस्कारमान्द्य** इति । तदिति निरोधं परामृशति । ये तु नाभिभूयत इति पठन्ति ते तदा व्युत्थानं परामृशन्ति ॥ १० ॥

संप्रज्ञातसमाधिपरिणामावस्थां चित्तस्य दर्शयति—**सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः** । विक्षिप्तता सर्वार्थता । सत्र विनश्यतीति क्षयस्तिरोभावो नासदुत्पद्यत इति उदय आविर्भावः । स्वात्मभूतयोः सर्वार्थतैकाग्र-

---

१ ग. घ. ङ. 'रान्निरोधसंस्काराभ्या' । २ क. ख. घ. ङ. च. 'धर्मः सं' ।

इत्यर्थः । तयोर्धर्मित्वेनानुगतं चित्तं, तदिदं चित्तमपायोपजनयोः स्वात्मभूतयोर्धर्मयोरनुगतं समाधीयते स चित्तस्य समाधिपरिणामः ॥ ११ ॥

ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ
चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥

समाहितचित्तस्य पूर्वप्रत्ययः शान्त उत्तरस्तत्सदृश उदितः, समाधिचित्तमुभयोरनुगतं पुनस्तथैवाऽऽसमाधिभ्रेषादिति । स खल्वयं धर्मिणश्चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥

एतेन भूतेन्द्रियेषु धर्मलक्षणावस्था-
परिणामा व्याख्याताः ॥ १३ ॥

एतेन पूर्वोक्तेन चित्तपरिणामेन धर्मलक्षणावस्थारूपेण भूतेन्द्रियेषु धर्मपरिणामो लक्षणपरिणामोऽवस्थापरिणामश्चोक्तो वेदितव्यः । तत्र व्युत्थाननिरोधयोरभिभवप्रादुर्भावौ धर्मिणि धर्मपरि-

---

तयोर्धर्मयोर्यावपायोपजनौ सर्वार्थताया अपाय एकाग्रताया उपजनस्तयोरनुगतं चित्तं समाधीयते पूर्वापरीभूतसाध्यमानसमाधिविशेषणं भवतीति ॥ ११ ॥

**ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः** । पुनः समाधेः पूर्वापरीभूताया अवस्थायाः समाधिनिष्पत्तौ सत्यां शान्तोदितावतीतवर्तमानौ, तुल्यौ च तौ प्रत्ययौ चेति तुल्यप्रत्ययौ । एकाग्रतायां तु द्वयोः सादृश्यम् । समाहितचित्तस्येति समाधिनिष्पत्तिर्दर्शिता । तथैवैकाग्रमेव । अवधिमाह–**आसमाधिभ्रेषाद्भ्रंशादिति** ॥ १२ ॥

प्रासङ्गिकं च वक्ष्यमाणौपयिकं च भूतेन्द्रियपरिणामं विभजते–**एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः** । व्याचष्टे–एतेनेति । ननु चित्तपरिणतिमात्रमुक्तं न तु तत्प्रकारा धर्मलक्षणावस्थापरिणामास्तत्कथं तेषामतिदेश इत्यत आह–**तत्र व्युत्थाननिरोधयोरिति** । धर्मलक्षणावस्थाशब्दाः परं नोच्चारिता न तु धर्मलक्षणावस्थापरिणामा नोक्ता इति संक्षेपार्थः । तथा हि–**व्युत्थाननिरोधसंस्कारयो**-रित्यत्रैव सूत्रे धर्मपरिणाम उक्तः । इमं च धर्मपरिणामं दर्शयता तेनैव धर्माधिक-

---

१ क. ग. घ. ङ. °ननयोः । २ ज. °भूतयोरवस्थयोः स° ।

णामः । लक्षणपरिणामश्च । निरोधस्त्रिलक्षणस्त्रिभिरध्वभिर्युक्तः । स खल्वनागतलक्षणमध्वानं प्रथमं हित्वा धर्मत्वमनतिक्रान्तो वर्तमानलक्षणं प्रतिपन्नः । यत्रास्य स्वरूपेणाभिव्यक्तिः । एषोऽस्य द्वितीयोऽध्वा । न चातीतानागताभ्यां लक्षणाभ्यां वियुक्तः ।

तथा व्युत्थानं त्रिलक्षणं त्रिभिरध्वभिर्युक्तं वर्तमानलक्षणं हित्वा धर्मत्वमनतिक्रान्तमतीतलक्षणं प्रतिपन्नम् । एषोऽस्य तृतीयोऽध्वा । न चानागतवर्तमानाभ्यां लक्षणाभ्यां वियुक्तम् । एवं पुनर्व्युत्थानमुपसंपद्यमानमनागतलक्षणं हित्वा धर्मत्वमनतिक्रान्तं वर्तमानलक्षणं प्रतिपन्नम् । यत्रास्य स्वरूपाभिव्यक्तौ सत्यां व्यापारः । एषोऽस्य द्वितीयोऽध्वा । न चातीतानागताभ्यां लक्षणाभ्यां वियुक्तमिति । एवं पुनर्निरोध एवं पुनर्व्युत्थानमिति ।

---

रणो लक्षणपरिणामोऽपि सूचित एवेत्याह—लक्षणपरिणाम इति । लक्ष्यतेऽनेनेति लक्षणं कालभेदः । तेन हि लक्षितं वस्तु वस्त्वन्तरेभ्यः कालान्तरयुक्तेभ्यो व्यवच्छिद्यत इति । निरोधस्त्रिलक्षणः । अस्यैव व्याख्यानं त्रिभिरध्वभिर्युक्तः । अध्वशब्दः कालवचनः । स खल्वनागतलक्षणमध्वानं प्रथमं हित्वा, तत्किमध्ववद्धर्मत्वमप्यतिपतति नेत्याह—धर्मत्वमनतिक्रान्तो वर्तमानलक्षणं प्रतिपन्नः । य एव निरोधोऽनागत आसीत्स एव संप्रति वर्तमानो नतु निरोधोऽनिरोध इत्यर्थः । वर्तमानतास्वरूपव्याख्यानम्—यत्रास्य स्वरूपेण स्वोचितार्थक्रियाकारिणा रूपेणाभिव्यक्तिः समुदाचारः । एषोऽस्य प्रथममनागतमध्वानमपेक्ष्य द्वितीयोऽध्वा । स्यादेतत् । अनागतमध्वानं हित्वा चेद्वर्तमानतामापन्नस्तां च हित्वाऽतीततामापत्स्यते हन्त भोरध्वनामुत्पादविनाशौ स्याताम् । न चेष्येते, न ह्यसत उत्पादो नापि सतो विनाश इत्यत आह—न चातीतानागताभ्यां सामान्यात्मनाऽवस्थिताभ्यां वियुक्त इति ।

अनागतस्य निरोधस्य वर्तमानतालक्षणं दर्शयित्वा वर्तमानव्युत्थानस्यातीततां तृतीयमध्वानमाह—तथा व्युत्थानमिति । तत्किं निरोध एवानागतो न व्युत्थानं नेत्याह—एवं पुनर्व्युत्थानमिति । व्युत्थानजात्यपेक्षया पुनर्भावो न व्यक्त्यपेक्षया । न ह्यतीतं पुनर्भवतीति । स्वरूपाभिव्यक्तिरर्थक्रियाक्षमस्याऽऽविर्भावः । स चैवंलक्षणपरिणाम उक्तस्तज्जातीयेषु पौनःपुन्येन वर्तत इत्यत आह—एवं पुनरिति ।

---

१ ग. घ. ङ. च. °मानं ल° । २ ख. ग. घ. ङ. च. °मानं ल° । ३ ग. घ. ङ. च. °मानं ल° । ४ ख. °तारूप° । ५ क. ख. झ. °णा स्वरू° । ६ क. ख. ज. चेष्यते ।

**तथाऽवस्थापरिणामः। तत्र निरोधक्षणेषु निरोधसंस्कारा बलवन्तो भवन्ति दुर्बला व्युत्थानसंस्कारा इति। एष धर्माणामवस्थापरिणामः। तत्र धर्मिणो धर्मैः परिणामो धर्माणां त्र्यध्वनां लक्षणैः परिणामो लक्षणानामप्यवस्थाभिः परिणाम इति। एवं धर्मलक्षणावस्थापरिणामैः शून्यं न क्षणमपि गुणवृत्तमवतिष्ठते। चलं च गुणवृत्तम्। गुणस्वाभाव्यं तु प्रवृत्तिकारणमुक्तं गुणानामिति। एतेन भूतेन्द्रियेषु धर्मधर्मिभेदात्त्रिविधः परिणामो वेदितव्यः।**

**परमार्थतस्त्वेक एव परिणामः। धर्मिस्वरूपमात्रो हि धर्मो**

---

धर्मपरिणामसूचितमेवावस्थापरिणाममाह—**तथेति**। धर्माणां वर्तमानाध्वनां बलवत्त्वाबलवत्त्वे अवस्था तस्याः प्रतिक्षणं तारतम्यं परिणामः। उपसंहरति—**एष इति**। परिणामभेदानां संबन्धिभेदान्निर्धारयति—**तत्रानुभवानुसाराद्धर्मिण इति**। तत्किमेष परिणामो गुणानां कादाचित्को नेत्याह—**एवमिति**। कस्मात्पुनरयं परिणाम सदातन इत्यत आह—**चलं चेति**। चो हेत्वर्थः। वृत्तं प्रचारः। एतदेव कुत इत्यत आह—**गुणस्वाभाव्यमिति**। उक्तमत्रैव पुरस्तात्। सोऽयं त्रिविधोऽपि चित्तपरिणामो भूतेन्द्रियेषु[२] सूत्रकारेण निर्दिष्ट इत्याह—**एतेनेति**। एष धर्मपरिणामभेदो धर्मधर्मिणोर्भेदमालक्ष्य। तत्र भूतानां पृथिव्यादीनां धर्मिणां गवादिर्घटादिर्वा धर्मपरिणामः। धर्माणां चातीतानागतवर्तमानरूपता लक्षणपरिणामः। वर्तमानलक्षणापन्नस्य[३] गवादेर्बाल्यकौमारयौवनवार्धक्यमवस्थापरिणामः। घटादीनामपि नवपुरातनताऽवस्थापरिणामः। एवमिन्द्रियाणामपि धर्मिणां तत्तन्नीलाद्यालोचनं धर्मपरिणामो धर्मस्य वर्तमानतादिलक्षणपरिणामो[४] वर्तमानलक्षणस्य[५] रत्नाद्यालोचनस्य स्फुटत्वास्फुटत्वादिरवस्थापरिणामः। सोऽयमेवंविधो भूतेन्द्रियपरिणामो धर्मिणो धर्मलक्षणावस्थानां भेदमाश्रित्य वेदितव्यः।

अभेदमाश्रित्याऽऽह—**परमार्थतस्त्विति**। तुशब्दो भेदपक्षाद्विशिनष्टि। पारमार्थिकत्वमस्य ज्ञाप्यते न त्वन्यस्य परिणामत्वं[६] निषिध्यते। कस्मात्—**धर्मिस्वरूपमात्रो हीति**। ननु यदि धर्मिविक्रियैव धर्मः कथमसंकरप्रत्ययो लोके परिणामेष्वि-

---

१ क. ख. च. °मः। नि°। २ क. ख. झ. °मेधर्मिमे°। ३ क. °नताल°। ४ ज. °ताल°। ५ ज. °नताल°। ६ ख. झ. °मस्य नि°।

धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्च्यत इति । तत्र धर्मस्य धर्मिणि वर्तमानस्यैवाध्वस्वतीतानागतवर्तमानेषु भावान्यथात्वं भवति न[1] तु द्रव्यान्यथात्वम् । यथा सुवर्णभाजनस्य भित्त्वाऽन्यथाक्रियमाणस्य भावान्यथात्वं भवति न सुवर्णान्यथात्वमिति ।

अपर आह—धर्मानभ्यधिको धर्मी पूर्वतत्त्वानतिक्रमात् ।

पूर्वापरावस्थाभेदमनुपातितः कौटस्थ्येनैव परिवर्तेत यद्यन्वयी स्यादिति ।

अयमदोषः । कस्मात् । एकान्ततानभ्युपगमात् । तदेतत्त्रै-

---

त्यत आह—धर्मद्वारेति । धर्मशब्देन धर्मलक्षणावस्थाः परिगृह्यन्ते । तद्द्वारेण धर्मिण एव विक्रियेत्येका चासंकीर्णा च[3] । तद्द्वाराणामभेदेऽपि * धर्मिणः परस्परसंकरात् । × ननु धर्माणामभिन्नत्वे = धर्मिणोऽध्वनां च भेदे धर्मिणोऽनन्यत्वेन धर्मेणापीह धर्मिवद्भवितव्यमित्यत आह—तत्र धर्मस्येति । भावः संस्थानभेदः । सुवर्णादेर्यथा भाजनस्य रुचकस्वरितकव्यपदेशभेदो भवति तन्मात्रमन्यथा भवति न तु द्रव्यं सुवर्णमसुवर्णतामुपैति । अत्यन्तभेदाभावादिति ।

÷ वक्ष्यमाणाभिसंधिरेकान्तवादिनं बौद्धमुत्थापयति—अपर आहेति । धर्मा एव हि रुचकादयस्तथोत्पन्नाः परमार्थसन्तो न पुनः सुवर्णं नाम किंचिदेकमनेकेष्वनुगतं द्रव्यमिति । यदि पुनर्निवर्तमानेष्वपि धर्मेषु द्रव्यमनुगतं भवेत्ततो न चितिशक्तिवत्परिणमेतापि तु कौटस्थ्येनैव परिवर्तेत । परिणामात्मकं रूपं परिहाय रूपान्तरेण कौटस्थ्येन परिवर्तनं परिवृत्तिः । यथा चितिशक्तिरन्यथान्यथाभावं भजमानेष्वपि गुणेषु स्वरूपादप्रच्युता कूटस्थनित्यैवं सुवर्णाद्यपि स्यान्न चेष्यते । तस्मान्न द्रव्यमतिरिक्तं धर्मेभ्य इति ।

परिहरति—अयमदोष[4] इति । कस्मात् । एकान्ततानभ्युपगमात्[5] । यदि चितिशक्तेरिव द्रव्यस्यैकान्तिकीं नित्यतामभ्युपगच्छेम तत एवमुपालभ्येमहि । नत्वैकान्तिकीं नित्यतामातिष्ठामहे किंतु तदेतत्त्रैलोक्यं नतु द्रव्यमात्रं व्यक्तेरर्थक्रियाकारिणो

---

* क. पुस्तके धर्मिणामिति वर्तते तत्प्रामादिकम् । धर्मिण इति पञ्चम्यन्तं पूर्वान्वयि । × क. झ. पुस्तकयोः ' ननु धर्मिणां धर्माणाम् ' इति विद्यते तत्र धर्मिणामित्यधिकमेव । = इदं पञ्चम्यन्तं पूर्वान्वयीति पूर्ववद्बोध्यम् । ÷ क. ज. झ. पुस्तकेषु वक्ष्यमाणोऽभिसंधिरिति पाठो वर्तते स प्रामादिकः ।

---

१ ग. घ. ङ. च. न द्र° । २ ग. घ. ङ. च. °कान्तान° । ३ ख. ज. च । द्वारा । ४ ज. °दोषः क° । ५ ख. ज. झ. °कान्तान° ।

लोक्यं व्यक्तेरपैति नित्यत्वप्रतिषेधात्। अपेतमप्यस्ति विनाशप्रतिषेधात्। संसर्गाच्चास्य सौक्ष्म्यं, सौक्ष्म्याच्चानुपलब्धिरिति।

लक्षणपरिणामो धर्मोऽध्वसु वर्तमानोऽतीतोऽतीतलक्षणयुक्तोऽनागतवर्तमानाभ्यां लक्षणाभ्यामवियुक्तः। तथाऽनागतोऽनागतलक्षणयुक्तो वर्तमानातीताभ्यां लक्षणाभ्यामवियुक्तः। तथा वर्तमानो वर्तमानलक्षणयुक्तोऽतीतानागताभ्यां लक्षणाभ्याम-वियुक्त इति। यथा पुरुष एकस्यां स्त्रियां रक्तो न शेषासु विरक्तो भवतीति।

अत्र लक्षणपरिणामे सर्वस्य सर्वलक्षणयोगादध्वसंकरः

---

रूपादपैति। कस्मान्नित्यत्वप्रतिषेधात्प्रमाणेन। यदि हि घटो व्यक्तेर्नापेयात्कपालशर्करांचूर्णादिष्ववस्थास्वपि व्यक्तो घट इति पूर्ववदुपलब्ध्यर्थक्रिये कुर्यात्तस्मादनित्यं त्रैलोक्यम्। अस्तु तर्ह्यनित्यमेवोपलब्ध्यर्थक्रियारहितत्वेन गगनारविन्दवदतितुच्छत्वादित्यत आह—**अपेतमप्यस्ति**, नात्यन्ततुच्छता येनैकान्ततोऽनित्यं स्यादित्यर्थः। कस्माद्विनाशप्रतिषेधात्प्रमाणेन। तथा हि—यत्तुच्छं न तत्कदाचिदप्युपलब्ध्यर्थक्रिये करोति। यथा गगनारविन्दम्। करोति चैतत्त्रैलोक्यं कदाचिदुपलब्ध्यर्थक्रिये इति। तथोत्पत्तिमद्द्रव्यत्वधर्मलक्षणावस्थायोगित्वादयोऽप्यत्यन्ततुच्छगगननलिननरविषाणादिव्यावृत्ताः सत्त्वहेतव उदाहार्याः। तथा च धर्मी नात्यन्तं नित्यो येन चितिशक्तिवत्कूटस्थनित्यः स्यात्किंतु कथंचिन्नित्यः। तथा च परिणामीति सिद्धम्। एतेन मृत्पिण्डाद्यवस्थासु कार्याणां घटादीनामनागतानां सत्त्वं वेदितव्यम्। स्यादेतत्। अपेतमपि चेदस्ति कस्मात्पूर्ववन्नोपलभ्यत इत्यत आह—**संसर्गा**त्स्वकारणलयात्**सौक्ष्म्यं** दर्शनानर्हत्वं ततश्चानुपलब्धिरिति।

तदेवं धर्मपरिणामं समर्थ्य लक्षणपरिणाममपि लक्षणानां परस्परानुगमनेन समर्थयते—**लक्षणपरिणाम** इति। एकैकं लक्षणं लक्षणान्तराभ्यां समनुगतमित्यर्थः। नन्वेकलक्षणयोगे लक्षणान्तरे नानुभूयेते तत्कथं तद्योग इत्यत आह—**यथा पुरुष** इति। नह्यनुभवाभावः प्रमाणसिद्धमपलपति, तदुत्पाद एव तत्र तत्सद्भावे प्रमाणमसत उत्पादासंभवान्नरविषाणवदिति।

परोक्तं दोषमुत्थापयति—**अत्र लक्षणपरिणाम** इति। यदा धर्मो वर्तमानस्तदैव यद्यतीतोऽनागतश्च तदा त्रयोऽप्यध्वानः संकीर्येरन्नक्रमेण चाध्वनां भावेऽस-

---

१ ख. ज. सद्वेत्°।

प्राप्नोतीति परैर्दोषश्चोद्यत इति । तस्य परिहारः—धर्माणां धर्मत्वमप्रसाध्यम् । सति च धर्मत्वे लक्षणभेदोऽपि वाच्यो न वर्तमानसमय एवास्य धर्मत्वम् । एवं हि न चित्तं रागधर्मकं स्यात्क्रोधकाले रागस्यासमुदाचारादिति ।

किंच त्रयाणां लक्षणानां युगपदेकस्यां व्यक्तौ नास्ति संभवः । क्रमेण तु स्वव्यञ्जकाञ्जनस्य भावो भवेदिति । उक्तं च रूपातिशया वृत्त्यतिशयाश्च[1] विरुध्यन्ते, सामान्यानि त्वतिशयैः सह प्रवर्तन्ते । तस्मादसंकरः । यथा रागस्यैव क्वचित्समुदाचार इति न तदानीमन्यत्राभावः किंतु केवलं सामान्येन समन्वागत इत्यस्ति तदा तत्र तस्य भावः । तथा लक्षणस्येति[2] ।

---

दुत्पादप्रसङ्ग इति भावः । परिहरति—**तस्य परिहार** इति । वर्तमानतैव हि धर्माणामनुभवसिद्धा ततः प्राक्पश्चात्कालसंबन्धमवगमयति । न खल्वसदुत्पद्यते न च सद्विनश्यति । तदिदमाह—**एवं हि न चित्तमिति** । क्रोधोत्तरकालं हि चित्तं रागधर्मकमनुभूयते । यदा च रागः क्रोधसमयेऽनागतत्वेन नाऽऽसीत्कथमसावुत्पद्येतानुत्पन्नश्च कथमनुभूयेतेति ।

भवत्वेवं तथाऽपि कुतोऽध्वनामसंकर इति पृच्छति—**किंचेति** । किं कारणमसंकरे । चः पुनरर्थे । उत्तरमाह—**त्रयाणां लक्षणानां युगपन्नास्ति संभवः** । कस्मिन्नेकस्यां चित्तवृत्तौ । **क्रमेण तु** लक्षणानामेकतमस्य **स्वव्यञ्जकाञ्जनस्य भावो भवेत्**संभवेल्लक्ष्याधीननिरूपणतया लक्षणानां लक्ष्याकारेण तद्वत्ता । अत्रैव पञ्चशिखाचार्यसंमतिमाह—**उक्तं चेति** । एतच्च प्रागेव व्याख्यातम् । उपसंहरति—**तस्मादिति** । आविर्भावतिरोभावरूपविरुद्धधर्मसंसर्गादसंकरोऽध्वनामिति । दृष्टान्तमाह—**यथा रागस्येति** । पूर्वं क्रोधस्य रागसंबन्धावगमो दर्शित इति । इदानीं तु विषयान्तरवर्तिनो रागस्य विषयान्तरवर्तिना रागान्तरेण संबन्धावगम इति । दार्ष्टान्तिकमाह—**तथा लक्षणस्येतीति** ।

ननु सत्यप्यनेकान्ताभ्युपगमेऽभेदोऽस्तीति धर्मलक्षणावस्थान्यत्वे तदभिन्नस्य धर्मि-

---

१ ग. घ. ङ. °श्च परस्परेण वि° । २ ख. ज. झ. °स्येति ।

**न धर्मी त्र्यध्वा धर्मास्तु त्र्यध्वानस्ते लक्षिता अलक्षितास्तत्र लक्षितास्तां तामवस्थां प्राप्नुवन्तोऽन्यत्वेन प्रतिनिर्दिश्यन्तेऽवस्थान्तरतो न द्रव्यान्तरतः। यथैका रेखा शतस्थाने शतं दशस्थाने दशैका चैकस्थाने। यथा चैकत्वेऽपि स्त्री माता चोच्यते दुहिता च स्वसा चेति।**

**अवस्थापरिणामे कौटस्थ्यप्रसङ्गदोषः कैश्चिदुक्तः। कथम्। अध्वनो व्यापारेण व्यवहितत्वात्। यदा धर्मः स्वव्यापारं न करोति तदाऽनागतो यदा करोति तदा वर्तमानो यदा कृत्वा निवृत्तस्तदाऽतीत इत्येवं धर्मधर्मिणोर्लक्षणानामवस्थानां च कौटस्थ्यं प्राप्नोतीति परैर्दोष उच्यते।**

---

णोऽप्यन्यत्वप्रसङ्गः। स एव च नेष्यते तदनुगमानुभवविरोधादित्यत आह—**न धर्मी त्र्यध्वा** यतस्तदभिन्ना धर्मास्त्र्यध्वानः। धर्माणामध्वत्रययोगमेव स्फोरयति—**ते लक्षिता** अभिव्यक्ता वर्तमाना इति यावत्। **अलक्षिता** अनभिव्यक्ता अनागता अतीता इ(श्चे)ति यावत्। **तत्र लक्षितास्तां तामवस्थां** बलवत्त्वदुर्बलत्वादिकां **प्राप्नुवन्तोऽन्यत्वेन प्रतिनिर्दिश्यन्तेऽवस्थान्तरतो न द्रव्यान्तरतः**। अवस्थाशब्देन धर्मलक्षणावस्था उच्यन्ते। एतदुक्तं भवति—अनुभव एव हि धर्मिणो धर्मादीनां भेदाभेदौ व्यवस्थापयति। नह्यैकान्तिकेऽभेदे धर्मादीनां धर्मिणो धर्मिरूपवद्धर्मादित्वम्। नाप्यैकान्तिके भेदे गवाश्ववद्धर्मादित्वम्। स चानुभवोऽनैकान्तिकत्वमवस्थापयन्नपि धर्मादिषूपजनापायधर्मकेष्वपि धर्मिणमेकमनुगमयन्धर्मांश्च परस्परतो व्यावर्तयन्प्रत्यात्ममनुभूयत इति तदनुसारिणो वयं न तमतिवर्त्य स्वेच्छया धर्मानुभवान्व्यवस्थापयितुमीश्महे इति। अत्रैव लौकिकं दृष्टान्तमाह—**यथैका रेखेति**। यथा तदेव रेखास्वरूपं तत्तत्स्थानापेक्षया शतादित्वेन व्यपदिश्यत एवं तदेव धर्मिरूपं तत्तद्धर्मलक्षणावस्थाभेदेनान्यत्वेन प्रतिनिर्दिश्यत इत्यर्थः। दार्ष्टान्तिकार्थं दृष्टान्तान्तरमाह—**यथा चैकत्वेऽपि**।

अत्रान्तरे परोक्तं दोषमुत्थापयति—**अवस्थेति**। अवस्थापरिणामे धर्मलक्षणावस्थापरिणामे कौटस्थ्यदोषप्रसङ्ग उक्तो धर्मिधर्मलक्षणावस्थानाम्। पृच्छति—**कथमिति**। उत्तरम्—**अध्वनो व्यापारेणेति**। दध्नः किल योऽनागतोऽध्वा तस्य व्यापारः क्षीरस्य वर्तमानत्वं तेन व्यवहितत्वाद्धेतोः। यदा धर्मो दधिलक्षणः स्वव्यापारं दाधिकाद्यारम्भं क्षीरे सन्नपि न करोति तदाऽनागतः। यदा करोति तदा वर्त-

---

१ ग. घ. ङ. च. °ताश्च तां ता°। २ ग. दशैकं।

**नासौ दोषः । कस्मात् । गुणिनित्यत्वेऽपि गुणानां विमर्द-वैचित्र्यात् । यथा संस्थानमादिमद्धर्ममात्रं शब्दादीनां गुणानां विनाश्यविनाशिनामेवं लिङ्गमादिमद्धर्ममात्रं सत्त्वादीनां गुणानां विनाश्यविनाशिनां तस्मिन्विकारसंज्ञेति ।**

**तत्रेदमुदाहरणम्—मृद्धर्मी पिण्डाकाराद्धर्माद्धर्मान्तरमुपसंपद्य-मानो धर्मतः परिणमते घटाकार इति । घटाकारोऽनागतं लक्षणं हित्वा वर्तमानलक्षणं प्रतिपद्यत इति लक्षणतः परिणमते । घटो नवपुराणतां प्रतिक्षणमनुभवन्नवस्थापरिणामं प्रतिपद्यत इति । धर्मिणोऽपि धर्मान्तरमवस्था धर्मस्यापि लक्षणान्तरमवस्थेत्येक**

---

मानः । यदा कृत्वा निवृत्तः सन्नेव स्वव्यापाराद्धाधिकाद्यारम्भात्तदाऽतीत इति । एवं त्रैकाल्येऽपि सत्त्वाद्धर्मधर्मिणोर्लक्षणानामवस्थानां च कौटस्थ्यं प्राप्नोति । सर्वदा सत्ता हि नित्यत्वं, चतुर्णामपि च सर्वदा सत्त्वेऽसत्त्वे वा नोत्पादः, तावन्मात्रं च लक्षणं कूट-स्थनित्यतायाः[2] । नहि चितिशक्तेरपि कूटस्थनित्यायाः कश्चिदन्यो विशेष इति भावः।

परिहरति—**नासौ दोषः, कस्माद्गुणिनित्यत्वेऽपि गुणानां** विमर्दोऽन्योन्या-भिभाव्याभिभावकत्वं तस्य वैचित्र्यात् । एतदुक्तं भवति—यद्यपि सर्वदा सत्त्वं चतु-र्णामपि गुणि[3]गुणानां तथाऽपि गुणविमर्दवैचित्र्येण तदात्मभूततद्विकाराविर्भावतिरोभा-वभेदेन परिणामशालितया न कौटस्थ्यम् । चितिशक्तेस्तु न स्वात्मभूतविकाराविर्भाव-तिरोभाव इति कौटस्थ्यम् ।

यथाऽऽहुः—नित्यं तमाहुर्विद्वांसो यत्स्वभावो न नश्यति । इति ।

विमर्दवैचित्र्यमेव विकारवैचित्र्ये हेतुं प्रकृतौ विकृतौ च दर्शयति—**यथा संस्थानं** पृथिव्यादिपरिणामलक्षणमा**दिमद्धर्ममात्रं** विनाशि तिरोभावि **शब्दादीनां** शब्दस्प-र्शरूपरसगन्धतन्मात्राणां स्वकार्यमपेक्ष्याविनाशिनामतिरोभाविनाम् । प्रकृतौ दर्श-यति—**एवं लिङ्गमिति**। तस्मिन्विकारसंज्ञा न त्वेवं विकारवती चितिशक्तिरिति भावः।

तदेवं परीक्षकसिद्धां विकृतिं प्रकृतिं चोदाहृत्य विकृतावेव लोकसिद्धायां गुणवि-मर्दवैचित्र्यं धर्मलक्षणावस्थापरिणामवैचित्र्यहेतुमुदाहरति—**तत्रेदमुदाहरणमिति** । न चायं नियमो लक्षणानामेवावस्थापरिणाम इति । सर्वेषामेव धर्मलक्षणावस्थाभेदानाम-वस्थाशब्दवाच्यत्वादेक एवावस्थापरिणामः सर्वसाधारण इत्याह—**धर्मिणोऽपीति** ।

---

१ ग. घ. ङ. च. °नां वि° । २ ख. °नित्यतायां क° । ३ ज. °पि त° । ४ ख. गुण° ।

एव द्रव्यपरिणामो भेदेनोपदर्शित इति । एवं पदार्थान्तरेष्वपि योज्यमिति । त एते धर्मलक्षणावस्थापरिणामा धर्मिस्वरूपमनतिक्रान्ता इत्येक एव परिणामः सर्वानमून्विशेषानभिप्लवते । अथ कोऽयं परिणामः । अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणाम इति ॥ १३ ॥

तत्र—

**शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥**

योग्यतावच्छिन्ना धर्मिणः शक्तिरेव धर्मः । स च फलप्रसवभेदानुमितै एकस्यान्योन्यश्च परिदृष्टः । तत्र वर्तमानः स्वव्यापारमनुभवन्धर्मी धर्मान्तरेभ्यः शान्तेभ्यश्चाव्यपदेश्येभ्यश्च भिद्यते । यदा तु सामान्येन समन्वागतो भवति तदा धर्मिस्वरूपमात्रत्वात्कोऽसौ केन भिद्येत ।

---

व्यापकं परिणामलक्षणमाह—**अवस्थितस्य द्रव्यस्येति** । धर्मशब्द आश्रितत्वेन धर्मलक्षणावस्थावाचकः ॥ १३ ॥

यस्यैष त्रिविधः परिणामस्तं धर्मिणं सूत्रेण लक्षयति—**तत्र—शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी** । धर्मोऽस्यास्तीति धर्मीति नाविज्ञाते धर्मे स शक्यो ज्ञातुमिति धर्मं दर्शयति—**योग्यतेति** । धर्मिणो द्रव्यस्य मृदादेः शक्तिरेव चूर्णपिण्डघटाद्युत्पत्तिशक्तिरेव धर्मस्तेषां तत्राव्यक्तत्वेन भाव इति यावत् । नन्वेवमव्यक्ततया सन्तस्ते ततः प्रादुर्भवन्तु । उदकाहरणादयस्तु तैः स्वकारणादनासादिताः कुतः प्राप्ता इत्यत उक्तम्—**योग्यतावच्छिन्नेति** । याऽसौ घटादीनामुत्पत्तिशक्तिः सोदकाहरणादियोग्यतावच्छिन्ना, तेनोदकाहरणादयोऽपि घटादिभिः स्वकारणादेव प्राप्ता इति नाऽऽकस्मिका इति भावः । अथवा के धर्मिण इत्यत्रोत्तरम्—**योग्यतावच्छिन्ना धर्मिण** इति । को धर्म इत्यत्रोत्तरं **शक्तिरेव** धर्मस्तेषां योग्यतैव धर्म इत्यर्थः । अतस्तद्वान्धर्मीति सिद्धं भवति । तत्सद्भावे प्रमाणमाह—**स च फलप्रसवभेदानुमित एकस्य** धर्मिणोऽन्यश्चान्यश्च चूर्णपिण्डघटादिरूप इत्यर्थः । कार्यभेददर्शनाच्च भिन्न इति यावत् । परिदृष्ट उपलब्धः । तत्रानुभवारोहिणो वर्तमानस्य मृत्पिण्डस्य शान्ताव्यपदेश्याभ्यां मृच्चूर्णमृद्घटाभ्यां भेदमाह—**तत्र वर्तमान इति** । यदि न भिद्येत पिण्डवच्चूर्णघटयोरपि तद्वदेव स्वव्यापारव्याप्तिप्रसङ्ग इति भावः । अव्यक्तस्य तु पिण्डस्य नोक्तं भेदसाधनं संभवतीत्याह—**यदा त्विति** । कोऽसौ केन भेदसाधनेन भिद्येतेति ।

---

१ क. ग. घ. ङ. च. °तसद्भाव ए° । २ क. च. °न्यश्चान्यश्च । ३ क. °र्यदर्शनात्कार्यभे° । ४ ज. °नात्तत्कार्यदर्शनाच्च । ५ ख. °त तर्हि पि° ।

तत्र[1] ये खलु धर्मिणो धर्माः शान्ता उदिता अव्यपदेश्या-श्चेति, तत्र शान्ता ये कृत्वा व्यापारानुपरताः सव्यापारा उदि-तास्ते चानागतस्य लक्षणस्य समनन्तरा वर्तमानस्यानन्तरा अतीताः । किमर्थमतीतस्यानन्तरा न भवन्ति वर्तमानाः, पूर्वप-श्चिमताया अभावात् । यथाऽनागतवर्तमानयोः पूर्वपश्चिमता नैवमतीस्य । तस्मान्नातीतस्यास्ति समनन्तरः । तदनागत एव समनन्तरो भवति वर्तमानस्येति ।

अथाव्यपदेश्याः के । सर्वं सर्वात्मकमिति । यत्रोक्तम्—जल-भूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरेषु दृष्टम् । तथा

---

तदेवं धर्माणां भेदसाधनमभिधाय तं भेदं[2] विभजते—तत्र ये खल्विति । उदिता इति वर्तमाना इत्यर्थः । अध्वनां पौर्वापर्यं नियमयति—ते चेति । चोदयति—किमर्थमिति । किंनिमित्तमतीतस्यानन्तरा न भवन्ति वर्तमानाः । हेतुमाह[3] सिद्धा-न्ती—पूर्वपश्चिमताया अभावात् । विषयेण विषयिणीमनुपलब्धिं सूचयति । अनुपलम्भमेवोपलम्भवैधर्म्येण दर्शयति—यथाऽनागतवर्तमानयोरिति । उपसंह-रति—त[4]त्तस्मादनागत एव समनन्तरः पूर्वत्वेन भवति वर्तमानस्य नातीतः । अती-तस्य वर्तमानः पूर्वत्वेन समनन्तरो नाव्यपदेश्यः[5] । तस्मादध्वनां यविष्ठोऽतीत इति सिद्धम् ।

स्यादेतत् । अनुभूयमानानुभूततयोदितातीतौ शक्यावुन्नेतुमव्यपदेश्यास्तु पुनर्धर्मा अव्यपदेश्यतयैवं शक्या नोन्नेतुमित्याशयवान्पृच्छति—अथाव्यपदेश्याः के केषु समीक्षामहे । अत्रोत्तरमाह—सर्वं सर्वात्मकमिति । यत्रोक्तमिति[6] । तदेवोपपादयति—जलभूम्योरिति । जलस्य हि रसरूपस्पर्शशब्दवतो भूमेश्च गन्धरसरूपस्पर्शशब्द-वत्याः पारिणामिकं वनस्पतिलतागुल्मादिषु मूलफलप्रसवपल्लवादिगतरसादिवैश्वरूप्यं दृष्टम् । सोऽयमनेवमात्मिकाया भूमेरनीदृशस्य वा जलस्य न परिणामो भवितुमर्हति । उपपादितं हि नासदुत्पद्यत इति । तथा स्थावराणां पारिणामिकं जङ्गमेषु मनुष्यपशु-मृगादिषु रसादिवैचित्र्यं दृष्टम् । उपयुञ्जाना हि ते फलादीनि रूपादिभेदसंपदमासा-दयन्ति । एवं जङ्गमानां पारिणामिकं स्थावरेषु दृष्टम् । रुधिरावसेकात्किल दाडिमी-

---

१ ग. °त्र त्रयः ख° । ङ. °त्र ते त्रयः ख° । २ क. झ. निगम° । ३ क. ज. झ. °ह–पू° । ४ क. ज. तस्मा° । ५ ज. °देश्य इत्युक्तम् । त° । ६ क. झ. °ति । एत° ।

स्थावराणां जङ्गमेषु जङ्गमानां स्थावरेष्वित्येवं जात्यनुच्छेदेन सर्वं सर्वात्मकमिति ।

देशकालाकारनिमित्तापबन्धान्न खलु समानकालमात्मनामभिव्यक्तिरिति । य एतेष्वभिव्यक्तानभिव्यक्तेषु धर्मेष्वनुपाती सामान्यविशेषात्मा सोऽन्वयी धर्मी । यस्य तु धर्ममात्रमेवेदं निरन्वयं तस्य भोगाभावः । कस्मात्, अन्येन विज्ञानेन कृतस्य कर्मणोऽन्यत्कथं भोक्तृत्वेनाधिक्रियेत । तत्स्मृत्यभावश्च नान्यदृष्टस्य स्मरणमन्यस्यास्तीति । वस्तुप्रत्यभिज्ञानाच्च स्थितोऽन्वयी धर्मी यो धर्मान्यथात्वमभ्युपगतः प्रत्यभिज्ञायते । तस्मान्नेदं धर्ममात्रं निरन्वयमिति ॥ १४ ॥

**क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥**

---

फलानि तालफलमात्राणि भवन्ति । उपसंहरति—**एवं सर्वं**[१] जलभूम्यादि सर्वरसाद्यात्मकम् । तत्र हेतुमाह—**जात्यनुच्छेदेन** जलत्वभूमित्वादिजातेः सर्वत्र प्रत्यभिज्ञायमानत्वेनानुच्छेदात् ।

ननु सर्वं चेत्सर्वात्मकं हन्त भोः सर्वस्य सर्वदा सर्वत्र सर्वथा संनिधानात्समानकालं भावानां व्यक्तिः प्रसज्येत, न खलु संनिहिताविकलकारणं[३] कार्यं विलम्बितुमर्हतीत्यत आह—**देशकालेति** । यद्यपि कारणं सर्वं सर्वात्मकं तथाऽपि यो यस्य कार्यस्य देशो यथा कुङ्कुमस्य काश्मीरः । तेषां सत्त्वेऽपि पाञ्चालादिषु न समुदाचार इति न कुङ्कुमस्य पाञ्चालादिष्वभिव्यक्तिः । एवं निदाघे न प्रावृषः समुदाचार इति न तदा शालीनाम् । एवं न मृगी मनुष्यं प्रसूते न तस्यां[४] मनुष्याकारसमुदाचार इति । एवं नापुण्यवान्सुखरूपं भुङ्क्ते न तस्मिन्पुण्यनिमित्तस्य समुदाचार इति । तस्माद्देशकालाकारनिमित्तानामपबन्धादपगमान्न समानकालमात्मनां भावानामभिव्यक्तिरिति । तदेवं धर्मान्विभज्य तेषु धर्मिणोऽनुगमं दर्शयति—**य एतेष्विति** । सामान्यं धर्मिरूपं विशेषो धर्मस्तदात्मोभयात्मक इत्यर्थः । तदेवमनुगतं धर्मिणं दर्शयित्वा तमनिच्छतो वैनाशिकस्य क्षणिकं विज्ञानमात्रं चित्तमिच्छतोऽनिष्टप्रसङ्गमुक्तं स्मारयति—**यस्य त्विति** । **वस्तुप्रत्यभिज्ञानाच्चेति** । नहि देवदत्तेन दृष्टं यज्ञदत्तः प्रत्यभिजानाति । तस्माद्यश्चानुभविता स एव प्रत्यभिज्ञातेति ॥ १४ ॥

**क्रमान्यत्वं परिणामान्यत्वे हेतुः** । किमेकस्य धर्मिण एक एव धर्मलक्षणावस्थालक्षणः परिणाम उत बहवो धर्मलक्षणावस्थालक्षणाः परिणामाः । तत्र किं प्राप्तमेकत्वा-

---

१ क. झ. 'ति—एवमिति । २ क. 'काला भा' । झ. 'कालीना भा' । ३ ज. 'हितसक' । ४ क. ज. तस्या ।

एकस्य धर्मिण एक एव परिणाम इति प्रसक्ते क्रमान्यत्वं परिणामान्यत्वे हेतुर्भवतीति । तद्यथा—चूर्णमृत्पिण्डमृद्घटमृत्कपालमृत्कणमृदिति च क्रमः । यो यस्य धर्मस्य समनन्तरो धर्मः स तस्य क्रमः । पिण्डः प्रच्यवते घट उपजायत इति धर्मपरिणामक्रमः । लक्षणपरिणामक्रमो घटस्यानागतभावाद्वर्तमानभावः क्रमः । तथा पिण्डस्य वर्तमानभावादतीतभावः क्रमः । नातीतस्यास्ति क्रमः । कस्मात् । पूर्वपरतायां सत्यां समनन्तरत्वं, सा तु नास्त्यतीतस्य । तस्माद्द्वयोरेव लक्षणयोः क्रमः । तथाऽवस्थापरिणामक्रमोऽपि घटस्याभिनवस्य प्रान्ते पुराणता दृश्यते । सा च क्षणपरम्परानुपातिना क्रमेणाभिव्यज्यमाना परां व्यक्तिमापद्यत इति । धर्मलक्षणाभ्यां च विशिष्टोऽयं तृतीयः परिणाम इति ।

---

द्धर्मिण एक एव परिणामः । नह्येकरूपात्कारणात्कार्यभेदो भवितुमर्हति तस्याऽऽकास्मिकत्वप्रसङ्गादित्येवं प्राप्त उच्यते—क्रमान्यत्वात्परिणामान्यत्वम् । एकस्या मृदश्चूर्णपिण्डघटकपालकणाकारा परिणतिपरम्परा क्रमवती लौकिकपरीक्षकैरध्यक्षं समीक्ष्यते । अन्यच्चेदं चूर्णपिण्डयोरानन्तर्यमन्यच्च पिण्डघटयोरन्यच्च घटकपालयोरन्यच्च कपालकणयोरेकत्र परस्यान्यत्र पूर्वत्वात् । सोऽयं क्रमभेदः परिणाम एकस्मिन्नवकल्पमानः परिणामभेदमापादयति । एकोऽपि च मृद्धर्मी क्रमोपनिपातिभिस्तत्तत्सहकारिसमवधानक्रमेण क्रमवतीं परिणामपरम्परामुद्वहन्नैनामाकस्मिकयतीति भावः । धर्मपरिणामान्यत्ववल्लक्षणपरिणामान्यत्वेऽवस्थापरिणामान्यत्वे च समानं क्रमान्यत्वं हेतुरिति । तदेतद्भाष्येणावद्योत्यते—एकस्य धर्मिण इति । क्रमक्रमवतोरभेदमास्थाय स तस्य क्रम इत्युक्तम् । तथाऽवस्थापरिणामक्रम इति । तथा हि—कीनाशेन कोष्ठागारे प्रयत्नसंरक्षिता अपि हि व्रीहयो हायनैरतिबहुभिः पाणिस्पर्शमात्रविशीर्यमाणावयवसंस्थानाः परमाणुभावमनुभवन्तो दृश्यन्ते । न चायमभिनवानामकस्मादेव प्रादुर्भवितुमर्हति । तस्मात्क्षणपरम्पराक्रमेण सूक्ष्मसूक्ष्मतरसूक्ष्मतमबृहद्बृहत्तरबृहत्तमादिक्रमेण प्राप्तेषु विशिष्टोऽयं लक्ष्यत इति ।

---

१ क. ख. घ. ङ. °सक्तेः क्र° । २ ख. ग. °भावक्र° । ३ ख. ग. °भावक्र° । ४ झ. °तत्त° । ५ क. °स्थानाच्च प° । ६ क. °वानक° ।

त एते क्रमा धर्मधर्मिभेदे सति प्रतिलब्धस्वरूपाः। धर्मोऽपि धर्मी भवत्यन्यधर्मस्वरूपापेक्षयेति। यदा तु परमार्थतो धर्मिण्यभेदोपचार[1]स्तद्द्वारेण स एवाभिधीयते धर्मस्तदाऽयमेकत्वेनैव क्रमः प्रत्यवभासते।

चित्तस्य द्वये धर्मा परिदृष्टाश्चापरिदृष्टाश्च। तत्र प्रत्ययात्मकाः परिदृष्टा वस्तुमात्रात्मका अपरिदृष्टाः। ते च सप्तैव भवन्त्यनुमानेन प्रापितवस्तुमात्रसद्भावाः।

निरोधधर्मसंस्काराः परिणामोऽथ जीवनम्।
चेष्टा शक्तिश्च चित्तस्य धर्मा दर्शनवर्जिताः॥ इति॥ १५॥

---

तदिदं क्रमान्यत्वं धर्मधर्मिभेद[2]पक्ष एवेत्याह—**त एत इति**। आ विकारेभ्य आ[3] चालिङ्गादापेक्षिको धर्मधर्मिभावो मृदादेरपि तन्मात्रापेक्षया धर्मत्वादित्याह—**धर्मोऽपीति**। यदा परमार्थ[4]धर्मिण्यलिङ्गेऽभेदोपचारप्रयोगस्तद्द्वारेण सामानाधिकरण्यद्वारेण धर्म्येव धर्म इति यावत्। तदैक एव परिणामो धर्[5]मिपरिणाम एवेत्यर्थः। धर्मलक्षणावस्थानां धर्[6]मिस्वरूपाभिनिवेशात्। तदनेन धर्मिणो दूरोत्सारितं कूटस्थनित्यत्वमित्युक्तप्रायम्।

धर्मपरिणामं प्रतिपादयन्प्रसङ्गेन चित्तधर्माणां प्रकारभेदमाह—**चित्तस्येति**। परिदृष्टाः प्रत्यक्षा अपरिदृष्टाः परोक्षास्तत्र प्रत्ययात्मकाः प्रमाणा×द्यो रागादयश्च। वस्तुमात्रा इत्यप्रकाशरूपतामाह। स्यादेतत्। अपरिदृष्टाश्चेन्न सन्त्येवेत्यत आह—**अनुमानेन** प्रापितो वस्तुमात्रेण सद्भावो येषां ते तथोक्ताः। पश्चान्मानसाधर्म्यादागमोऽप्यनुमानम्। सप्तापरिदृष्टान्कारिकया संगृह्णाति—**निरोधेति**। निरोधो वृत्तीनामसंप्रज्ञातावस्था चित्तस्याऽऽगमतः संस्कारशेषभावोऽनुमानतश्च समधिगम्यते। धर्मग्रहणेन पुण्यापुण्ये उपलक्षयति। क्वचित्कर्मेति पाठस्तत्रापि तज्जनिते पुण्यापुण्ये एव गृह्येते। ते चाऽऽगमतः सुखदुःखोपभोगदर्शनाद्वाऽनुमानतो गम्येते। संस्कारस्तु स्मृतेरनुमीयते। एवं त्रिगुणत्वाच्चित्तस्य चलं च गुणवृत्तमिति प्रतिक्ष[7]णं परिणामोऽनुमीयते। एवं जीवनं प्राणधारणं प्रयत्नभेदोऽसंविदितश्चित्तस्य धर्मः

---

× क. पुस्तके—दयः। निरोधादयस्तु व इति पाठो वर्तते, स प्रामादिकः।

---

१ ख. घ. ङ. च. °रद्वारे°। २ ख. °दमपेक्षत इत्य°। झ. °दमपेक्षत ए°। ३ क. ख. झ. आ च लि°। ४ ज. °र्थतो ध°। ५ ज. धर्मप°। ६ ख. धर्मस्व°। ७ क. ज. झ. °क्षणप°।

अतो योगिन उपात्तसर्वसाधनस्य बुभुत्सितार्थप्रतिपत्तये संयमस्य विषय उपक्षिप्यते—

**परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ १६ ॥**

धर्मलक्षणावस्थापरिणामेषु संयमाद्योगिनां भवत्यतीतानागतज्ञानम् । धारणाध्यानसमाधित्रयमेकत्र संयम उक्तः । तेन परिणामत्रयं साक्षात्क्रियमाणमतीतानागतज्ञानं तेषु संपादयति ॥ १६ ॥

**शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ॥ १७ ॥**

तत्र वाग्वर्णेष्वेवार्थवती । श्रोत्रं च ध्वनिपरिणाम-

---

श्वासप्रश्वासाभ्यामनुमीयते । एवं चेतसश्चेष्टा क्रिया यथा यथा तैस्तैरिन्द्रियैः शरीरप्रदेशैर्वा संप्रयुज्यते । साऽपि तत्संयोगादेवानुमीयते । एवं शक्तिरप्युद्भूतानां कार्याणां सूक्ष्मावस्था चेतसो धर्मः स्थूलकार्यानुभवादेवानुमीयत इति ॥ १५ ॥

अतः परमा पादपरिसमाप्तेः संयमविषयस्तद्वशीकारसूचनी विभूतिश्च वक्तव्या । तत्रोक्तप्रकारं परिणामत्रयमेव तावत्प्रथममुपात्तसकलयोगाङ्गस्य योगिनः संयमविषयतयोपक्षिपति—**परिणामत्रयसंयमादतीतानागतज्ञानम्** । ननु यत्र संयमस्तत्रैव साक्षात्करणं तत्कथं परिणामत्रयसंयमोऽतीतानागतं साक्षात्कारयेदित्यत आह—**तेन परिणामत्रयं साक्षात्क्रियमाणं तेषु** परिणामेष्वनुगते ये अतीतानागते तद्विषयं ज्ञानं संपादयति । परिणामत्रयसाक्षात्करणमेव तदन्तर्भूतातीतानागतसाक्षात्करणात्मकमिति न विषयभेदः संयमसाक्षात्कारयोरित्यर्थः ॥ १६ ॥

अयमपरः संयमस्य विषय उपक्षिप्यते—**शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्** । अत्र वाचकं शब्दमाचिख्यासुः प्रथमं तावद्वाग्व्यापारविषयमाह—तत्र वाग्वागिन्द्रियं वर्णव्यञ्जकमष्टस्थानम् । यथाऽऽह—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।

जिह्वामूलं च दन्ताश्च नासिकौष्ठौ च तालु च [ पा० शि० १३ ] इति ॥

सा वाग्वर्णेष्वेव यथालोकप्रतीतिसिद्धेष्वर्थवती न च वाचक इत्यर्थः । श्रोत्रव्यापारविषयं निरूपयति—श्रोत्रं पुनर्ध्वनेरुदानस्य वागिन्द्रियाभिघातिनो यः परिणतिभेदो

---

१ ज °कौष्ठं च । २ क. °दात्तस्व ।

**मात्रविषयम् । पदं पुनर्नादानुसंहारबुद्धिनिर्ग्राह्यमिति ।**

**वर्णा एकसमयासंभवित्वात्परस्परनिरनुग्रहात्मानस्ते पदमसंस्पृश्यानुपस्थाप्याऽऽविर्भूतास्तिरोभूताश्चेति प्रत्येकमपदस्वरूपा उच्यन्ते ।**

**वर्णः पुनरेकैकः पदात्मा सर्वाभिधानशक्तिप्रचितः सहकारिवर्णान्तरप्रतियोगित्वाद्वैश्वरूप्यमिवाऽऽपन्नः पूर्वश्चोत्तरेणोत्तरश्च पूर्वेण**

---

वर्णात्मा तेनाऽऽकारेण परिणतं तन्मात्रविषयं नतु वाचकविषयमित्यर्थः । यथालोकप्रतीतिसिद्धेभ्यो वर्णेभ्यो वाचकं भिनत्ति—**पदं** पुनर्वाचकं **पुनर्नादानुसंहारबुद्धिनिर्ग्राह्यं** यथाप्रतीतिसिद्धान्नादान्वर्णान्प्रत्येकं गृहीत्वाऽनु पश्चाद्या संहरत्येकत्वमापादयति गौरित्येतदेकं पदमिति तया पदं गृह्यते। यद्यपि प्राच्योऽपि बुद्धयो वर्णाकारं पदमेव प्रत्येकं गोचरयन्ति तथाऽपि न विशदं प्रथते । चरमे तु विज्ञाने तद्प्रतिविशदमिति नादानुसंहारबुद्धिनिर्ग्राह्यमुक्तम् ।

यस्तु वैजात्यादेकपदानुभवमविज्ञाय वर्णानेव वाचकानातिष्ठते तं प्रत्याह—**वर्णा इति** । ते खल्वमी वर्णाः प्रत्येकं वाच्यविषयां धियमादधीरन्नागदन्तका इव शिक्यावलम्बनं संहता वा ग्रावाण इव पिठरधारणम् । न तावत्प्रथमः कल्पः । एकस्मादर्थप्रतीतेरनुत्पत्तेरुत्पत्तौ वा द्वितीयादीनामनुच्चारणप्रसङ्गो निष्पादितक्रिये कर्मणि विशेषानाधायिनः साधनस्य साधनन्यायातिपातात् । तस्माद्द्वितीयः परिशिष्यते । संभवति हि ग्राव्णां संहतानां पिठरधारणमेकसमयभावित्वात् । वर्णानां तु यौगपद्यासंभवोऽतः परस्परमनुग्राह्यानुग्राहकत्वायोगात्संभूयापि नार्थधियमादधते । ते पदरूपमेकमसंस्पृशन्तस्तादात्म्येनात एवानुपस्थापयन्त आविर्भूतास्तिरोभूता अयःशलाकाकल्पाः प्रत्येकमपदस्वरूपा उच्यन्ते ।

यदि पुनः पदमेकं तादात्म्येन स्पृशेयुर्वर्णास्ततो नोक्तदोषप्रसङ्ग इत्याह—**वर्णः पुनरेकैकः पदात्मा सर्वाभिधानशक्तिप्रचितः** सर्वाभिरभिधानशक्तिभिर्निचितो गौर्गणगौरनगेत्यादिषु हि गकारो गोत्वाद्यर्थाभिधायिषु दृष्ट इति तत्तदभिधानशक्तिः । एवं सोमशोचिरित्यादिष्वीश्वराद्यर्थाभिधायिषु पदेष्वोवर्णो दृष्ट इति सोऽपि तत्तदभिधानशक्तिः । एवं सर्वत्रोहनीयम् । स चैकैको वर्णो गकारादिः सहकारि यद्वर्णान्तरमोकारादि तदेव प्रतियोगि प्रतिसंबन्धि यस्य स तथोक्तस्तस्य भावस्तत्त्वं तस्माद्वैश्वरूप्यं नानात्वमिवाऽऽपन्नो नतु नानात्वमापन्नस्तस्य तत्त्वादेव पूर्वो वर्णो गकार उत्तरेणौकारेण गणादिपदेभ्यो व्यावर्त्योत्तरश्चौकारो गकारेण शोचिरादिपदेभ्यो व्यावर्त्य

---

१ ज. °द्यदमाशु प्र° । २ झ. °गणो गौरं नग इत्या° । ३ क. ज. °नग इत्या° । ख. °नयर इत्या° । ४ ज. °षु पदेषु दृ° । ५ क. झ. दृष्टः सो° । ६ ख. ज. °स्य तत्तथोक्तं तस्य ।

विशेषेऽवस्थापित इत्येवं बहवो वर्णाः क्रमानुरोधिनोऽर्थसंकेतेनावच्छिन्ना इयन्त एते सर्वाभिधानशक्तिपरिवृता गकारौकारविसर्जनीयाः सास्नादिमन्तमर्थं द्योतयन्तीति ।

---

विशेषे गोत्ववाचके गोपदस्फोटेऽवस्थापितोऽनुसंहारबुद्धौ । अयमभिसंधिः—अर्थप्रत्ययो हि वर्णैर्नियतक्रमतया परस्परमसंभवद्भिरशक्यः कर्तुम् । न च संस्कारद्वाराऽऽग्नेयादीनामिव परमापूर्वे वा स्वर्गे वा जनयितव्येऽनियतक्रमाणामपि साहित्यमर्थबुद्ध्युपजनने वर्णानामिति सांप्रतं विकल्पासहत्वात् । स खल्वयं वर्णानुभवजन्यः संस्कारः स्मृतिप्रसवहेतुरन्यो वाऽऽग्नेयादिजन्य इवापूर्वाभिधानो न तावदनन्तरः कल्पनागौरवापत्तेः । स एव तावददृष्टपूर्वः कल्पनीयस्तस्य च क्रमवद्भिर्वर्णानुभवैरेकस्य जन्यत्वं न संभवतीति तज्जातीयानेकावान्तरसंस्कारकल्पनेति गौरवम् । न चैष ज्ञापकहेत्वङ्गमज्ञातस्तदङ्गतामनुभवतीति । न खलु संबन्धोऽर्थप्रत्यायनाङ्गमज्ञातोऽङ्गतामुपैति । स्मृतिफलप्रसवानुमितस्तु संस्कारः स्वकारणानुभवविषयनियतो न विषयान्तरे प्रत्ययमाधातुमुत्सहते । अन्यथा यत्किंचिदेवैकैकमनुभूय सर्वः सर्वं जानीयादिति । न च प्रत्येकवर्णानुभवजनितसंस्कारपिण्डलब्धजन्मस्मृतिदर्पणसमारोहिणो वर्णाः समधिगतसहभावा वाचका इति सांप्रतम् । क्रमाक्रमविपरीतक्रमानुभूतानां तत्राविशेषेणार्थधीजननप्रसङ्गात् । न चैतत्स्मरणज्ञानं पूर्वानुभववर्तिनीं परापरतां गोचरयितुमर्हति । तस्माद्वर्णेभ्योऽसंभवन्नर्थप्रत्यय एकपदानुभवमेव स्वनिमित्तमुपकल्पयति । न चैष पदेऽपि प्रसङ्गः । तद्धि प्रत्येकमेव प्रयत्नभेदाभिन्ना ध्वनयो व्यञ्जयन्तः परस्परविसदृशतत्तत्पदव्यञ्जकध्वनिभिस्तुल्यस्थानकरणनिष्पन्नाः सदृशाः सन्तोऽन्योन्यविसदृशैः पदैः पदमेकं सदृशमापादयन्तः प्रतियोगिभेदेन तत्तत्सादृश्यानां भेदात्तदुपधानादेकमप्यनवयवमपि सावयवमिवानेकात्मकमिवावभासयन्ति, यथा नियतवर्णपरिमाणसंस्थानं मुखमेकमपि मणिकृपाणदर्पणादयो विभिन्नवर्णपरिमाणसंस्थानमनेकमादर्शयन्ति न परमार्थतः । सादृश्योपधानभेदकल्पिता भागा एव निर्भागस्य पदस्य वर्णास्तेन तद्बुद्धिर्वर्णात्मना पदभेदे स्फोटमभेदमेव निर्भागमेव सभेदमिव सभागमिवाऽऽलम्बते । अतो गोपदस्फोटभेदस्यैकस्य गकारभागो गौरादिपदस्फोटसादृश्येन न निर्धारयति स्वभागिनमित्योकारेण विशिष्टो निर्धारयत्येवमोकारोऽपि भागः शोचिरादिपदसदृशतया न शक्तो निर्धारयितुं स्वभागिनं गोपदस्फोटमिति गकारेण विशिष्टो निर्धारयति । असहभाविनामपि च संस्कारद्वारेणास्ति सहभाव इति विशेषणविशेष्यभावोपपत्तिः । न च भिन्नविषयत्वं संस्कारयोर्भागद्वयविषययोरनुभवयोस्तज्जन्मनोश्च

---

१ ख. ज. °द्वारेणाऽऽग्ने° । २ ज. °वति ।

**तदेतेषामर्थसंकेतेनावच्छिन्नानामुपसंहृतध्वनिक्रमाणां य एको बुद्धिनिर्भासस्तत्पदं वाचकं वाच्यस्य संकेत्यते । तदेकं पदमेकबुद्धिविषयं एकप्रयत्नाक्षिप्तमभागमक्रममवर्णं बौद्ध-**

संस्कारयोरेकपदविषयत्वात् । केवलभागानुभवेन पदमव्यक्तमनुभूयतेऽनुसंहारधिया तु भागानुभवयोनिसंस्कारलब्धजन्मना व्यक्तमिति विशेषः । अव्यक्तानुभवाश्च प्राञ्चः संस्काराधानक्रमेण व्यक्तमनुभवमादधाना दृष्टा यथा दूराद्वनस्पतावस्तिप्रत्ययाः अव्यक्ता व्यक्तवनस्पतिप्रत्ययहेतवः । न चेयं विधा वर्णानामर्थप्रत्यायने संभविनी । नो खलु वर्णाः प्रत्येकमव्यक्तमर्थप्रत्ययमादधत्यन्ते व्यक्तमिति शक्यं वक्तुम् । प्रत्यक्षज्ञान एव नियमाद्व्यक्ताव्यक्तत्वस्य । वर्णाधेयस्त्वर्थप्रत्ययो न प्रत्यक्षस्तदेष वर्णेभ्यो जायमानः स्फुट एव जायेत । न वा जायेत न त्वस्फुटः । स्फोटस्य तु ध्वनिव्यङ्ग्यस्य प्रत्यक्षस्य सतः स्फुटास्फुटत्वे कल्प्येते इत्यसमानम् । एवं प्रत्येकवर्णानुभवजनितसंस्कारसहितश्रोत्रलब्धजन्मन्यनुसंहारबुद्धौ संहता वर्णा एकपदस्फोटभावमापन्नाः प्रयत्नविशेषव्यङ्ग्यतया प्रयत्नविशेषस्य च नियतक्रमापेक्षतया क्रमस्यान्यत्वे तदभिव्यञ्जकप्रयत्नविशेषाभावेन तदभिव्यक्त्यभावप्रसङ्गात्क्रमानुरोधिनोऽर्थसंकेतेनावच्छिन्नाः संकेतावच्छेदमेव लौकिकं सभागपदविषयं दर्शयन्ति, इयन्तो द्वित्रास्त्रिचतुराः पञ्चषा वा एते सर्वाभिधानशक्तिपरिवृता गकारौकारविसर्जनीयाः सास्नादिमन्तमर्थमवद्योतयन्तीति ।

तत्किमिदानीं संकेतानुसारेण वर्णानामेव वाचकत्वं तथा च न पदं नाम किंचिदेकमित्यत आह—**तदेतेषामिति** । ध्वनिनिमित्तः क्रमो ध्वनिक्रमः । उपसंहृतो ध्वनिक्रमो येषु ते तथोक्ताः । बुद्ध्या निर्भास्यते प्रकाश्यत इति बुद्धिनिर्भासः । संकेतावच्छिन्नाः स्थूलदर्शिलोकाशयानुरोधेन गकारौकारविसर्जनीया इत्युक्तम् । गकारादीनामपि तद्भागतया तादात्म्येन वाचकत्वात्प्रतीत्यनुसारतस्त्वेकमेव पदं वाचकमित्यर्थः । एतदेव स्पष्टयति—**तदेकं पदं** लोकबुद्ध्या प्रतीयत इति संबन्धः । कस्मादेकमित्यत आह—**एकबुद्धिविषयो** गौरित्येकं पदमित्येकाकारया बुद्धेर्विषयो यतस्तस्मादेकम् । तस्य व्यञ्जकमाह—**एकप्रयत्नाक्षिप्तमिति** । रस इति पदव्यञ्जकात्प्रयत्नाद्विलक्षणः सर इति पदव्यञ्जकः प्रयत्नः । स चोपक्रमतः[3] सर इति पदव्यक्तिलक्षणफलावच्छिन्नः[4] पूर्वापरीभूत एकस्तदाक्षिप्तं भागानां सादृश्योपधानभेदकल्पितानां परमार्थसतामभावादभागम् । अत एव पूर्वापरीभूत[भागा]भावादक्रमम् । ननु वर्णाः पूर्वापरीभूतास्ते चास्य भागा इति कथमक्रममभागं चेत्यत आह—**अवर्णम्** । न ह्यस्य वर्णा भागाः किंतु साद-

१ क. ख. ङ. च. °यमेक° । २ ख. ज. °या व्यक्त । ३ क. ख. °मतो रस इ° । ४ क. ख. °क्षणः फ° । ज. °क्षणाव° ।

**मन्त्यवर्णप्रत्ययव्यापारोपस्थापितं परत्र प्रतिपिपादयिषया वर्णैरेवाभिधीयमानैः श्रूयमाणैश्च श्रोतृभिरनादिवाग्व्यवहारवासनानुविद्धया लोकबुद्ध्या सिद्धवत्संप्रतिपत्त्या प्रतीयते ।**

**तस्य संकेतबुद्धितः प्रविभाग एतावतामेवंजातीयकोऽनुसंहार एकस्यार्थस्य वाचक इति । संकेतस्तु पदपदार्थयोरितरेतराध्या-**

श्योपधानभेदात्पदमेव तेन तेनाऽऽकारेणापरमार्थसता प्रथते । न हि मणिकृपाणदर्पणादिवर्तीनि मुखानि मुखस्य परमार्थसतोऽवयवा इति । बौद्धमनुसंहारबुद्धौ विदितमन्त्यवर्णप्रत्ययस्य व्यापारः संस्कारः पूर्ववर्णानुभवजनितसंस्कारसहितस्तेनोपस्थापितं विषयीकृतम् । वर्णानुभवतत्तत्संस्काराणां च पदविषयत्वमुपपादितमधस्तात् । स्यादेतत् । अभागमक्रममवर्णं चेत्पदतत्त्वं कस्मादेवंविधं कदाचिन्न प्रथते । नहि लाक्षारसावसेकोपधानापादितारुणभावः स्फटिकमणिस्तदपगमे स्वच्छधवलो नानुभूयते । तस्मात्पारमार्थिका एव वर्णा इत्यत आह—**परत्रेति** । प्रतिपिपादयिषया वर्णैरेवाभिधीयमानैरुच्चार्यमाणैः श्रूयमाणैश्च श्रोतृभिरनादिर्योऽयं वाग्व्यवहारो विभक्तवर्णपदनिबन्धनस्तज्जनिता वासना साऽप्यनादिरेव । तदनुविद्धया तद्वासितया लोकबुद्ध्या विभक्तवर्णरूषितपदावगाहिन्या सिद्धवत्परमार्थवत्संप्रतिपत्त्या संवादेन वृद्धानां पदं प्रतीयते । एतदुक्तं भवति—अस्ति कश्चिदुपाधिर्य उपधेयेन संयुज्यते वियुज्यते च । यथा लाक्षादिस्तत्र तद्वियोगे स्फटिकः स्वाभाविकेन स्वच्छधवलेन रूपेण प्रकाशत इति युज्यते । पदप्रत्ययस्य तु प्रयत्नभेदोपनीतध्वनिभेदादन्यतोऽनुत्पादात्तस्य च तदा सादृश्यदोषैरूषिततया वर्णात्मनैव प्रत्ययजनकत्वमिति कुतो निरुपाधिनः पदस्य प्रथा ।

यथाऽऽहुः—ध्वनयः सदृशात्मानो विपर्यासस्य हेतवः ।
उपलम्भक्रमेतेषां विपर्यासस्य कारणम् ॥
उपायत्वाच्च नियतः पददर्शितदर्शिनाम् ।
ज्ञानस्यैव च बाधेयं लोके ध्रुवमुपप्लवः ॥ इति ।

यतः पदात्मा विभक्तवर्णरूषितः प्रकाशतेऽतः स्थूलदर्शी लोको वर्णानेव पदमभिमन्यमानस्तानेव प्रकारभेदभाजोऽर्थभेदे संकेतयतीत्याह—**तस्येति** । तस्य पदस्याजानत एकस्यापि संकेतबुद्धितः स्थूलदर्शिलोकहिताय वर्णात्मना विभागः । विभागमाह—**एतावतां** न न्यूनानामधिकानां वा, **एवंजातीयको** नैरन्तर्यक्रमविशेषोऽ**नुसंहार** एकबुद्ध्युपग्रह **एकस्यार्थस्य** गोत्वादेर्वाचक इति । ननु यद्येकस्यार्थस्यायं शब्दो वाचक इति संकेतो हन्त भोः शब्दार्थयोर्नेतरेतराध्यासस्तर्हीत्यत आह—**संकेतस्त्विति** ।

१ क. ख. °मानैरुच्चार्यमाणैः श्रू° । २ क. ख. ङ. च. एतस्या° । ३ ख. झ. °षदूषि° ।

**सरूपः स्मृत्यात्मको योऽयं शब्दः सोऽयमर्थो योऽयमर्थः सोऽयं शब्द इति। एवमितरेतराध्यासरूपः संकेतो भवतीति। एवमेते शब्दार्थप्रत्यया इतरेतराध्यासात्संकीर्णा गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानम्। य एषां प्रविभागज्ञः स सर्ववित्।**

**सर्वपदेषु चास्ति वाक्यशक्तिर्वृक्ष इत्युक्तेऽस्तीति गम्यते। न सत्तां पदार्थो व्यभिचरतीति। तथा न ह्यसाधना क्रियाऽस्तीति।**

**तथा च पचतीत्युक्ते सर्वकारकाणामाक्षेपो नियमार्थोऽनुवादः**

---

स्मृतावात्मा स्वरूपं यस्य स तथोक्तः। न हि कृत इत्येव संकेतोऽर्थमवधारयत्यपि तु स्मर्यमाणः। एतदुक्तं भवति—अभिन्नाकार एव संकेते कथंचिद्भेदं विकल्प्य षष्ठी प्रयुक्तेति। **य एषां प्रविभागज्ञः स** तत्र संयमे भवति सर्ववित्सर्वभूतरुतज्ञ इति।

तदेवं विकल्पितवर्णभागमेकमनवयवं पदं व्युत्पाद्य कल्पितपदविभागं वाक्यमेकमनवयवं व्युत्पादयितुमाह—**सर्वपदेषु चास्ति वाक्यशक्तिः।** अयमभिसंधिः—परप्रत्यायनाय शब्दः प्रयुज्यते। तत्र तदेव च परं प्रति प्रतिपादयितव्यं यत्तैः प्रतिपित्सितम्। तदेव तैः प्रतिपित्सितं यदुपादानादिगोचरः। न च पदार्थमात्रं तद्गोचरः किंतु वाक्यार्थ इति वाक्यार्थपरा एव सर्वे शब्दास्तेन स एव तेषामर्थः। अतो यत्रापि केवलस्य पदस्य प्रयोगस्तत्रापि पदान्तरेण सहैकीकृत्य ततोऽर्थो गम्यते, न तु केवलात्कस्मात्तन्मात्रस्यासामर्थ्यात्तथा च वाक्यमेव तत्र तत्र वाचकं न तु पदानि। तद्भागतया तु तेषामप्यस्ति वाक्यार्थवाचकशक्तिः पदार्थ इव पदभागतया वर्णानाम्। तेन यथा वर्ण एकैकः सर्वपदार्थाभिधानशक्तिःप्रचित एवं पदमप्येकैकं सर्ववाक्यार्थाभिधानशक्तिप्रचितम्। तदिदमुक्तम्—**सर्वपदेषु चास्ति वाक्यशक्तिर्वृक्ष इत्युक्तेऽस्तीति गम्यते।** अध्याहृतास्तिपदसहितं वृक्ष इति पदं वाक्यार्थे वर्तत इति तद्भागत्वाद्वृक्षपदं तत्र वर्तते। कस्मात्पुनरस्तीति गम्यत इत्यत आह—**न सत्तां पदार्थो व्यभिचरतीति।** लोक एव हि पदानामर्थावधारणोपायः। स च केवलं पदार्थमस्त्यर्थेनाभिसमस्य सर्वत्र वाक्यार्थी करोति सोऽयमव्यभिचारः सत्तया पदार्थस्यात एव शब्दवृत्तिविदां व्यवहारो यत्रान्यत्क्रियापदं नास्ति तत्रास्तिर्भवन्तीपरः प्रयोक्तव्य इति।

क्रियाभेदाव्यभिचारि प्रातिपदिकमुक्त्वा क्रियाभेदं कारकाव्यभिचारिणं दर्शयति—**तथा च पचतीत्युक्त इति।** पचतीत्युक्ते हि कारकमात्रस्य तदन्वययोग्यस्यावगमादन्यव्यावृत्तिपरस्तद्भेदानामनुवादः। तदेवं भेद एव वाक्यार्थ इति तथाऽनपेक्ष-

---

१ क. ख. °कीर्णाः। तद्यथा—गौ°। २ °ख. था प°। ३ ज. °क्यार्थे वा°। ४ ख. ज. °रोऽयं य°। ५ झ. °वतिर्वां प°। ६ ख. ज. °था प°।

कर्तृकरणकर्मणां चैत्राग्नितण्डुलानामिति । दृष्टं च वाक्यार्थे पद-[1]
रचनं श्रोत्रियश्छन्दोऽधीते, जीवति प्राणान्धारयति । तत्र वाक्ये[2]
पदार्थाभिव्यक्तिस्ततः पदं प्रविभज्य व्याकरणीयं क्रियावाचकं
वा कारकवाचकं वा । अन्यथा भवत्यश्वोऽजापय इत्येवमादिषु
नामाख्यातसारूप्यादनिर्ज्ञातं कथं क्रियायां कारके वा व्याक्रि-
येतेति ।

तेषां शब्दार्थप्रत्ययानां प्रविभागः । तद्यथा—श्वेतते प्रासाद
इति क्रियार्थः, श्वेतः प्रासाद इति कारकार्थः शब्दः,

---

मपि पदं वाक्यार्थे वर्तमानं दृश्यत इति सुतरामस्ति वाक्यशक्तिः[3] पदानामित्याह—दृष्टं
चेति । न चैतावताऽपि श्रोत्रियादिपदस्य स्वतन्त्रस्यैवंविधार्थप्रत्यायनं न यावदस्त्या-
दिभिरभिसमासोऽस्य भवति, तथा चास्यापि वाक्यावयवत्वात्कल्पितत्वमेवेति भावः ।
स्यादेतत् । पदानामेव चेद्वाक्यशक्तिः कृतं तर्हि वाक्येन तेभ्य एव तदर्थावसायादित्यत
आह—तत्र वाक्य इति । उक्तमेतन्न केवलात्पदात्पदार्थः प्रतिपित्सितः प्रतीयते
न यावदेतत्पदान्तरेणाभिसमस्यत इति । तथा च वाक्यात्पदान्यपोद्धृत्य कल्पितानि
वाक्यार्थाच्चापोद्धृत्य तदेकदेशं कारकं वा क्रियां[4] वा तत्पदं प्रकृत्यादिविभागकल्पनया
व्याकरणीयमन्वाख्येयम्[5] । किमर्थं पुनरेतावता क्लेशेनान्वाख्यायत इत्यत आह—
अन्यथेति । घटो भवति भवति भिक्षां देहि भवति तिष्ठतीति नामाख्यातयोश्च[6]
साम्यात् । एवमश्वस्त्वमश्वो यातीति । एवमजापयः पिब, अजापयः शत्रूनिति
नामाख्यातसारूप्यादनिर्ज्ञातं नामत्वेनाऽऽख्यातत्वेन वाऽन्वाख्यानाभावे निष्कृष्या-
ज्ञातं कथं क्रियायां कारके वा व्याक्रियेत[7] । तस्माद्वाक्यात्पदान्यपोद्धृत्य व्याख्या-
तव्यानि । न त्वन्वाख्यानादेव पारमार्थिको विभागः पदानामिति ।

तदेवं शब्दरूपं व्युत्पाद्य शब्दार्थप्रत्ययानां संकेतापादितसंकराणामसंकरमाख्यातु-
मुपक्रमते—तेषां शब्दार्थप्रत्ययानां प्रविभागस्तद्यथा श्वेतते प्रासाद इति क्रियार्थः
शब्दः । स्फुटतरो ह्यत्र पूर्वापरीभूतायाः क्रियायाः साध्यरूपायाः सिद्धरूपः क्रियार्थः
श्वेतत इति भिन्नः शब्दः । यत्रापि शब्दार्थयोः[8] सिद्धरूपत्वं तत्राप्यर्थादस्ति शब्दस्य[9]
भेद इत्याह—श्वेतः प्रासाद इति कारकार्थः शब्दः । अभिहितत्वाच्च कारकवि-

---

१ ङ. °दवच° । २ क. ख. घ. ङ. च. °क्ये पदप° । ३ ज. वाक्यार्थे श° । ४ ज. क्रिया-
पदं । ५ क. °णीयं व्याख्ये° । ६ क. ज नाम्नोर्नामा° । ७ ख. ज. व्याख्यायेत । त° । ८ ज. °ब्दार्थः
सिद्धरूपस्तत्राप्यस्ति । ९ ख. °र्थस्य सि° ।

क्रियाकारकात्मा तदर्थः प्रत्ययश्च । कस्मात् । सोऽयमित्यभिसंबन्धादेकाकार एव प्रत्ययः संकेत इति ।

यस्तु श्वेतोऽर्थः स शब्दप्रत्यययोरालम्बनीभूतः । स हि स्वाभिरवस्थाभिर्विक्रियमाणो न शब्दसहगतो न बुद्धिसहगतः । एवं शब्द एवं प्रत्ययो नेतरेतरसहगत इत्यन्यथा शब्दोऽन्यथाऽर्थोऽन्यथा प्रत्यय इति विभागः । एवं तत्प्रविभागसंयमाद्योगिनः सर्वभूतरुतज्ञानं संपद्यत इति ॥ १७ ॥

संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम् ॥ १८ ॥

द्वये खल्वमी संस्काराः स्मृतिक्लेशहेतवो वासनारूपा विपाकहेतवो धर्माधर्मरूपाः । ते पूर्वभवाभिसंस्कृताः परिणामचेष्टानिरोधशक्तिजीवनधर्मवदपरिदृष्टाश्चित्तधर्माः । तेषु संयमः

---

भक्तेरभावः । अर्थं विभजते—क्रियाकारकात्मा तदर्थस्तयोः शब्दयोरर्थः क्रियात्मा कारकात्मा च । प्रत्ययं विभजते-प्रत्ययश्चेति । चशब्देन तदर्थ इत्येतत्पदमत्रानुकृष्यते । तदत्रान्यपदार्थप्रधानं संबध्यते । स एव क्रियाकारकात्माऽर्थो यस्य स तथोक्तः । नन्वभेदेन प्रतीतेः शब्दार्थप्रत्ययानां संकरात्कुतः प्रविभाग इत्याशयवान्पृच्छति—कस्मादिति । उत्तरमाह—सोऽयमित्यभिसंबन्धादिति । संकेतोपाधिरेकाकारप्रत्ययो नतु तात्त्विक इत्यर्थः । संकेतस्य निमित्तता दर्शिता संकेत इति सप्तम्या ।

परमार्थमाह—यस्तु श्वेतोऽर्थ इति । अवस्था नवपुराणत्वादयः । सहगतः संकीर्णः । एवं च प्रविभागसंयमाद्योगिनः सर्वेषां भूतानां पशुमृगसरीसृपवयःप्रभृतीनां यानि रुतानि तत्राप्यव्यक्तं पदं तदर्थस्तत्प्रत्ययश्चेति । तदिह मनुष्यवचनवाच्यप्रत्ययेषु कृतः संयमः समानजातीयतया तेष्वपि कृत एवेति । तेषां रुतं तदर्थभेदं तत्प्रत्ययं च योगी जानातीति सिद्धम् ॥ १७ ॥

संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम् । ज्ञानजा हि संस्काराः स्मृतेर्हेतवोऽविद्यादिसंस्कारा अविद्यादीनां क्लेशानां हेतवः । विपाको जात्यायुर्भोगरूपस्तस्य हेतवो धर्माधर्मरूपाः । पूर्वेषु भवेष्वभिसंस्कृता निष्पादिताः स्वकारणैर्यथासंस्कृतं व्यञ्जनं कृतमिति गम्यते । परिणामचेष्टानिरोधशक्तिजीवनान्येव धर्माश्चित्तस्य तद्वद-

संस्कारसाक्षात्क्रियायै समर्थः । न च देशकालनिमित्तानुभवै-र्विना तेषामस्ति साक्षात्करणम् । तदित्थं संस्कारसाक्षात्करणा-त्पूर्वजातिज्ञानमुत्पद्यते योगिनः । परत्राऽप्येवमेव संस्कारसाक्षा-त्करणात्परजातिसंवेदनम् ।

अत्रेदमाख्यानं श्रूयते—भगवतो जैगीषव्यस्य संस्कारसा-क्षात्करणाद्दशसु महासर्गेषु जन्मपरिणामक्रममनुपश्यतो विवेकजं ज्ञानं प्रादुरभूत् । अथ भगवानावट्यस्तनुधरस्तमुवाच—दशसु महासर्गेषु भव्यत्वादनभिभूतबुद्धिसत्त्वेन त्वया नरकतिर्यग्गर्भ-संभवं दुःखं संपश्यता देवमनुष्येषु पुनःपुनरुत्पद्यमानेन सुख-दुःखयोः किमधिकमुपलब्धमिति । भगवन्तमावट्यं जैगीषव्य उवाच—दशसु महासर्गेषु भव्यत्वादनभिभूतबुद्धिसत्त्वेन मया नरकतिर्यग्भवं दुःखं संपश्यता देवमनुष्येषु पुनःपुनरुत्पद्यमा-नेन यत्किंचिदनुभूतं तत्सर्वं दुःखमेव प्रत्यवैमि । भगवाना-वट्य उवाच—यदिदमायुष्मतः प्रधानवशित्वमनुत्तमं च संतोष-सुखं किमिदमपि दुःखपक्षे निक्षिप्तमिति । भगवाञ्जैगीषव्य उवाच—विषयसुखापेक्षयैवेदमनुत्तमं संतोषसुखमुक्तम् । कैव-ल्यसुखापेक्षया दुःखमेव । बुद्धिसत्त्वस्यायं धर्मस्त्रिगुणस्त्रिगुणश्च प्रत्ययो हेयपक्षे न्यस्त इति दुःखरूपस्तृष्णातन्तुः[2] । तृष्णादुःखसं-तापापगमात्तु प्रसन्नमबाधं सर्वानुकूलं सुखमिदमुक्तमिति ॥१८॥

---

परिदृष्टाश्चित्तधर्मास्तेषु श्रुतेष्वनुमितेषु सपरिकरेषु संयमः संस्काराणां द्वयेषां साक्षा-त्क्रियायै समर्थः । अस्तु तत्र संयमात्तत्साक्षात्कारः पूर्वजातिसाक्षात्कारस्तु कुतः[3] इत्यत आह—न च देशेति । निमित्तं पूर्वशरीरमिन्द्रियादि च । सानुबन्धसंस्कारसाक्षात्कार एव नान्तरीयकतया जात्यादिसाक्षात्कारमाक्षिपतीत्यर्थः । स्वसंस्कारसंयमं परकीयेष्वति-दिशति—परत्राऽप्येवमिति ।

अत्र श्रद्धोत्पादे हेतुमनुभवत आवट्यस्य जैगीषव्येण संवादमुपन्यस्यति—अत्रेदमाख्यानं श्रूयत इति । महाकल्पो महासर्गः । तनुधर इति निर्माणकायसंप-द्युक्तः । भव्यः शोभनो विगलितरजस्तमोमल इत्यर्थः । प्रधानवशित्वमैश्वर्यं तेन हि प्रधानं विक्षोभ्य यस्मै यादृशीं कायेन्द्रियसंपदं दित्सति तस्मै तादृशीं दत्ते । स्वकी-यानि च कायेन्द्रियसहस्राणि निर्मायान्तरिक्षे दिवि भुवि च यथेच्छं विहरतीति । संतोषो हि तृष्णाक्षयो बुद्धिसत्त्वस्य प्रशान्तता धर्मः ॥ १८ ॥

---

१ क. ग. ङ. च. °वल्यापे° । २ ङ. °तन्तुदष्टार्थसं° । ३ ख. °तस्त्य इ° । ४ ख. °त्पादहेतुं भगव° । ज. °त्पादहे° । ५ झ. परकीयाणि ।

**प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥**

प्रत्यये संयमात्प्रत्ययस्य साक्षात्करणात्ततः परचित्तज्ञानम् ॥ १९ ॥

**न च[1] तत्सालम्बनं तस्याविषयीभूतत्वात् ॥ २० ॥**

रक्तं प्रत्ययं जानात्यमुष्मिन्नालम्बने रक्तमिति न जानाति। परप्रत्ययस्य यदालम्बनं तद्योगिचित्तेन नाऽऽलम्बनीकृतं परप्रत्ययमात्रं तु योगिचित्तस्याऽऽलम्बनीभूतमिति ॥ २० ॥

**कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुष्प्रकाशासंप्रयोगेऽन्तर्धानम् ॥ २१ ॥**

कायस्य रूपे संयमाद्रूपस्य या ग्राह्या शक्तिस्तां प्रतिष्टभ्नाति। ग्राह्यशक्तिस्तम्भे सति चक्षुष्प्रकाशासंप्रयोगेऽन्तर्धानमुत्पद्यते योगिनः। एतेन शब्दाद्यन्तर्धानमुक्तं वेदितव्यम् ॥२१॥

---

**प्रत्ययस्य परचित्तज्ञानम्।** परप्रत्ययस्य चित्तमात्रस्य साक्षात्करणादिति॥१९॥

यथा संस्कारसाक्षात्कारस्तदनुबन्धपूर्वजन्मसाक्षात्कारमाक्षिपत्येवं परचित्तसाक्षात्कारोऽपि तदालम्बनसाक्षात्कारमाक्षिपेदिति प्राप्त आह—**न च तत्सालम्बनं तस्याविषयीभूतत्वात्।** सानुबन्धसंस्कारविषयोऽसौ संयमोऽयं तु परचित्तमात्रविषय इत्यभिप्रायः ॥ २० ॥

**कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुष्प्रकाशासंप्रयोगेऽन्तर्धानम्।** पञ्चात्मकः कायः। स च रूपवत्तया चाक्षुषो भवति। रूपेण हि कायश्च तद्रूपं च चक्षुर्ग्रहणकर्मशक्तिमनुभवति। तत्र यदा रूपे संयमविशेषो योगिना क्रियते तदा रूपस्य ग्राह्यशक्ती रूपवत्कायप्रत्यक्षताहेतुः स्तम्भ्यते। तस्माद्ग्राह्यशक्तिस्तम्भे सत्यन्तर्धानं योगिनस्ततः परकीयचक्षुर्जनितेन प्रकाशेन ज्ञानेनासंप्रयोगश्चक्षुर्ज्ञानाविषयत्वं योगिनः कायस्येति यावत्। तस्मिन्कर्तव्येऽन्तर्धानं कारणमित्यर्थः। **एतेनेति।** कायशब्दस्पर्शरसगन्धसंयमात्तद्ग्राह्यशक्तिस्तम्भे श्रोत्रत्वग्रसनघ्राणप्रकाशासप्रयोगेऽन्तर्धानमिति सूत्रमूहनीयम् ॥ २१ ॥

---

१ च. °च साल°। २ ख. च. °संप्रो°। ३ क. च. °संयो°। ४ क. ख. न चेति। सा°।

**सोपक्रमं निरुपक्रमं च कर्म तत्संयमाद-
परान्तज्ञानमरिष्टेभ्यो वा ॥ २२ ॥**

आयुर्विपाकं कर्म द्विविधं सोपक्रमं निरुपक्रमं च । तत्र यथाऽऽर्द्रं वस्त्रं वितानितं लघीयसा कालेन शुष्येत्तथा सोपक्रमम् । यथा च तदेव संपिण्डितं चिरेण संशुष्येदेवं निरुपक्रमम् । यथा वाऽग्निः शुष्के कक्षे मुक्तो वातेन समन्ततो युक्तः क्षेपीयसा कालेन दहेत्तथा सोपक्रमम् । यथा वा स एवाग्निस्तृणराशौ क्रमशोऽवयवेषु न्यस्तश्चिरेण दहेत्तथा निरुपक्रमम् । तदैकभविकमायुष्करं कर्म द्विविधं सोपक्रमं निरुपक्रमं च । तत्संयमादपरान्तस्य प्रायणस्य ज्ञानम् ।

अरिष्टेभ्यो वेति । त्रिविधमरिष्टमाध्यात्मिकमाधिभौतिकमाधिदैविकं चेति । तत्राऽऽध्यात्मिकं घोषं स्वदेहे पिहितकर्णो न शृणोति, ज्योतिर्वा नेत्रेऽवष्टब्धे न पश्यति । तथाऽऽधिभौतिकं यमपुरुषान्पश्यति, पितॄनतीतानकस्मात्पश्यति । तथाऽऽधिदैविकं स्वर्गमकस्मात्सिद्धान्वा पश्यति । विपरीतं वा सर्वमिति । अनेन वा जानात्यपरान्तमुपस्थितमिति ॥ २२ ॥

---

**सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ।** आयुर्विपाकं च कर्म द्विविधं सोपक्रमं निरुपक्रमं च । यत्खल्वैकभविकं कर्म जात्यायुर्भोगहेतुस्तदायुर्विपाकम् । तच्च किंचित्कालानपेक्षमेव भोगदानाय प्रस्थितं दत्तबहुभोगमल्पावशिष्टफलं प्रवृत्तव्यापारं केवलं तत्फलस्य सहसा भोक्तुमेकेन शरीरेणाशक्यत्वाद्विलम्बते तदिदं सोपक्रमम् । उपक्रमो व्यापारस्तत्सहितमित्यर्थः । तदेव तु दत्तस्तोकफलं तत्कालमपेक्ष्य फलदानाय व्याप्रियमाणं कादाचित्कमन्दव्यापारं निरुपक्रमम् । एतदेव निदर्शनाभ्यां विशदयति—**तत्र यथेति** । अत्रैवातिवैशद्याय निदर्शनानन्तरं दर्शयति—**यथा वाऽग्निरिति** । परान्तं महाप्रलयमपेक्ष्यापरान्तो मरणम् । तस्मिन्कर्मणि धर्माधर्मयोः संयमादपरान्तज्ञानम् । ततश्च योगी सोपक्रममात्मनः कर्म विज्ञाय बहून्कायान्निर्माय सहसा फलं भुक्त्वा स्वेच्छया म्रियते ।

प्रासङ्गिकमाह—**अरिष्टेभ्यो वा** । अविश्वासयन्तीत्यरिष्टानि त्रिविधानि मरणचिह्नानि । **विपरीतं वा सर्वं** माहेन्द्रजालादिव्यतिरेकेण ग्रामनगरादि स्वर्गमभिमन्यते, मनुष्यलोकमेव देवलोकमिति ॥ २२ ॥

---

१ क. ख. च. ह्रसीयसा । २ क. ख. °तानागतान° । ३ ग. घ. ङ. च. °ति । आधि° ।

**मैत्र्यादिषु बलानि ॥ २३ ॥**

मैत्री करुणा मुदितेति तिस्रो भावनास्तत्र भूतेषु सुखितेषु मैत्रीं भावयित्वा मैत्रीबलं लभते। दुःखितेषु करुणां भावयित्वा करुणाबलं लभते । पुण्यशीलेषु मुदितां भावयित्वा मुदिताबलं लभते। भावनातः समाधिर्यः स संयमस्ततो बलान्यवन्ध्यवीर्याणि जायन्ते । पापशीलेषूपेक्षा न तु भावना। ततश्च तस्यां नास्ति समाधिरित्यतो न बलमुपेक्षातस्तत्र संयमाभावादिति ॥ २३ ॥

**बलेषु हस्तिबलादीनि ॥ २४ ॥**

हस्तिबले संयमाद्धस्तिबलो भवति। वैनतेयबले संयमाद्वैनतेयबलो भवति। वायुबले संयमाद्वायुबलो भवतीत्येवमादि ॥२४॥

**प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥ २५ ॥**

ज्योतिष्मती प्रवृत्तिरुक्ता मनसस्तस्या[1] य आलोकस्तं योगी सूक्ष्मे वा व्यवहिते वा विप्रकृष्टे वाऽर्थे विन्यस्य तमर्थमधिगच्छति[2] ॥ २५ ॥

---

मैत्र्यादिषु बलानि । मैत्र्यादिषु संयमान्मैत्र्यादिबलान्यस्य भवन्ति । तत्र मैत्रीभावनातो बलं येन जीवलोकं सुखं करोति ततः सर्वहितो भवति। एवं करुणाबलात्प्राणिनो दुःखाद्दुःखहेतोर्वा समुद्धरति । एवं मुदिताबलाज्जीवलोकस्य माध्यस्थ्यमाधत्ते। वक्ष्यमाणौपयिकं भावनाकारणत्वं समाधेराह—**भावनातः समाधिर्यः स संयमः**। यद्यपि धारणाध्यानसमाधित्रयमेव संयमो न समाधिमात्रं तथाऽपि समाध्यनन्तरं कार्योत्पादात्समाधेः प्राधान्यात्तत्र संयम उपचारितः । क्वचिद्भावना समाधिरिति पाठः । तत्र भावनासमाधी समूहस्य संयमस्यावयवौ हेतू भवतः। वीर्यं प्रयत्नः, तेन मैत्र्यादिबलवतः पुंसः सुखितादिषु परेषां कर्तव्येषु प्रयत्नोऽवन्ध्यो भवतीति। उपेक्षौदासीन्यं, न तत्र भावना नापि सुखादिवद्ग्राह्यं किंचिदस्तीति ॥ २३ ॥

**बलेषु हस्तिबलादीनि**, यस्य बले संयमस्तस्य बलं लभत इति ॥ २४ ॥

**प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्** । सूक्ष्मे व्यवहिते विप्रकृष्टे वाऽर्थे संयमेन विन्यस्य तमधिगच्छति[3] ॥ २५ ॥

---

१ क. ख. °स्तस्यां य। २ ख. °गच्छेत् ॥ २५ ॥ ३ क. ख. °गच्छेदिति।

## भुवनज्ञानं सूर्ये संयमात् ॥ २६ ॥

तत्प्रस्तारः सप्त लोकाः । तत्रावीचेः प्रभृति मेरुपृष्ठं यावदित्येवं भूर्लोकः । मेरुपृष्ठादारभ्य—आध्रुवाद्ग्रहनक्षत्रताराविचित्रोऽन्तरिक्षलोकः । तंतः[1] परः स्वर्लोकः पञ्चविधो माहेन्द्रस्तृतीयो लोकः । चतुर्थः प्राजापत्यो महर्लोकः । त्रिविधो ब्राह्मः । तद्यथा—जनलोकस्तपोलोकः सत्यलोक इति ।

ब्राह्मस्त्रिभूमिको लोकः प्राजापत्यस्ततो महान् ।
माहेन्द्रश्च स्वरित्युक्तो दिवि तारा भुवि प्रजाः ॥

इति संग्रहश्लोकः ।

तत्रावीचेरुपर्युपरि निविष्टाः षण्महानरकभूमयो घनसलिलानलानिलाकाशतमःप्रतिष्ठा महाकालाम्बरीषरौरवमहारौरवकालसूत्रान्धतामिस्राः । यत्र स्वकर्मोपार्जितदुःखवेदनाः प्राणिनः कष्टमायुर्दीर्घमाक्षिप्य[2] जायन्ते । ततो महातलरसातलातलसुतलवितलतलातलपातालाख्यानि सप्त पातालानि । भूमिरियमष्टमी सप्तद्वीपा वसुमती, यस्याः सुमेरुर्मध्ये पर्वतराजः काञ्चनः । तस्य राजतवैदूर्यस्फटिकहेममणिमयानि शृङ्गाणि । तत्र वैदूर्यप्रभानुरागान्नीलोत्पलपत्रश्यामो नभसो दक्षिणो भागः, श्वेतः पूर्वः, स्वच्छः पश्चिमः, कुरण्टकाभ[3] उत्तरः । दक्षिणपार्श्वे चास्य जम्बूर्यतोऽयं जम्बूद्वीपः । तस्य सूर्यप्रचाराद्रात्रिंदिवं लग्नमिव वर्तते । तस्य नीलश्वेतशृङ्गवन्त उदीचीनास्त्रयः पर्वता द्विसाहस्रायामाः । तदन्तरेषु त्रीणि वर्षाणि नव नव योजनसाहस्राणि रमणकं हिरण्मयमुत्तराः कुरव इति । निषधहेमकूटहिमशैला दक्षिणतो द्विसाहस्रायामाः । तदन्तरेषु त्रीणि वर्षाणि नव नव योजनसाहस्राणि हरिवर्षं किंपुरुषं भारतमिति ।

---

भुवनज्ञानं सूर्ये संयमात् । आध्रुवादितो मेरुपृष्ठात् । तदेवमनेन संग्रहश्लोकान्तेन संक्षेपतः सप्त लोकानुपन्यस्य विस्तरेणाऽऽह—तत्रावीचेरिति । घनशब्देन पृथिव्युच्यते । भूमिः स्थानमित्यर्थः । एते महानरका अनेकोपनरकपरिवारा बोद्धव्याः । एतानेव नामान्तरेणोपसंहरति—महेति । तस्य सूर्यप्रचाराद्रात्रिंदिवं लग्नमिव वर्तते ।

---

१ ग. घ. ङ. तत्परः । २ क. ख. °र्धकालमा° । ३ ग. घ. ङ. कुरुण्डका° । च. कुरुण्ट° ।

सुमेरोः प्राचीना भद्राश्वमाल्यवत्सीमानः प्रतीचीनाः केतुमाला गन्धमादनसीमानः । मध्ये वर्षमिलावृतम् । तदेतद्योजनशतसाहस्रं सुमेरोर्दिशि दिशि तदर्धेन व्यूढम् ।

स खल्वयं शतसाहस्रायामो जम्बूद्वीपस्ततो द्विगुणेन लवणोदधिना वलयाकृतिना वेष्टितः। ततश्च द्विगुणा द्विगुणाः शाककुशक्रौञ्चशाल्मलगोमेध(प्लक्ष)पुष्करद्वीपाः, समुद्राश्च सर्षपराशिकल्पाः सविचित्रशैलावतंसा इक्षुरससुरासर्पिर्दधिमण्डक्षीरस्वादूदकाः । सप्त समुद्रपरिवेष्टिता वलयाकृतयो लोकालोकपर्वतपरिवाराः पञ्चाशद्योजनकोटिपरिसंख्याताः । तदेतत्सर्वं सुप्रतिष्ठितसंस्थानमण्डमध्ये व्यूढम् । अण्डं च प्रधानस्याणुरवयवो यथाऽऽकाशे खद्योत इति ।

तत्र पाताले जलधौ पर्वतेष्वेतेषु देवनिकाया असुरगन्धर्वकिंनरकिंपुरुषयक्षराक्षसभूतप्रेतपिशाचापस्मारकाप्सरोब्रह्मराक्षसकूष्माण्डविनायकाः प्रतिवसन्ति । सर्वेषु द्वीपेषु पुण्यात्मानो देवमनुष्याः ।

सुमेरुस्त्रिदशानामुद्यानभूमिः । तत्र मिश्रवनं नन्दनं चैत्ररथं सुमानसमित्युद्यानानि । सुधर्मा देवसभा । सुदर्शनं पुरम् । वैजयन्तः प्रासादः । ग्रहनक्षत्रतारकास्तु ध्रुवे निबद्धा वायुविक्षेपनियमेनोपलक्षितप्रचाराः सुमेरोरुपर्युपरि संनिविष्टा दिवि विपरिवर्तन्ते ।

---

यमेवास्य मार्गं सूर्यस्त्यजति तत्र रात्रिः । यमेव मार्गमलं करोति तत्र दिनमिति । सकलजम्बूद्वीपपरिमाणमाह—तदेतद्योजनशतसाहस्रम् । किंभूतं योजनानां शतसाहस्रमित्याह–सुमेरोर्दिशि दिशि तदर्धेन पञ्चाशद्योजनसहस्रेण व्यूढं संक्षिप्तम् ।

यतोऽस्य मध्यस्थः सुमेरुः समुद्राश्च सर्षपराशिकल्पा इति द्विगुणा द्विगुणा इति संबन्धः । यथा सर्षपराशिर्न व्रीहिराशिरिवोच्छ्रितो नापि भूमिसमस्तथा समुद्रा अपीत्यर्थः । विचित्रैः शैलैरवतंसैरिव सह वर्तन्त इति सविचित्रशैलावतंसा द्वीपाः । तदेतत्सर्वं सद्वीपविपिननगनगरनीरधिमालावलयं लोकालोकपरिवृतं विश्वंभरामण्डलं ब्रह्माण्डमध्ये व्यूढं संक्षिप्तं सुप्रतिष्ठितं संस्थानं संनिवेशो यस्य तत्तथोक्तम् ।

ये यत्र प्रतिवसन्ति तत्र तान्दर्शयति—तत्र पाताल इति ।

सुमेरोः संनिवेशमाह—सुमेरुरिति । तदेवं भूर्लोकं सप्रकारमुक्त्वा सप्रकारमेवान्तरिक्षलोकमाह—ग्रहेति । विक्षेपो व्यापारः ।

---

१ ग. °लमगध° । २ ग. घ. ङ. ज. °ष्टा विप° । ३ ज. झ. °शता योज° । ४ क. सप्तद्वी° ।

माहेन्द्रनिवासिनः षड्देवनिकायाः--त्रिदशा अग्निष्वात्ता याम्यास्तुषिता अपरिनिर्मितवशवर्तिनः परिनिर्मितवशवर्तिन-श्चेति। सर्वे संकल्पसिद्धा अणिमाद्यैश्वर्योपपन्नाः कल्पायुषो वृन्दारकाः कामभोगिन औपपादिकदेहा उत्तमानुकूलाभिरप्सरोभिः कृतपरिचाराः ।

महति लोके प्राजापत्ये पञ्चविधो देवनिकायः—कुमुदा ऋभवः प्रतर्दना अञ्जनाभाः प्रचिताभा इति । एते महाभूतवशिनो ध्यानाहाराः कल्पसहस्रायुषः । प्रथमे ब्रह्मणो जनलोके चतुर्विधो देवनिकायो ब्रह्मपुरोहिता ब्रह्मकायिका ब्रह्ममहाकायिका अमरा इति । ते भूतेन्द्रियवशिनो द्विगुणद्विगुणोत्तरायुषः ।

द्वितीये तपसि लोके त्रिविधो देवनिकायः—आभास्वरा महाभास्वराः सत्यमहाभास्वरा इति । ते भूतेन्द्रियप्रकृतिवशिनो द्विगुणद्विगुणोत्तरायुषः सर्वे ध्यानाहारा ऊर्ध्वरेतस ऊर्ध्वमप्रति-

---

स्वर्लोकमादर्शयति—**माहेन्द्रनिवासिन इति** । देवनिकाया देवजातयः । षण्णामपि देवनिकायानां रूपोत्कर्षमाह—**सर्वे संकल्पसिद्धा इति** । संकल्पमात्रादेवैषां विषया उपनमन्ति । वृन्दारकाः पूज्याः । कामभोगिनो मैथुनप्रियाः । औपपादिकदेहाः पित्रोः संयोगमन्तरेणाकस्मादेव दिव्यं शरीरमेषां धर्मविशेषातिसंस्कृतेभ्योऽणुभ्यो भूतेभ्यो भवतीति ।

महर्लोकमाह—**महतीति** । **महाभूतवशिनः** । यद्यदेतेभ्यो रोचते तत्तदेव महाभूतानि प्रयच्छन्ति । तदिच्छातश्च महाभूतानि तेन तेन संस्थानेनावतिष्ठन्ते । **ध्यानाहारा** ध्यानमात्रतृप्ताः पुष्टा भवन्ति । जनलोकमाह—**प्रथम** इत्युक्तक्रमेण । **भूतेन्द्रियवशिन इति** । भूतानि पृथिव्यादीनीन्द्रियाणि श्रोत्रादीनि यथा नियोक्तुमिच्छन्ति तथैव नियुज्यन्ते ।

उक्तक्रमापेक्षया द्वितीयं ब्रह्मणस्तपोलोकमाह—**द्वितीय इति** । **भूतेन्द्रियप्रकृतिवशिन इति** । प्रकृतिः पञ्च तन्मात्राणि तद्वशिनस्तदिच्छातो हि तन्मात्राण्येव कायाकारेण परिणमन्त इत्यागमिनः । द्विगुणेत्याभास्वरेभ्यो द्विगुणायुषो महाभास्वरास्तेभ्योऽपि द्विगुणायुषः सत्यमहाभास्वरा इत्यर्थः । ऊर्ध्वमित्यूर्ध्वं सत्यलोकेऽप्रतिहतज्ञाना अर्वाचेस्तु प्रभृत्या तपोलोकं सूक्ष्मव्यवहितादि सर्वं विजानन्तीत्यर्थः । तृतीयं ब्रह्मणः

---

१ क. ख. यामास्तु° । २ क. ख. °ति । ते स° । ३ ग. घ. च. ज. °रिचाराः । ४ ख. च. अजना° । ५ क. ख. °चिताभा ।

हतज्ञाना अधरभूमिष्वनावृतज्ञानविषयाः। तृतीये ब्रह्मणः सत्यलोके चत्वारो देवनिकाया अकृतभवनन्यासाः स्वप्रतिष्ठा उपर्युपरिस्थिताः प्रधानवशिनो यावत्सर्गायुषः।

तत्राच्युताः सवितर्कध्यानसुखाः, शुद्धनिवासाः सविचारध्यानसुखाः, सत्याभा आनन्दमात्रध्यानसुखाः, संज्ञासंज्ञिनश्चास्मितामात्रध्यानसुखाः। तेऽपि त्रैलोक्यमध्ये प्रतितिष्ठन्ति। त एते सप्त लोकाः सर्वे[1] एव ब्रह्मलोकाः। विदेहप्रकृतिलयास्तु मोक्षपदे वर्तन्ते[2] इति न लोकमध्ये न्यस्ता इति। एतद्योगिना साक्षात्करणीयं सूर्यद्वारे संयमं कृत्वा, ततोऽन्यत्रापि एवं तावदभ्यसेद्यावदिदं सर्वं दृष्टमिति॥ २६॥

---

सत्यलोकमाह—तृतीय इति। अकृतो भवनस्य गृहस्य न्यासो यैस्ते तथोक्ताः। आधाराभावादेव स्वप्रतिष्ठाः। स्वेषु शरीरेषु प्रतिष्ठा येषां ते तथोक्ताः। प्रधानवशिनस्तदिच्छातः सत्त्वरजस्तमांसि प्रवर्तन्ते यावत्सर्गायुषः। तथा च श्रूयते—

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥

[कू० पु० पू० ख० १२। २६९] इति।

तदेवं चतुर्णां देवनिकायानां साधारणधर्मानुक्त्वा नामविशेषग्रहणेन धर्मविशेषानाह—तत्रेति। अच्युता नाम देवाः स्थूलविषयध्यानसुखास्तेन ते तृप्यन्ति। शुद्धनिवासा नाम देवाः सूक्ष्मविषयध्यानसुखास्तेन ते तृप्यन्ति। सत्याभा नाम देवा इन्द्रियविषयध्यानसुखास्तेन ते तृप्यन्ति। संज्ञासंज्ञिनो नाम देवा अस्मितामात्रध्यानसुखास्तेन ते तृप्यन्ति। त एते सर्वे संप्रज्ञातसमाधिमुपासते। अथासंप्रज्ञातसमाधिनिष्ठा विदेहप्रकृतिलयाः कस्मान्न लोकमध्ये न्यस्यन्त इत्यत आह—विदेहप्रकृतिलयास्त्विति। बुद्धिवृत्तिमन्तो हि दर्शितविषया लोकयात्रां वहन्तो लोकेषु वर्तन्ते। न चैवं विदेहप्रकृतिलयाः सत्यपि साधिकारत्व इत्यर्थः। तदेतदासत्यलोकमा चावीचेर्योगिना साक्षात्करणीयं, सूर्यद्वारे सुषुम्नायां नाड्याम्। न चैतावताऽपि तत्साक्षात्कारो भवतीत्यत आह—एवं तावदन्यत्रापि सुषुम्नाया अन्यत्रापि योगोपाध्यायोपदिष्टेषु यावदिदं सर्वं जगद्दृष्टमिति। बुद्धिसत्त्वं हि स्वभावत एव विश्वप्रकाशनसमर्थं तमोमलावृतं यत्रैव रजसोद्घाट्यते तदेव प्रकाशयति। सूर्यद्वारसंयमोद्घाटितं तु भुवनं प्रकाशयति। न चैवमन्यत्रापि प्रसङ्गस्तत्संयमस्य तावन्मात्रोद्घाटनसामर्थ्यादिति सर्वमवदातम्॥ २६॥

---

१ क. झ. ख. ञ. ज. सर्वे सब्रह्मकाः। २ ग. घ. ङ. ज. °र्तन्ते न।

## चन्द्रे ताराव्यूहज्ञानम् ॥ २७ ॥

चन्द्रे संयमं कृत्वा ताराणां व्यूहं विजानीयात् ॥ २७ ॥

## ध्रुवे तद्गतिज्ञानम् ॥२८॥

ततो ध्रुवे संयमं कृत्वा ताराणां गतिं विजानीयात् । ऊर्ध्व-विमानेषु[1] कृतसंयमस्तानि विजानीयात् ॥ २८ ॥

## नाभिचक्रे कायव्यूहज्ञानम् ॥२९॥

नाभिचक्रे संयमं कृत्वा कायव्यूहं विजानीयात् । वातपित्त-श्लेष्माणस्त्रयो दोषाः । धातवः सप्त त्वग्लोहितमांसस्नाय्वस्थि-मज्जाशुक्राणि । पूर्वं पूर्वमेषां बाह्यमित्येष विन्यासः ॥ २९ ॥

## कण्ठकूपे[2] क्षुत्पिपासानिवृत्तिः ॥ ३० ॥

जिह्वाया अधस्तात्तन्तुस्तन्तोरधस्तात्कण्ठस्ततोऽधस्तात्कूप-स्तत्र संयमात्क्षुत्पिपासे न बाधेते ॥ ३० ॥

## कूर्मनाड्यां स्थैर्यम् ॥ ३१ ॥

कूपादध उरसि कूर्माकारा नाडी, तस्यां कृतसंयमः स्थिर-पदं लभते । यथा सर्पो गोधा वेति[3] ॥ ३१ ॥

## मूर्धज्योतिषि सिद्धदर्शनम् ॥ ३२ ॥

शिरःकपालेऽन्तश्छिद्रं[4] प्रभास्वरं[5] ज्योतिस्तत्र संयमं[6] कृत्वा सिद्धानां द्यावापृथिव्योरन्तरालचारिणां दर्शनम् ॥ ३२ ॥

---

चन्द्रे ताराव्यूहज्ञानम् । ध्रुवे तद्गतिज्ञानम् । नाभिचक्रे कायव्यूहज्ञानम् । कण्ठकूपे क्षुत्पिपासानिवृत्तिः। कूर्मनाड्यां स्थैर्यम् । तत्र तत्र जिज्ञासायां योगि-नस्तत्र तत्र संयमः । एवं क्षुत्पिपासानिवृत्तिहेतुः संयमः स्थैर्यहेतुश्च सूत्रपदैरुप-दिष्टो भाष्येण च निगदव्याख्यातेन व्याख्यात इति न व्याख्यातः ॥२७॥ ॥२८॥ ॥ २९ ॥ ३० ॥ ३१ ॥

मूर्धज्योतिषि सिद्धदर्शनम् । मूर्धशब्देन सुषुम्ना नाडी लक्ष्यते । तत्र संयम इति ॥ ३२ ॥

---

१ क. ख. °षु संयमं कृत्वा तानि । २ ज. °ण्ठकूप° । ३ क. ख. चेति । ४ ज. °ले छिद्रं । ५ ज. °भासुरत्वाज्ज्योतिः । ६ ग. घ. ङ. च. ज. °यमात्सिद्धा° ।

प्रातिभाद्वा सर्वम् ॥ ३३ ॥

प्रातिभं नाम तारकं तद्विवेकजस्य ज्ञानस्य पूर्वरूपम् । यथोदये प्रभा भास्करस्य । तेन वा सर्वमेव जानाति योगी प्रातिभस्य ज्ञानस्योत्पत्ताविति ॥ ३३ ॥

हृदये चित्तसंवित् ॥३४॥

यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म तत्र विज्ञानं तस्मिन्संयमाच्चित्तसंवित् ॥ ३४ ॥

सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात्[1]स्वार्थसंयमात्पुरुषज्ञानम्॥३५॥

बुद्धिसत्त्वं प्रख्याशीलं समानसत्त्वोपनिबन्धने रजस्तमसी

---

**प्रातिभाद्वा सर्वम्** । प्रतिभोहस्तद्भवं प्रातिभम् । प्रसंख्यानहेतुसंयमवतो हि तत्प्रकर्षे प्रसंख्यानोदयपूर्वलिङ्गं यदूहजं ज्ञानं तेन सर्वं विजानाति योगी । तच्च प्रसंख्यानसंनिधापनेन संसारात्तारयतीति तारकम् ॥ ३३ ॥

**हृदये चित्तसंवित्** । हृदयपदं व्याचष्टे—**यदिदमस्मिन्ब्रह्मपुरे** । बृहत्त्वादात्मा ब्रह्म । तस्य पुरं निलयस्तद्धि तत्र विजानाति स्वामिति । दहरं गर्तं तदेव पुण्डरीकमधोमुखं वेश्म मनसः । चित्तसंवेदनत्वे हेतुमाह—**तत्र विज्ञानं** तत्र संयमाच्चित्तं विजानाति स्ववृत्तिविशिष्टम् ॥ ३४ ॥

**सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात्स्वार्थसंयमात्पुरुषज्ञानम्** । यत्र प्रकाशरूपस्यातिस्वच्छस्य नितान्ताभिभूतरजस्तमस्तया विवेकख्यातिरूपेण परिणतस्य बुद्धिसत्त्वस्याऽऽत्यन्तिकश्चैतन्यादसंकरस्तत्र कैव कथा रजस्तमसोर्जडस्वभावयोरित्याशयवान्सूत्रकारः सत्त्वपुरुषयोरित्युवाच । इममेवाभिप्रायं गृहीत्वा भाष्यकारोऽप्याह—**बुद्धिसत्त्वं प्रख्याशीलमिति** । न प्रख्याशीलमात्रमपि तु विवेकख्यातिरूपेण परिणतमतो नितान्तशुद्धप्रकाशतयाऽत्यन्तसारूप्यं चैतन्ये[3]नेति संकर इत्यत आह—**समानेति** । सत्त्वेनोपनिबन्धनमविनाभावः संबन्धः, समानं सत्त्वोपनिबन्धनं ययो रजस्तमसोस्ते तथोक्ते । वशीकारोऽभिभवः । असंकरमाह—

---

१ क. ख. ग. घ. ङ. छ. °रार्थत्वात्स्वा° । २ क. °रार्थत्वात्स्वा° । ३ ख. ज. °नैव° ।

वशीकृत्य सत्त्वपुरुषान्यताप्रत्ययेन परिणतम् । तस्माच्च सत्त्वात्परिणामिनोऽत्यन्तविधर्मा विशुद्धोऽन्यश्चितिमात्ररूपः पुरुषः । तयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः पुरुषस्य दर्शितविषयत्वात् । स भोगप्रत्ययः सत्त्वस्य परार्थत्वाद्दृश्यः ।

यस्तु तस्माद्विशिष्टश्चितिमात्ररूपोऽन्यः पौरुषेयः प्रत्ययस्तत्र संयमात्पुरुषविषया प्रज्ञा जायते । न च पुरुषप्रत्ययेन बुद्धिसत्त्वात्मना पुरुषो दृश्यते । पुरुष एव तं प्रत्ययं स्वात्मावलम्बनं पश्यति । तथा ह्युक्तम्—'विज्ञातारमरे केन विजानीयात्' [बृ० २ । ४ । १४ ] इति ॥ ३५ ॥

---

तस्माच्चेति । चकारोऽप्यर्थः । न केवलं रजस्तमोभ्यामित्यर्थः । परिणामिन इति वैधर्म्यमपरिणामिनः पुरुषादुक्तम् । प्रत्ययाविशेषः शान्तघोरमूढरूपाया बुद्धेश्चैतन्यबिम्बोद्ग्राहेण चैतन्यस्य शान्ताद्याकाराध्यारोपश्चन्द्रमस इव स्वच्छसलिलप्रतिबिम्बितस्य तत्कम्पात्कम्पनारोपः । भोगहेतुमाह—दर्शितविषयत्वादिति । असकृद्व्याख्यातम् । ननु बुद्धिसत्त्वमस्तु पुरुषभिन्नं[1] भोगस्तु पुंसः कुतो भिद्यत इत्यत आह—स भोगप्रत्ययो भोगरूपः प्रत्ययः सत्त्वस्यातः परार्थत्वाद्दृश्यो भोग्यः । सत्त्वं हि परार्थं[2] संहतत्वात्तद्धर्मश्च भोग इति सोऽपि परार्थः । यस्मै च परस्मा असौ तस्य भोक्तुर्भोग्यः । अथवाऽनुकूलप्रतिकूलवेदनीयस्तु सुखदुःखानुभवो भोगः । न चायमात्मानमेवानुकूलयति प्रतिकूलयति वा, स्वात्मनि वृत्तिविरोधादतोऽनुकूलनीयप्रतिकूलनीयार्थो भोगः । स भोक्ताऽऽत्मा तस्य दृश्यो भोग्य इति ।

यस्तु तस्मात्परार्थाद्विशिष्ट इति । परार्थादिति पञ्चम्यन्यपदाध्याहारेण व्याख्याता । स्यादेतत् । पुरुषविषया चेत्प्रज्ञा हन्त भोः पुरुषः प्रज्ञायाः प्रज्ञेय इति प्रज्ञान्तरमेव तत्र तत्रेत्यनवस्थापात इत्यत आह—न च पुरुषप्रत्ययेनेति । अयमभिसंधिः—चित्या जडः प्रकाशते । न जडेन चितिः । पुरुषप्रत्ययस्त्वचिदात्मा कथं चिदात्मानं प्रकाशयेत् । चिदात्मा त्वपराधीनप्रकाशो जडं प्रकाशयतीति युक्तम् । बुद्धिसत्त्वात्मनेत्यचिद्रूपतादात्म्येन जडत्वमाह । बुद्धिसत्त्वगतपुरुषप्रतिबिम्बालम्बनात्पुरुषालम्बनं[3] न तु पुरुषप्रकाशनात्पुरुषालम्बनम् । बुद्धिसत्त्वमेव तु तेन प्रत्ययेन संक्रान्तपुरुषप्रतिबिम्बं पुरुषच्छायापन्नं चैतन्यमालम्बत इति पुरुषार्थः[4] । अत्रैव[5] श्रुतिमुदाहरति—तथा ह्युक्तमीश्वरेण विज्ञातारमिति । न केनाचिदित्यर्थः ॥ ३६ ॥

---

१ ज. °रुषाद्भिन्नं । २ क. °रार्थत्वादि° । ३ क. °नं दर्पणवन्मुखावलम्बनं न । ४ ज. परमार्थः । ५ ज. तथैव ।

**ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥ ३६ ॥**

प्रातिभात्सूक्ष्मव्यवहितविप्रकृष्टातीतानागतज्ञानम् । श्रावणाद्दिव्यशब्दश्रवणम् । वेदनाद्दिव्यस्पर्शाधिगमः । आदर्शाद्दिव्यरूपसंवित् । आस्वादाद्दिव्यरससंवित् । वार्तातो दिव्यगन्धविज्ञानमित्येतानि नित्यं जायन्ते ॥ ३६ ॥

**ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३७ ॥**

ते प्रातिभादयः समाहितचित्तस्योत्पद्यमाना उपसर्गास्तद्दर्शनप्रत्यनीकत्वात् । व्युत्थितचित्तस्योत्पद्यमानाः सिद्धयः ॥ ३७ ॥

**बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३८ ॥**

---

स च स्वार्थसंयमो न यावत्प्रधानं स्वकार्यं पुरुषज्ञानमभिनिर्वर्तयति तावत्तस्य पुरस्ताद्या विभूतीराधत्ते ताः सर्वा दर्शयति—**ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते** । तदनेन योगजधर्मानुगृहीतानां मनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां यथासंख्यं प्रातिभज्ञानदिव्यशब्दाद्यपरोक्षहेतुर्भावा उक्ताः । श्रोत्रादीनां पञ्चानां दिव्यशब्दाद्युपलम्भकानां तान्त्रिक्यः संज्ञाः श्रवणाद्याः । सुगमं भाष्यम् ॥ ३६ ॥

कदाचिदात्मविषयसंयमे प्रवृत्तस्तत्प्रभावादमूरर्थान्तरसिद्धीरधिगम्य कृतार्थंमन्यः संयमाद्विरमेदत आह—**ते समाधावुपसर्गा व्युत्थाने सिद्धयः** । व्युत्थितचित्तो हि ताः सिद्धीरभिमन्यते । जन्मदुर्गत इव द्रविणकणिकामपि द्रविणसंभारम् । योगिना तु समाहितचित्तेनोपनताभ्योऽपि ताभ्यो विरन्तव्यम् । अभिसंहिततापत्रयात्यान्तिकोपशमरूपपरमपुरुषार्थः स खल्वयं कथं तत्प्रत्यनीकासु सिद्धिषु रज्यतेति सूत्रभाष्ययोरर्थः ॥ ३७ ॥

तदेवं ज्ञानरूपमैश्वर्यं पुरुषदर्शनान्तं संयमफलमुक्त्वा क्रियारूपमैश्वर्यं संयमफलमाह—**बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः** ।

---

१ ख. झ. °भाव उक्ताः । श्रो° ।

लोलीभूतस्य मनसोऽप्रतिष्ठस्य शरीरे कर्माशयवशाद्बन्धः प्रतिष्ठेत्यर्थः । तस्य कर्मणो बन्धकारणस्य शैथिल्यं समाधिबलाद्भवति । प्रचारसंवेदनं च चित्तस्य समाधिजमेव । कर्मबन्धक्षयात्स्वचित्तस्य प्रचारसंवेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति । निक्षिप्तं चित्तं चेन्द्रियाण्यनुपतन्ति । यथा मधुकरराजानं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनु निविशन्ते तथेन्द्रियाणि परशरीरावेशे चित्तमनु विधीयन्त इति ॥ ३८ ॥

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३९ ॥

समस्तेन्द्रियवृत्तिः प्राणादिलक्षणा जीवनं, तस्य क्रिया पञ्चतयी प्राणो मुखनासिकागतिराहृदयवृत्तिः । समं नयनात्समानश्चाऽऽनाभिवृत्तिः । अपनयनादपान आपादतलवृत्तिः । उन्न-

---

समाधिबलादिति । बन्धकारण[1]विषयसंयमबलात्प्राधान्यात्समाधिग्रहणम् । प्रचरत्यनेनास्मिन्निति प्रचारः । चित्तस्य गमागमाध्वानो नाड्यस्तस्मिन्प्रचारे संयमात्तद्वेदनं, तस्माच्च बन्धकारणशैथिल्यान्न तेन प्रतिबध्यते । अप्रतिबद्धमप्युन्मार्गेण गच्छन्न स्वशरीरादप्रत्यूहं निष्क्रामति । न च परशरीरमाविशति । तस्मात्तत्प्रचारोऽपि ज्ञातव्यः । इन्द्रियाणि च चित्तानुसारीणि परशरीरे यथाधिष्ठानं निविशन्त इति ॥ ३८ ॥

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च । समस्तेन्द्रियवृत्तिर्जीवनं प्राणादिलक्षणा प्राणादयो लक्षणं यस्याः सा तथोक्ता । द्वयीन्द्रियाणां वृत्तिर्बाह्याऽऽभ्यन्तरी च । बाह्या रूपाद्यालोचनलक्षणा । आभ्यन्तरी तु जीवनं, सा[2] हि प्रयत्नभेदः शरीरोपगृहीतमारुतक्रियाभेदहेतुः सर्वकरणसाधारणः । यथाऽऽहुः—

'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च' [सां०का०२९] इति ।

लक्षणीयत्वात्तस्य प्रयत्नस्य क्रिया कार्यं पञ्चतयी । प्राण आ नासिकाग्रादा च हृदयादवस्थितः । अशितपीताहारपरिणतिभेदं रसं तत्र तत्र स्थाने सममनुरूपं नयन्समानः । आ हृदयादा च नाभेरस्यावस्थानम् । मूत्रपुरीषगर्भादीनामपनयनहेतुर-

---

१ ख. झ. °णसं । २ क. ख. झ. स ।

यनादुदान आशिरोवृत्तिः । व्यापी व्यान इति । एषां [1]प्रधानं प्राणः । उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च प्रायणकाले भवति । तां वशित्वेन प्रतिपद्यते ॥ ३९ ॥

**समानजयाज्ज्वलनम् ॥ ४० ॥**

जितसमानस्तेजस उपध्मानं कृत्वा ज्वल[2]यति ॥ ४० ॥

**श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४१ ॥**

सर्वश्रोत्राणामाकाशं प्रति[3]ष्ठा सर्वशब्दानां च । यथोक्तम्—

---

पानः । आ नाभेरा च पादतलादस्य वृत्तिः । उन्नयनादूर्ध्वं नयनाद्रसादीनामुदानः । आ नासिकाग्रादा च शिरसो वृत्तिरस्य व्यापी व्यानः । एषामुक्तानां प्रधानं प्राणस्तदुत्क्रमे सर्वोत्क्रमश्रुतेः " प्राणमुत्क्रामन्तमनु सर्वे प्राणा उत्क्रामन्ति " [ बृ० ४ । ४ । २ ] इति । तदेवं प्राणादीनां क्रियास्थानभेदेन भेदं प्रतिपाद्य सूत्रार्थमवतारयति— **उदानजयादिति** । उदाने कृतसंयमस्तज्जयाज्जलादिभिर्न प्रतिहन्यते । उत्क्रान्तिश्चार्चिरादिमार्गेण भवति प्रायणकाले । तस्मात्तामुत्क्रान्तिं वशित्वेन प्रतिपद्यते । प्राणादिसंयमात्तद्विज[4]ये भूतजय एताः क्रियाः स्थाने[5]विजयादिभेदात्प्रतिपत्तव्याः ॥ ३९ ॥

**समानजयाज्ज्वलनम्** । तेजसः शारीरस्योपध्मानमुत्तेजनम् ॥ ४० ॥

स्वार्थसंयमादन्वाचयाशिष्टं श्रावणाद्युक्तं संप्रति श्रावणाद्यर्थादेव संयमाच्छ्रावणादि भवतीत्याह—**श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम्** । संयमविषयं श्रोत्राकाशयोः संबन्धमाधाराधेयभावमाह—**सर्वश्रोत्राणाम**हंकारिकाणामप्याकाशं कर्णशष्कुलीविवरं **प्रतिष्ठा** तदायतनं श्रोत्रं तदुपकारापकाराभ्यां श्रोत्रस्योपकारापकारदर्शनात् । शब्दानां च श्रोत्रसहकारिणां पार्थिवादिशब्दग्रहणे कर्तव्ये कर्णशष्कुलीसुषि[6]रवर्ति श्रोत्रं स्वाश्र[7]यनभोगतासाधारणशब्दमपेक्षते । गन्धादिगुणसहकारिभिर्घ्राणादिभि[8]र्बाह्यं पृथिव्यादिवर्ति गन्धाद्यालोचने का[9]र्ये दृष्टम् । आहंकारिकमपि घ्राणरसनत्वक्चक्षुःश्रोत्रं भूताधिष्ठानमेव भूतोपकारापकाराभ्यां घ्राणादीनामुपकारापकारदर्शनादित्युक्तम् । तच्चेदं श्रोत्रमाहंकारिकमयःप्रतिममयस्कान्तमणिकल्पेन वक्तृवक्त्रसमुत्पन्नेन वक्त्रस्थेन शब्देनाऽऽकृष्टं स्व[10]वृत्तिपरम्परया वक्तृवत्क्रमागतं शब्दमालोचयति ।

---

१ ग. घ. ङ. च. ज. प्रधानः । २ ग. घ. ङ. °लति । ३ ख. ज. °ष्ठा श° । ४ क. ज. °ये विभूतय एव ताः क्रियास्था° । ५ ज. °नभेदात्पवनविजयादिषु प्रति° । ६ ख. °ररूपं नभः स्वा° । ७ ज. °यग° । ८ ख. ज. °र्बाह्ये पृ° । ९ क. झ. कार्ये । १० झ. °वृत्तीनां घ्राणादीनामुपकाराय व° ।

तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवतीति । तच्चैतदाकाशस्य लिङ्गम् ।

अनावरणं चोक्तम् । तथाऽमूर्तस्यानावरणदर्शनाद्विभुत्वमपि प्रख्यातमाकाशस्य । शब्दग्रहणानुमितं श्रोत्रम् । बधिराबधिरयोरेकः शब्दं गृह्णात्यपरो न गृह्णातीति । तस्माच्छ्रोत्रमेव शब्दविषयम् । श्रोत्राकाशयोः संबन्धे कृतसंयमस्य योगिनो दिव्यं श्रोत्रं प्रवर्तते ॥ ४१ ॥

---

तथा च दिग्देशवर्तिशब्दप्रतीतिः प्राणभृन्मात्रस्य नास्ति बाधकेऽप्रमाणीकृता भविष्यतीति । तथा च पञ्चशिखस्य वाक्यम्—**तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवतीति** । तुल्यदेशानि श्रवणानि श्रोत्राणि येषां चैत्रादीनां ते तथोक्ताः । सर्वेषां श्रावणान्याकाशवर्तीनीत्यर्थः । तच्च श्रोत्राधिष्ठानमाकाशं शब्दगुणतन्मात्रादुत्पन्नं शब्दगुणकं येन शब्देन सहकारिणा पार्थिवादीञ्शब्दान्गृह्णाति । तस्मात्सर्वेषामेकजातीया श्रुतिः शब्द इत्यर्थः । तदनेन श्रोत्राधिष्ठानत्वमाकाशस्य शब्दगुणत्वं च दर्शितमिति । तच्चैकदेशश्रुतित्वमाकाशस्य लिङ्गम् । सा ह्येकजातीया शब्दव्यञ्जिका श्रुतिर्यदाश्रया तदेवाऽऽकाशशब्दवाच्यम् । न हीदृशी श्रुतिमन्तरेण शब्दव्यक्तिः । न चेदृशी श्रुतिः पृथिव्यादिगुणस्तस्य स्वात्मनि व्यङ्ग्यव्यञ्जकत्वानुपपत्तेरिति ।

अनावरणं चाऽऽकाशलिङ्गम् । यद्याकाशं नाभविष्यदन्योन्यसंपिण्डितानि मूर्तानि न सूचीभिरप्यभेत्स्यन्त । ततश्च सर्वैरेव सर्वमावृतं स्यात् । न च मूर्तद्रव्याभावमात्रादेवानावरणमस्याभावस्य भावाश्रितत्वेन तदभावेऽभावात् । न च चितिशक्तिस्तदाश्रया भवितुमर्हति । अपरिणामितयाऽवच्छेदकत्वाभावात् । न च दिक्कालादयः पृथिव्यादिद्रव्यव्यतिरिक्ताः सन्ति । तस्मात्तादृशः परिणतिभेदो नभस एवेति सर्वमवदातम् । अनावरणे चाऽऽकाशलिङ्गे सिद्धे यत्र यत्रानावरणं तत्र यत्र सर्वत्राऽऽकाशमिति सर्वगतत्वमप्याकाशस्य सिद्धमित्याह—**तथाऽमूर्तस्येति** । श्रोत्रसद्भावे प्रमाणमाह—**शब्दग्रहणेति** । क्रिया हि करणसाध्या दृष्टा । यथा छिदादिर्वास्यादिसाध्या । तदिह शब्दग्रहणक्रिययाऽपि करणसाध्यया भवितव्यं, यच्च करणं तच्च श्रोत्रमिति । अथास्याश्चक्षुरादय एव कस्मात्करणं न भवन्तीत्यत आह—**बधिराबधिरयोरिति** । अन्वयव्यतिरेकाभ्यामवधारणम् । उपलक्षणं चैतत्त्वग्वातयोश्चक्षुस्तेजसो रसनोदकयोर्नासिकापृथिव्योः संबन्धसंयमाद्दिव्यत्वगाद्यप्यूहनीयम् ॥ ४१ ॥

---

१ क. ख. च. ज. °स्याप्यन्यत्राना° ।

**कायाकाशयोः संबन्धसंयमाल्लघुतूल-**
**समापत्तेश्चाऽऽकाशगमनम् ॥ ४२ ॥**

यत्र कायस्तत्राऽऽकाशं तस्यावकाशदानात्कायस्य तेन संबन्धः[1] प्राप्तिस्तत्र कृतसंयमो जित्वा तत्संबन्धं लघुषु वा तूलादिष्वा परमाणुभ्यः[2] समापत्तिं लब्ध्वा जितसंबन्धो लघुर्[3]भवति। लघुत्वाच्च जले पादाभ्यां विहरति। ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहरति। ततो यथेष्टमाकाशगतिरस्य भवतीति ॥ ४२ ॥

**बहिरकल्पिता वृत्तिर्महाविदेहा ततः**
**प्रकाशावरणक्षयः ॥ ४३ ॥**

शरीराद्बहिर्मनसो वृत्तिलाभो विदेहा नाम धारणा। सा यदि शरीरप्रतिष्ठस्य मनसो बहिर्वृत्तिमात्रेण भवति सा कल्पितेत्युच्यते। या तु शरीरनिरपेक्षा बहिर्भूतस्यैव मनसो बहिर्वृत्तिः सा खल्वकल्पिता। तत्र कल्पितया साधयन्त्य[4]कल्पितां महाविदेहामिति। यया परशरीराण्याविशन्ति योगिनः। ततश्च धारणातः प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं क्लेशकर्म-

---

**कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाऽऽकाशगमनम्।** कायाकाशसंबन्धसंयमाद्वा लघुनि वा तूलादौ कृतसंयमात्समापत्तिं चेतसस्तत्स्थतदञ्जनतां लब्ध्वेति। सिद्धिक्रममाह—जल इति ॥ ४२ ॥

अपरमपि परशरीरावेशहेतुं संयमं क्लेशकर्मविपाकक्षयहेतुं[5] चाऽऽह—**बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः।** विदेहामाह—शरीरादिति। अकल्पितायां महाविदेहाया य उपायस्तत्प्रदर्शनाय कल्पितां विदेहामाह—सा यदीति। वृत्तिमात्रं कल्पनाज्ञानमात्रं तेन। महाविदेहामाह—या त्विति। उपायोपेयते कल्पिताकल्पितयोराह—तत्रेति। किं परशरीरावेशमात्रमितो नेत्याह—ततश्चेति। ततो धारणातो महाविदेहाया मनःप्रवृत्तेः सिद्धिः। क्लेशश्च कर्म च ताभ्यां

---

१ क. °बन्धावाप्ति°। ख. °बन्धो व्याप्ति°। घ. ङ. च. °बधन्प्रा°। २ क. ख. °णुस°। ३ ख. ग. घ. ङ. च. ज. लघुः। ल°। ४ ख. ग. घ. ज. °यत्यक°। ५ ख. ज. झ. °हेतुमाह।

विपाकत्रयं रजस्तमोमूलं तस्य च क्षयो भवति ॥ ४३ ॥

**स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥ ४४ ॥**

तत्र पार्थिवाद्याः शब्दादयो विशेषाः सहाऽऽकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः । एतद्भूतानां प्रथमं रूपम् । द्वितीयं रूपं स्वसामान्यं मूर्तिर्भूमिः स्नेहो जलं वह्निरुष्णता वायुः

---

विपाकत्रयं जात्यायुर्भोगाः । तदेतद्रजस्तमोमूलं विगलितरजस्तमसः सत्त्वमात्राद्विवेकख्यातिमात्रसमुत्पादात् । तदेतद्विपाकत्रयं रजस्तमोमूलतया तदात्मकं सद्बुद्धिसत्त्वमावृणोति । तत्क्षयाच्च निरावरणं योगिचित्तं यथेच्छं विहरति विजानाति चेति ॥ ४३ ॥

**स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ।** स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश्चार्थवत्त्वं चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि । तेषु संयमात्तज्जयः । स्थूलमाह—तत्रेति । पार्थिवाः[1] पाथसीयास्तैजसा वायवीया आकाशीयाः शब्दस्पर्शरूपरसगन्धा यथासंभवं विशेषाः षड्जगान्धारादयः शीतोष्णादयो नीलपीतादयः कषायमधुरादयः सुरभ्यादयः । एते हि नामरूपप्रयोजनैः परस्परतो भिद्यन्त इति विशेषाः । एतेषां पञ्च पृथिव्यां गन्धवर्जं चत्वारोऽप्सु गन्धरसवर्जं त्रयस्तेजसि गन्धरसरूपवर्जं द्वौ नभस्वति शब्द एवाऽऽकाशे । त एव ईदृशा विशेषाः सहाऽऽकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः शास्त्रे । तत्रापि पार्थिवास्तावद्धर्माः—

आकारो गौरवं रौक्ष्यं वरणं स्थैर्यमेव च ।
वृत्तिर्भेदः क्षमा कार्ष्ण्यं काठिन्यं सर्वभोग्यता ॥

अपां धर्माः—स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवं च यत् ।
शैत्यं रक्षा पवित्रत्वं संधानं चौदका गुणाः ॥

तैजसा धर्माः—ऊर्ध्वभाक्पाचकं दग्धृ पावकं लघु भास्वरम् ।
प्रध्वंस्योजस्वि वै तेजः पूर्वाभ्यां भिन्नलक्षणम् ॥

वायवीया धर्माः—तिर्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलम् ।
चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः ॥

आकाशीया धर्माः—सर्वतोगतिरव्यूहोऽविष्टम्भश्चेति ते त्रयः ।
आकाशधर्मा व्याख्याताः पूर्वधर्मविलक्षणाः ॥ इति ।

त एत आकारप्रभृतयो धर्मास्तैः सहेति । आकारश्च सामान्यविशेषो गोत्वादिः । द्वितीयं रूपमाह—**द्वितीयं रूपं स्वसामान्यम्** । मूर्तिः सांसिद्धिकं काठिन्यम् । स्नेहो जलं मृजापुष्टिबलाधानहेतुः । वह्निरुष्णतोदर्ये सौर्ये भौमे च सर्वत्रैव तेजसि

---

1 क. °र्थिवा आप्यस्तै° । २ ख. ज. झ. च ।

**प्रणामी सर्वतोगतिराकाश इत्येतत्स्वरूपशब्देनोच्यते ।**

**अस्य सामान्यस्य शब्दादयो विशेषाः । तथा चोक्तम्—**
**एकजातिसमन्वितानामेषां धर्ममात्रव्यावृत्तिरिति ।**

**सामान्यविशेषसमुदायोऽत्र द्रव्यम् । द्विष्ठो हि समूहः प्रत्यस्तमितभेदावयवानुगतः शरीरं वृक्षो यूथं वनमिति ।**

---

समवेतोष्णतेति । सर्वं चैतद्धर्मधर्मिणोरभेदविवक्षयाऽभिधानम् । वायुः प्रणामी वहनशीलः । तदाह—

> चलनेन तृणादीनां शरीरस्याटनेन च ।
> सर्वगं वायुसामान्यं नामित्वमनुमीयते ॥

**सर्वतोगतिराकाशः** । सर्वत्र शब्दोपलब्धिदर्शनात् । श्रोत्राश्रयाकाशगुणेन हि शब्देन पार्थिवादिशब्दोपलब्धिरित्युपपादितमधस्तात् । **एतत्स्वरूपशब्देनोक्तम्** ।

**अस्यैव** मूर्त्यादिसामान्यस्य शब्दादयः षड्जादय उष्णत्वादयः शुक्लत्वादयः कषायत्वादयः सुरभित्वादयो मूर्त्यादीनां सामान्यानां भेदाः । सामान्यान्यपि मूर्त्यादीनि जम्बीरपनसामलकफलादीनि रसादिभेदात्परस्परं व्यावर्तन्ते । तेनैतेषामेते रसादयो विशेषाः । तथा चोक्तम्—एकजातिसमन्वितानां प्रत्येकं पृथिव्यादीनामेकैकया जात्या मूर्तिस्नेहादिना समन्वितानामेषां षड्जादिधर्ममात्रव्यावृत्तिरिति । तदेवं सामान्यं मूर्त्याद्युक्तं विशेषाश्च शब्दादय उक्ताः ।

ये चाऽऽहुः सामान्यविशेषाश्रयो द्रव्यमिति तान्प्रत्याह—**सामान्यविशेषसमुदायोऽत्र दर्शने द्रव्यम्** । येऽपि तदाश्रयो द्रव्यमास्थिषत तैरपि तत्समुदायोऽनुभूयमानो नापह्नोतव्यः । न च तदपह्नवे तयोराधारो द्रव्यमिति भवति । तस्मात्तदेवास्तु द्रव्यम् । न तु ताभ्यां तत्समुदायाच्च तदाधारमपरं द्रव्यमुपलभामहे । ग्रावभ्यो ग्रावसमुदायादिव च तदाधारमपरं पृथग्विधं शिखरम् । समूहो द्रव्यमित्युक्तं तत्र समूहमात्रं द्रव्यमिति भ्रमापनुत्तये समूहविशेषो द्रव्यमिति निर्धारयितुं समूहप्रकारानाह—**द्विष्ठो हीति** । यस्मादेवं तस्मान्न समूहमात्रं द्रव्यमित्यर्थः । द्वाभ्यां प्रकाराभ्यां तिष्ठतीति द्विष्ठः । एकं प्रकारमाह—**प्रत्यस्तमितेति** । प्रत्यस्तमितो भेदो येषामवयवानां ते तथोक्ताः । प्रत्यस्तमितभेदा अवयवा यस्य स तथोक्तः । एतदुक्तं भवति—शरीरवृक्षयूथवनशब्देभ्यः समूहः प्रतीयमानोऽप्रतीतावयवभेदस्तद्वाचकशब्दाप्रयोगात्समूह एकोऽवगम्यत इति । युतायुतसिद्धावयवत्वेन चेतनाचेतनत्वेन चोदाहरणचतुष्टयम् । युतायुतसिद्धावयवत्वं चाग्रे वक्ष्यते ।

---

१ क. ख. °रस° ।

शब्देनोपात्तभेदावयवानुगतः समूह उभये देवमनुष्याः। समूहस्य देवा एको भागो मनुष्या द्वितीयो भागस्ताभ्यामेवाभिधीयते समूहः।

स च भेदाभेदविवक्षितः। आम्राणां वनं ब्राह्मणानां संघ आम्रवणं ब्राह्मणसंघ इति।

स पुनर्द्विविधो युतसिद्धावयवोऽयुतसिद्धावयवश्च। युतसिद्धावयवः समूहो वनं संघ इति। अयुतसिद्धावयवः संघातः शरीरं वृक्षः परमाणुरिति। अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः। एतत्स्वरूपमित्युक्तम्।

अथ किमेषां सूक्ष्मरूपं, तन्मात्रं भूतकारणं, तस्यैकोऽवयवः परमाणुः सामान्यविशेषात्माऽयुतसिद्धावयवभेदानुगतः समुदाय

---

द्वितीयं प्रकारमाह—शब्देनोपात्तभेदावयवानुगतः समूह उभये देवमनुष्या इति। देवमनुष्या इति हि शब्देनोभयशब्दवाच्यस्य समूहस्य भागौ भिन्नावुपात्तौ। ननूभयशब्दात्तावदवयवभेदो न प्रतीयते तत्कथमुपात्तभेदावयवानुगत इत्यत आह—ताभ्यां भागाभ्यामेव समूहोऽभिधीयते। उभयशब्देन भागद्वयवाचिशब्दसहितेन समूहो वाच्यः। वाक्यस्य वाक्यार्थवाचकत्वादिति भावः।

पुनर्द्वैविध्यमाह—स चेति। भेदेन चाभेदेन च विवक्षितः। भेदविवक्षितमाह—आम्राणां वनं ब्राह्मणानां संघ इति। भेद एव षष्ठीश्रुतेः, यथा गर्गाणां गौरिति। अभेदविवक्षितमाह—आम्रवणं ब्राह्मणसंघ इति। आम्राश्च ते वनं चेति समूहसमूहिनोरभेदं विवक्षित्वा सामानाधिकरण्यमित्यर्थः।

विधान्तरमाह—स पुनर्द्विविधः। युतसिद्धावयवः समूहः। युतसिद्धाः पृथक्सिद्धाः सान्तराला अवयवा यस्य स तथोक्तः, यूथं वनमिति। सान्तराला हि तदवयवा वृक्षाश्च गावश्च। अयुतसिद्धावयवश्च समूहो वृक्षो गौः परमाणुरिति। निरन्तरा हि तदवयवाः सामान्यविशेषा वा सास्नादयो वेति। तदेतेषु समूहेषु द्रव्यभूतं समूहं निर्धारयति—अयुतसिद्धेति। तदेवं प्रासङ्गिकं द्रव्यं व्युत्पाद्य प्रकृतमुपसंहरति—एतत्स्वरूपमित्युक्तमिति।

तृतीयं रूपं विवक्षुः पृच्छति—अथेति। उत्तरमाह—तन्मात्रमिति। तस्यैकोऽवयवः परिमाणभेदः[1] परमाणुः, सामान्यं मूर्तिः, शब्दादयो विशेषास्तदात्मा[2], अयुतसिद्धा निरन्तरा येऽवयवाः सामान्यविशेषास्तद्भेदेष्वनुगतः समुदायः। यथा

---

१ ख. ज. झ. °रिणामभे°। २ ज. °त्मानोऽयु°।

इत्येवं सर्वतन्मात्राण्येतत्तृतीयम् । अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीला गुणाः कार्यस्वभावानुपातिनोऽन्वयशब्देनोक्ताः । अथैषां पञ्चमं रूपमर्थवत्त्वं, भोगापवर्गार्थता गुणेष्वेवान्वयिनी, गुणास्तन्मात्रभूतभौतिकेष्विति सर्वमर्थवत् । तेष्विदानीं भूतेषु पञ्चसु पञ्चरूपेषु संयमात्तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति । तत्र पञ्च भूतस्वरूपाणि जित्वा भूतजयी भवति । तज्जयाद्वत्सानुसारिण्य इव गावोऽस्य संकल्पानुविधायिन्यो भूतप्रकृतयो भवन्ति ॥ ४४ ॥

ततोऽणिमादिप्रादुर्भावः कायसं-
पत्तद्धर्मानभिघातश्च ॥ ४५ ॥

तत्राणिमा भवत्यणुः । लघिमा लघुर्भवति । महिमा महान्भवति । प्राप्तिरङ्गुल्यग्रेणापि स्पृशति चन्द्रमसम् । प्राकाम्यमिच्छानभिघातः । भूमावुन्मज्जति निमज्जति यथोदके ।

---

च परमाणुः सूक्ष्मं रूपमेवं सर्वतन्मात्राणि सूक्ष्मं रूपमिति । उपसंहरति—एतदिति । अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीला गुणाः कार्यस्वभावमनुपतितुमनुगन्तुं शीलं येषां ते तथोक्ताः । अत एवान्वयशब्देनोक्ताः । अथैषां पञ्चमं रूपमर्थवत्त्वं विवृणोति—भोगेति । नन्वेवमपि सन्तु गुणा अर्थवन्तस्तत्कार्याणां तु कुतोऽर्थवत्त्वमित्यत आह—गुणा इति । भौतिका गोघटादयः । तदेवं संयमविषयमुक्त्वा संयमं तत्फलं चाऽऽह—तेष्विति । भूतप्रकृतयो भूतस्वभावाः ॥ ४४ ॥

संकल्पानुविधाने भूतानां किं योगिनः सिध्यतीत्यत आह—ततोऽणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्च । स्थूलसंयमजयाच्चतस्रः सिद्धयो भवन्तीत्याह—तत्राणिमा महानपि भवत्यणुः । लघिमा महानपि लघुर्भूत्वेषीकातूल इवाऽऽकाशे विहरति । महिमाऽल्पोऽपि नागनगगगनपरिणामो भवति । प्राप्तिः सर्वे भावाः संनिहिता भवन्ति योगिनः । तद्यथा—भूमिष्ठ एवाङ्गुल्यग्रेण स्पृशति चन्द्रमसम् । स्वरूपसंयमविजयात्सिद्धिमाह—प्राकाम्यमिच्छानभिघातो नास्य रूपं भूतस्वरूपैर्मूर्त्यादिभिर्हन्यते । भूमावुन्मज्जति निमज्जति च यथोदके । सूक्ष्मविषय-

---

१ क. ख. सर्वं त° । २ ग. घ. ङ. °णेष्वन्व° ।

वशित्वं भूतभौतिकेषु वशी भवत्यवश्यश्चान्येषाम् । ईशितृत्वं तेषां प्रभवाप्ययव्यूहानामीष्टे । यत्र कामावसायित्वं सत्यसंकल्पता यथा संकल्पस्तथा भूतप्रकृतीनामवस्थानम् । न च शक्तोऽपि पदार्थविपर्यासं करोति । कस्मात् । अन्यस्य यत्र कामावसायिनः पूर्वसिद्धस्य तथा भूतेषु संकल्पादिति । एतान्यष्टावैश्वर्याणि ।

कायसंपद्वक्ष्यमाणा । तद्धर्मानभिघातश्च पृथ्वी मूर्त्या न निरुणद्धि योगिनः शरीरादिक्रियां, शिलामप्यनुविशतीति । नाऽऽपः स्निग्धाः क्लेदयन्ति । नाग्निरुष्णो दहति । न वायुः प्रणामी वहति । अनावरणात्मकेऽप्याकाशे भवत्यावृतकायः सिद्धानामप्यदृश्यो भवति ॥ ४५ ॥

**रूपलावण्यबलवज्रसंहननत्वानि कायसंपत् ॥ ४६ ॥**

दर्शनीयः कान्तिमानतिशयबलो वज्रसंहननश्चेति ॥ ४६ ॥

---

संयमजयात्सिद्धिमाह—**वशित्वं** भूतानि पृथिव्यादीनि भौतिकानि गोघटादीनि तेषु वशी स्वतन्त्रो भवति, तेषां त्ववश्यस्तत्कारणतन्मात्रपृथिव्यादिपरमाणुवशीकारात्तत्कार्यवशीकारस्तेन यानि यथाऽवस्थापयति तानि तथाऽवतिष्ठन्त इत्यर्थः । अन्वयविषयसंयमजयात्सिद्धिमाह—**ईशितृत्वं** तेषां भूतभौतिकानां विजितमूलप्रकृतिः सन्यः प्रभव उत्पादो यश्चाप्ययो विनाशो यश्च व्यूहो यथावदवस्थापनं तेषामीष्टे । अर्थवत्त्वसंयमात्सिद्धिमाह—यत्र **कामावसायित्वं सत्यसंकल्पता** । विजितगुणार्थवत्त्वो हि योगी यद्यदर्थतया संकल्पयति तत्तस्मै प्रयोजनाय कल्पते । विषमप्यमृतकार्ये संकल्प्य भोजयञ्जीवयतीति । स्यादेतत् । यथा शक्तिविपर्यासं करोत्येवं पदार्थविपर्यासमपि कस्मान्न करोति । तथा च चन्द्रमसमादित्यं कुर्यात्कुहूं च सिनीवालीमित्यत आह—**न च शक्तोऽपीति** । न खल्वेते यत्र कामावसायिनस्तत्रभवतः परमेश्वरस्याऽऽज्ञामतिक्रमितुमुत्सहन्ते[4] । शक्तयस्तु पदार्थानां जातिदेशकालावस्थाभेदेनानियतस्वभावा इति युज्यते तासु तदिच्छानुविधानमिति । **एतान्यष्टावैश्वर्याणि** ।

तद्धर्मानभिघात इति । अणिमादिप्रादुर्भाव इत्यनेनैव तद्धर्मानभिघातसिद्धौ पुनरुपादानं कायसिद्धिवदेतत्सूत्रोपबद्धसकलविषयसंयमफलवत्त्वज्ञापनाय । सुगममन्यत् ॥४५॥

कायसंपदमाह—**रूपलावण्यबलवज्रसंहननत्वानि कायसंपत्** । वज्रस्येव संहननमवयवव्यूहो दृढो निबिडो यस्य स तथोक्तः ॥ ४६ ॥

---

१ ख. ज. °शित्वं । २ ज. °शित्वं । ३ ख. ज. °स्थानं । ४ ज. °तिपतितु° । ५ ख. ज.झ. तथा ।

**ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमा-
दिन्द्रियजयः ॥ ४७ ॥**

सामान्यविशेषात्मा शब्दादिर्ग्राह्यः । तेष्विन्द्रियाणां वृत्ति-र्ग्रहणम् । न च तत्सामान्यमात्रग्रहणाकारं कथमनालोचितः स विषयविशेष इन्द्रियेण मनसाऽनुव्यवसीयेतेति । स्वरूपं पुनः प्रकाशात्मनो बुद्धिसत्त्वस्य सामान्यविशेषयोरयुतसिद्धावयवभे-दानुगतः समूहो द्रव्यमिन्द्रियम् । तेषां तृतीयं रूपमस्मितालक्ष-णोऽहंकारः । तस्य सामान्यस्येन्द्रियाणि विशेषाः । चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणा येषामिन्द्रि-याणि साहंकाराणि परिणामः । पञ्चमं रूपं गुणेषु यदनुगतं पुरुषार्थवत्त्वमिति । पञ्चस्वेतेष्विन्द्रियरूपेषु यथाक्रमं संयम-स्तत्र तत्र जयं कृत्वा पञ्चरूपजयादिन्द्रियजयः प्रादुर्भवति योगिनः ॥ ४७ ॥

---

जितभूतस्य योगिन इन्द्रियजयोपायमाह—**ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसं-यमादिन्द्रियजयः** । ग्रहणं च स्वरूपं चास्मिता चान्वयश्चार्थवत्त्वं च तेषु संयमस्त-स्मादित्यर्थः । गृहीतिर्ग्रहणं, तच्च ग्राह्याधीननिरूपणमिति ग्राह्यं दर्शयति—**सामा-न्यविशेषात्मेति** । ग्राह्यमुक्त्वा ग्रहणमाह—**तेष्विति** । वृत्तिरालोचनं विषयाकारा परिणतिरिति यावत् । ये त्वाहुः—सामान्यमात्रगोचरेन्द्रियवृत्तिरिति तान्प्रत्याह—**न चेति** । गृह्यत इति ग्रहणम् । न सामान्यमात्रगोचरं ग्रहणम् । बाह्येन्द्रियतन्त्रं हि मनो बाह्ये प्रवर्तते । अन्यथाऽन्धबधिराद्यभावप्रसङ्गात् । तदिह यदि न विशेष-विषयमिन्द्रियं तेनासावनालोचितो विशेष इति कथं मनसाऽनुव्यवसीयेत । तस्मात्सा-मान्यविशेषविषयमिन्द्रियालोचनमिति । तदेतद्ग्रहणमिन्द्रियाणां प्रथमं रूपम् । द्वितीयं रूपमाह—**स्वरूपं पुनरिति** । अहंकारो हि सत्त्वभागेनाऽऽत्मीयेनेन्द्रियाण्य-जीजनत् । अतो यत्तत्र करणत्वं सामान्यं यच्च नियतरूपादिविषयत्वं विशेषस्तदुभय-मपि प्रकाशात्मकमित्यर्थः । **तेषां तृतीयं रूपमिति** । अहंकारो हीन्द्रियाणां कार-णमिति यत्रेन्द्रियाणि तत्र तेन भवितव्यमिति सर्वेन्द्रियसाधारण्यात्सामान्यमिन्द्रिया-णामित्यर्थः । **चतुर्थं रूपमिति** । गुणानां हि द्वैरूप्यं व्यवसेयात्मकत्वं व्यवसाया-त्मकत्वं च । तत्र व्यवसेयात्मकतां ग्राह्यतामास्थाय पञ्च तन्मात्राणि भूतभौतिकानि निर्मिमीते । व्यवसायात्मकत्वं तु ग्रहणरूपमास्थाय साहंकाराणीन्द्रियाणीत्यर्थः । शेषं सुगमम् ॥ ४७ ॥

---

१ क. ख. °दिर्विषयः । ते° । २ च. मात्रेण ग्र° ।

**ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४८ ॥**

कायस्यानुत्तमो गतिलाभो मनोजवित्वम् । विदेहानामिन्द्रियाणामभिप्रेतदेशकालविषयापेक्षो वृत्तिलाभो विकरणभावः । सर्वप्रकृतिविकारवशित्वं प्रधानजय इत्येतास्तिस्रः सिद्धयो मधुप्रतीका उच्यन्ते । एताश्च करणपञ्चरूपजयादधिगम्यन्ते ॥ ४८ ॥

**सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४९ ॥**

निर्धूतरजस्तमोमलस्य बुद्धिसत्त्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्तमानस्य सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वम् । सर्वात्मानो गुणा व्यवसायव्य-

---

पञ्चरूपेन्द्रियजयात्सिद्धीराह—**ततो मनोजवित्वं विकरणभावः प्रधानजयश्च** । विदेहानामिन्द्रियाणां करणभावो विकरणभावः । देशः काश्मीरादिः । कालोऽतीतादिः । विषयः सूक्ष्मादिः । सान्वयेन्द्रियजयात्सर्वप्रकृतिविकारवशित्वं प्रधानजयः । ता एताः सिद्धयो मधुप्रतीका इत्युच्यन्ते योगशास्त्रनिष्णातैः । स्यादेतत् । इन्द्रियजयादिन्द्रियाणि सविषयाणि वश्यानि भवन्तु, प्रधानादीनां तत्कारणानां किमायातमित्यत आह—**एताश्चेति** । करणानामिन्द्रियाणां पञ्च रूपाणि ग्रहणादीनि तेषां जयात् । एतदुक्तं भवति—नेन्द्रियमात्रजयस्यैताः सिद्धयोऽपि तु पञ्चरूपस्य तदन्तर्गतं च प्रधानादीति ॥ ४८ ॥

त एते ज्ञानक्रियारूपैश्वर्यहेतवः संयमाः साक्षात्पारम्पर्येण च स्वसिद्ध्युपसंहार[3]संपादितश्रद्धाद्वारेण यदर्थास्तस्याः सत्त्वपुरुषान्यताख्यातेरवान्तरविभूतीर्दर्शयति—**सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च** । निर्धूतरजस्तमोमलतया वैशारद्यं ततः परा वशीकारसंज्ञा रजस्तमोभ्यामुपप्लुतं हि चित्तसत्त्वमवश्यमासीत्तदुपशमे तु तद्वश्यं योगिनो वशिनस्तस्मिन्वश्ये योगिनः सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वम् । एतदेव विवृणोति—**सर्वात्मान**

---

१ क. ख. च. ज. °चकृस्वरू° । ग. घ. ङ. °श्वकरू° । २ ज. साधनेन्द्रि° । ३ क. °पहा° । ज. °पपा° ।

वसेयात्मकाः स्वामिनं क्षेत्रज्ञं प्रत्यशेषदृश्यात्मत्वेनोपस्थिता इत्यर्थः । सर्वज्ञातृत्वं सर्वात्मनां गुणानां शान्तोदिताव्यपदेश्यधर्मत्वेन व्यवस्थितानामक्रमोपारूढं विवेकजं ज्ञानमित्यर्थः । इत्येषा विशोका नाम सिद्धिर्यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो वशी विहरति ॥ ४९ ॥

तद्वैराग्यादपि दोषबीजक्षये
कैवल्यम् ॥ ५० ॥

यदाऽस्यैवं भवति क्लेशकर्मक्षये सत्त्वस्यायं विवेकप्रत्ययो धर्मः सत्त्वं च हेयपक्षे न्यस्तं पुरुषश्चापरिणामी शुद्धोऽन्यः सत्त्वादिति । एवमस्य ततो विरज्यमानस्य यानि क्लेशबीजानि दग्धशालिबीजकल्पान्यप्रसवसमर्थानि तानि सह मनसा प्रत्यस्तं गच्छन्ति । तेषु प्रलीनेषु पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते । तदेतेषां गुणानां मनसि कर्मक्लेशविपाकस्वरूपेणाभिव्यक्तानां चरितार्थानां प्रतिप्रसवे पुरुषस्याऽऽत्यन्तिको गुणवियोगः कैवल्यं, तदा स्वरूपप्रतिष्ठा चितिशक्तिरेव पुरुष इति ॥५०॥

स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं
पुनरनिष्टप्रसङ्गात् ॥ ५१ ॥

---

इति । व्यवसायव्यवसेयात्मानो जडप्रकाशरूपा इत्यर्थः । तदनेन क्रियैश्वर्यमुक्तम् । ज्ञानैश्वर्यमाह— **सर्वज्ञातृत्वमिति** । अस्या अपि द्विविधायाः सिद्धेर्वैराग्याय योगिजनप्रसिद्धां संज्ञामाह— **एषा विशोकेति** । क्लेशाश्च बन्धनानि च कर्माणि तानि क्षीणानि यस्य स तथा ॥ ४९ ॥

संयमान्तराणां पुरुषार्थाभासफलत्वाद्विवेकख्यातिसंयमार्थतां दर्शयितुं विवेकख्यातेः परवैराग्योपजननद्वारेण कैवल्यं फलमाह— **तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्** । यदाऽस्य योगिनः क्लेशकर्मक्षय एवं ज्ञानं भवति । किंभूतमित्याह— **सत्त्वस्यायं विवेकप्रत्ययो धर्मः** । शेषं तत्र तत्र व्याख्यातत्वात्सुगमम् ॥ ५० ॥

संप्रति कैवल्यसाधने प्रवृत्तस्य योगिनः प्रत्यूहसंभवे तन्निराकरणकारणमुपदिशति— **स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्** । स्थानानि येषां

---

१ ग. °पतिष्ठन्त इ° । २ क. °यमस्य पुरुषार्थ° । ३ ख. झ. °णमु° । ४ ज. °पसंहरति । ५ क. ख. झ. °त् । तानि स्था°।

चत्वारः खल्वमी योगिनः प्राथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति । तत्राभ्यासी प्रवृत्तमात्रज्योतिः प्रथमः । ऋतंभरप्रज्ञो द्वितीयः । भूतेन्द्रियजयी तृतीयः सर्वेषु भावितेषु भावनीयेषु कृतरक्षाबन्धः कर्तव्यसाधनादिमान् । चतुर्थो यस्त्वतिक्रांन्तभावनीयस्तस्य चित्तप्रतिसर्ग एकोऽर्थः । सप्तविधाऽस्य प्रान्तभूमिप्रज्ञा ।

तत्र मधुमतीं भूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो देवाः सत्त्वविशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते भो इहाऽऽस्यतामिह रम्यतां कमनीयोऽयं भोगः कमनीयेयं कन्या रसायनमिदं जरामृत्युं बाधते वैहायसमिदं यानममी कल्पद्रुमाः पुण्या मन्दाकिनी सिद्धा महर्षय उत्तमा अनुकूला अप्सरसो दिव्ये श्रोत्रचक्षुषी वज्रोपमः कायः स्वगुणैः सर्वमिदमुपार्जितमायुष्मता प्रतिपद्यतामिदमक्षयमजरममरस्थानं देवानां प्रियमिति । एवमभिधीयमानः सङ्गदोषान्भावयेद्घोरेषु संसाराङ्गारेषु पच्यमानेन मया जननमरणान्धकारे विपरिवर्तमानेन कथंचिदासादितः क्लेशतिमिरविनाशी योगप्रदीपस्तस्य चैते तृष्णायोनयो विषयवा-

---

सन्ति ते स्थानिनो महेन्द्रादयस्तैरुपनिमन्त्रणं तस्मिन्सङ्गश्च स्मयश्च न कर्तव्यः। पुनरनिष्टप्रसङ्गात् । तत्र यं देवाः स्थानैरुपमन्त्रयन्ते तं योगिनमेकं निर्धारयितुं यावन्तो योगिनः संभवन्ति तावत एवाऽऽह—चत्वार इति । तत्र प्राथमकल्पिकस्य स्वरूपमाह—तत्राभ्यासीति । प्रवृत्तमात्रं न पुनर्वशीकृतं ज्योतिर्ज्ञानं परचित्तादिविषयं यस्य स तथा । द्वितीयमाह—ऋतंभरप्रज्ञ इति । यत्रेदमुक्तम्—'ऋतंभरा तत्र प्रज्ञा' इति । स हि भूतेन्द्रियाणि जिगीषुः । तृतीयमाह—भूतेन्द्रियजयीति । तेन हि स्थूलादिसंयमेन ग्रहणादिसंयमेन च भूतेन्द्रियाणि जितानि । तमेवाऽऽह—सर्वेषु भावितेषु निष्पादितेषु भूतेन्द्रियजयात्परचित्तादिज्ञानादिषु कृतरक्षाबन्धो यतस्तेभ्यो न च्यवते भावनीयेषु निष्पादनीयेषु विशोकादिषु परवैराग्यपर्यन्तेषु कर्तव्यसाधनवान्मुरूपप्रयत्नस्य साधनाविषयस्यैव साध्यनिष्पादकत्वात् । चतुर्थमाह—चतुर्थ इति । तस्य हि भगवतो जीवन्मुक्तस्य चरमदेहस्य चित्तप्रतिसर्ग एकोऽर्थः ।

तदेतेषु योगिषूपनिमन्त्रणाविषयं योगिनमवधारयति—तत्र मधुमतीमिति । प्राथमकल्पिके तावन्महेन्द्रादीनां तत्प्राप्तिशङ्कैव नास्ति । तृतीयोऽपि तैर्नोपनिमन्त्रणीयो भूतेन्द्रियवशित्वेनैव तत्प्राप्तेः । चतुर्थेऽपि परवैराग्यसंपत्तेरासङ्गशङ्का दूरोत्सारितैवेति पारिशेष्याद्द्वितीय एव ऋतंभरप्रज्ञस्तदुपनिमन्त्रणविषय इति । वैहायसमाकाशगामि, अक्षयमविनाशि, अजरं सदाऽभिनवम् ।

---

१ ग. घ. ङ. च. ज. °त्वग्नु° । २ ङ. °मृत्यू वा° ।

यवः प्रतिपक्षाः। स खल्वहं लब्धालोकः कथमनया विषयमृगतृष्णया वञ्चितस्तस्यैव पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीं कुर्यामिति। स्वस्ति वः स्वप्नोपमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्य इत्येवं निश्चितमतिः समाधिं भावयेत्।

सङ्गमकृत्वा स्मयमपि न कुर्यादेवमहं देवानामपि प्रार्थनीय इति। स्मयादयं सुस्थितंमन्यतया मृत्युना केशेषु गृहीतमिवाऽऽत्मानं न भावयिष्यति। तथा चास्य च्छिद्रान्तरप्रेक्षी नित्यं यत्नोपचर्यः प्रमादो लब्धविवरः क्लेशानुत्तम्भयिष्यति ततः पुनरनिष्टप्रसङ्गः। एवमस्य सङ्गस्मयावकुर्वतो भावितोऽर्थो दृढी भविष्यति। भावनीयश्चार्थोऽभिमुखी भविष्यतीति॥ ५१॥

## क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम्॥ ५२॥

यथाऽपकर्षपर्यन्तं द्रव्यं परमाणुरेवं परमापकर्षपर्यन्तः कालः क्षणो यावता वा समयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुपसंपद्येत स कालः क्षणः। तत्प्रवाहाविच्छेदस्तु क्रमः। क्षणतत्क्रमयोर्नास्ति वस्तुसमाहार इति बुद्धिसमाहारो मुहूर्ताहो-

---

स्मयकरणे दोषमाह—स्मयादयमिति। स्मयात्सुस्थितंमन्यो नानित्यतां भावयिष्यति, न तस्यां प्रणिधास्यतीत्यर्थः। सुगममन्यत्॥ ५१॥

उक्ता क्वचित्क्वचित्संयमात्सर्वज्ञता। सा च न निःशेषज्ञता। अपि तु प्रकारमात्रविवक्षया, यथा सर्वैर्व्यञ्जनैर्भुक्तमिति। अत्र हि यावन्तो व्यञ्जनप्रकारास्तैर्भुक्तमिति गम्यते न तु निःशेषैरिति। अस्ति च निःशेषवचनः सर्वशब्दो यथोपनीतमन्नं सर्वमशितं प्राशकेनेति। तत्र हि निःशेषमिति गम्यते। तदिह निःशेषज्ञतालक्षणस्य विवेकजज्ञानस्य साधनं संयममाह—**क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम्।** क्षणपदार्थं निदर्शनपूर्वकमाह—**यथेति।** लोष्टस्य हि प्रविभज्यमानस्य यस्मिन्नवयवेऽल्पत्वतारतम्यं व्यवतिष्ठते सोऽपकर्षपर्यन्तः परमाणुर्यथा तथाऽपकर्षपर्यन्तः कालः क्षणः। पूर्वापरभागविकलकालकलेति यावत्। तमेव क्षणं प्रकारान्तरेण दर्शयति—**यावता वेति।** परमाणुमात्रं देशमतिक्रामेदित्यर्थः। क्रमपदार्थमाह—**तत्प्रवाहेति।** तत्पदेन क्षणः परामृश्यते। न चेदृशः क्रमो वास्तवः किंतु काल्पनिकस्तस्य समाहाररूपस्यायुगपदुपस्थितेषु वास्तवत्वेन विचारासहत्वादित्याह—**क्षणतत्क्रमयो-**

रात्रादयः। स खल्वयं कालो वस्तुशून्योऽपि बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासते ।

क्षणस्तु वस्तुपतितः क्रमावलम्बी । क्रमश्च क्षणानन्तर्यात्मा तं कालविदः काल इत्याचक्षते योगिनः । न च द्वौ क्षणौ सह भवतः । क्रमश्च न द्वयोः सहभुवोरसंभवात् । पूर्वस्मादुत्तरं भाविनो यदानन्तर्यं क्षणस्य स क्रमः । तस्माद्वर्तमान एवैकः क्षणो न पूर्वोत्तरक्षणाः सन्तीति । तस्मान्नास्ति तत्समाहारः । ये तु भूतभाविनः क्षणास्ते परिणामान्विता व्याख्येयाः । तेनैकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति । तत्क्षणोपारूढाः खल्वमी सर्वे धर्माः । तयोः क्षणतत्क्रमयोः संयमात्तयोः साक्षात्करणम् । ततश्च विवेकजं ज्ञानं प्रादुर्भवति ॥ ५२ ॥

तस्य विषयविशेष उपक्षिप्यते—

**जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ ५३ ॥**

---

रिति । अयुगपद्भाविक्षणधर्मत्वात्क्रमस्य क्षणसमाहारस्यावास्तवत्वात्क्षणतत्क्रमयोरप्यवास्तवत्वं समाहारस्य नैसर्गिकवैतण्डिकबुद्ध्यतिशयरहिता लौकिकाः प्रतिक्षण एव व्युत्थितदर्शना भ्रान्ता ये कालमीदृशं वास्तवमभिमन्यन्त इति ।

तत्किं क्षणोऽप्यवास्तवो नेत्याह—क्षणस्तु वस्तुपतितो वास्तव इत्यर्थः । क्रमस्यावलम्बनमवलम्बः सोऽस्यास्तीति क्रमेणावलम्ब्यते वैकल्पिकेनेत्यर्थः । क्रमस्य क्षणावलम्बनत्वे हेतुमाह— क्रमश्चेति । क्रमस्यावास्तवत्वे हेतुमाह—न चेति । चो हेत्वर्थे । यस्तु वैजात्यात्सहभावमुपेयात्तं प्रत्याह—क्रमश्च न द्वयोरिति । कस्मादसंभव इत्यत आह—पूर्वस्मादिति । उपसंहरति—तस्मादिति । तत्किमिदानीं शशविषाणायमाना एव पूर्वोत्तरक्षणा नेत्याह—ये त्विति । अन्विताः साम्येन समन्वागता इत्यर्थः । उपसंहरति–तेनेति । वर्तमानस्यैवार्थक्रियासु स्वोचितासु सामर्थ्यादिति ॥ ५२ ॥

यद्यप्येतद्विवेकजं ज्ञानं निःशेषभावविषयमित्यग्रे वक्ष्यते तथाऽप्यतिसूक्ष्मत्वात्प्रथमं तस्य विषयविशेष उपक्षिप्यते—जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः । लौकिकानां जातिभेदोऽन्यताया ज्ञापकहेतुः । तुल्या जातिर्गोत्वं तुल्यश्च

---

१ क. ख. ङ. च. ज. °रस्य भा° । २ ख. ज. °ति । तत्कि° ।

तुल्ययोर्देशलक्षणसारूप्ये जातिभेदोऽन्यताया हेतुः, गौरियं वडवेयमिति। तुल्यदेशजातीयत्वे लक्षणमन्यत्वकरं कालाक्षी गौः स्वस्तिमती गौरिति। द्वयोरामलकयोर्जातिलक्षणसारूप्याद्देश-भेदोऽन्यत्वकर इदं पूर्वमिदमुत्तरमिति। यदा तु पूर्वमामलकमन्य-व्यग्रस्य ज्ञातुरुत्तरदेश उपावर्त्यते तदा तुल्यदेशत्वे पूर्वमेतदुत्तर-मेतदिति प्रविभागानुपपत्तिः। असंदिग्धेन च तत्त्वज्ञानेन भवि-तव्यमित्यत इदमुक्तं ततः प्रतिपत्तिर्विवेकजज्ञानादिति।

कथं, पूर्वामलकसहक्षणो देश उत्तरामलकसहक्षणा-द्देशाद्भिन्नः। ते चाऽऽमलके स्वदेशक्षणानुभवभिन्ने।

---

देशः पूर्वादिः। कालाक्षीस्वस्तिमत्योर्लक्षणभेदः परमिति। द्वयोरामलकयोस्तुल्याऽऽ-मलकत्वजातिर्वर्तुलादि लक्षणं तुल्यं देशभेदः परमिति। यदा तु योगिज्ञानं जिज्ञा-सुना केनचित्पूर्वामलकमन्यव्यग्रस्य योगिनो ज्ञातुरुत्तरदेश उपावर्त्येत उत्तरदेशमाम-लकं ततोऽपसार्य पिधाय वा तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति प्रविभागानुपपत्तिः प्राज्ञस्य लौकिकस्य त्रिप्रमाणीनिपुणस्यासंदिग्धेन च तत्त्वज्ञानेन भवितव्यं विवेकज-ज्ञानवतो योगिनः संदिग्धत्वानुपपत्तेः। अत उक्तं सूत्रकृता—**ततः प्रतिपत्तिः।** तत इति व्याचष्टे—**विवेकजज्ञानादिति।**

क्षणतत्क्रमसंयमाज्जातं ज्ञानं कथमामलकं तुल्यजातिलक्षणदेशादामलकान्तराद्विवे-चयतीति पृच्छति—**कथमिति।** उत्तरमाह—**पूर्वामलकसहक्षणो देशः** पूर्वामल-केनैकक्षणो देशस्तेन सह निरन्तरपरिणाम इति यावत्। **उत्तरामलकसहक्षणाद्देशा-**दुत्तरामलकनिरन्तरपरिणामाद्भिन्नो भवतु देशयोर्भेदः किमायातमामलकभेदस्येत्यत आह—**ते चाऽऽमलके स्वदेशक्षणानुभवभिन्ने,** स्वदेशसहितो यः क्षणस्तस्याऽऽम-लकस्य कालकला स्वदेशेन सहौत्तराधर्यरूपपरिणामलक्षिता सा स्वदेशक्षणस्तस्यानु-भवः प्राप्तिर्वा ज्ञानं वा तेन भिन्ने आमलके ययोरामलकयोः पूर्वोत्तराभ्यां देशाभ्या-मौत्तराधर्यपरिणामक्षण आसीत्तयोर्देशान्तरौत्तराधर्यपरिणामक्षणविशिष्टत्वमनुभवन्सं-यमी ते भिन्न एव प्रत्येति। संप्रति तद्देशपरिणामेऽपि पूर्वभिन्नदेशपरिणामाद्वि-शिष्टस्य चैतद्देशपरिणामक्षणस्य संयमतः साक्षात्करणात्। तदिदमुक्तम्—

---

१ क. ख. घ. ङ. °तायां हे°। २ क. ख. घ. °वर्तेते। ३ क. ख. ङ. पर्वत्वादिः। ४ ख. ञ. °वन्योगी ते।

अन्यदेशक्षणानुभवस्तु तयोरन्यत्वे हेतुरिति । एतेन दृष्टान्तेन परमाणोस्तुल्यजातिलक्षणदेशस्य पूर्वपरमाणुदेशसहक्षणसाक्षात्करणादुत्तरस्य परमाणोस्तद्देशानुपपत्तावुत्तरस्य तद्देशानुभवो भिन्नः सहक्षणभेदात्तयोरीश्वरस्य योगिनोऽन्यत्वप्रत्ययो भवतीति ।

अपरे तु वर्णयन्ति—येऽन्त्या विशेषास्तेऽन्यताप्रत्ययं कुर्वन्तीति । तत्रापि देशलक्षणभेदो मूर्तिव्यवधिजातिभेदश्चान्यत्वे हेतुः । क्षणभेदस्तु योगिबुद्धिगम्य एवेति । अत उक्तं मूर्तिव्यवधिजातिभेदाभावान्नास्ति मूलपृथक्त्वमिति वार्षगण्यः ॥ ५३ ॥

---

**अन्यदेशक्षणानुभवस्तु तयोरन्यत्वे हेतुरिति** । अनेनैव निदर्शनेन लौकिकपरीक्षकसंवादादिना परमाणोरपीदृशस्य भेदो योगीश्वरबुद्धिगम्यः श्रद्धेय इत्याह—**एतेनेति** ।

**अपरे तु वर्णयन्ति** । वर्णनमुदाहरति—**य इति** । वैशेषिका हि नित्यद्रव्यवृत्तयोऽन्त्या विशेषा इत्याहुः । तथा हि—योगिनो मुक्तांस्तुल्यजातिदेशकालान्व्यवधिरहितान्परस्परतो भेदेन प्रत्येकं तत्त्वेन च प्रतिपद्यन्ते । तस्मादस्ति कश्चिदन्त्यो विशेष इति । तथा च स एव नित्यानां परमाण्वादीनां द्रव्याणां भेदक इति । तदेतद्दूषयति—**तत्रापीति** । जातिदेशलक्षणान्युदाहृतानि । मूर्तिः संस्थानं यथैकं विशुद्धावयवसंस्थानोपपन्नमपसार्य तस्मिन्नेव देशेऽन्यव्यग्रस्य द्रष्टुः कुत्सितावयवसंनिवेश उपावर्त्यते तदा तस्य संस्थानभेदेन भेदप्रत्ययः, शरीरं वा मूर्तिस्तत्संबन्धेनाऽऽत्मनां संसारिणां मुक्तात्मनां वा भूतचरेण यादृशतादृशेन भेद इति सर्वत्र भेदप्रत्ययस्यान्यथासिद्धेर्नान्त्यविशेषकल्पना । व्यवधिर्भेदकारणम् । यथा कुशपुष्करद्वीपयोर्देशस्वरूपयोरिति । यतो जातिदेशादिभेदा लोकबुद्धिगम्या अत उक्तं—**क्षणभेदस्तु योगिबुद्धिगम्य एवेति** । एवकारः क्षणभेदमवधारयति न योगिबुद्धिगम्यत्वम् । तेन भूतचरेण देहसंबन्धेन मुक्तात्मनामपि भेदो योगिबुद्धिगम्य उन्नेय इति । यस्य तूक्ता भेदहेतवो न सन्ति तस्य प्रधानस्य भेदो नास्तीत्याचार्यो मेने । यस्मादूचे—"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" [ यो० सू० २ । २२ ] इति । तदाह—**मूर्तिव्यवधीति** । उक्तभेदहेतूपलक्षणमेतत् । जगन्मूलस्य प्रधानस्य पृथक्त्वं भेदो नास्तीत्यर्थः ॥ ५३ ॥

---

१ ख. ज. °नं तथै° ।

**तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५४ ॥**

तारकमिति स्वप्रतिभोत्थमनौपदेशिकमित्यर्थः । सर्वविषयं नास्य किंचिदविषयीभूतमित्यर्थः । सर्वथाविषयमतीतानागतप्रत्युत्पन्नं सर्वं पर्यायैः सर्वथा जानातीत्यर्थः । अक्रममित्येकक्षणोपारूढं सर्वं सर्वथा गृह्णातीत्यर्थः । एतद्विवेकजं ज्ञानं परिपूर्णम् । अस्यैवांशो योगप्रदीपो मधुमतीं भूमिमुपादाय यावदस्य परिसमाप्तिरिति ॥ ५४ ॥

प्राप्तविवेकजज्ञानस्याप्राप्तविवेकजज्ञानस्य वा—

**सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥ ५५ ॥**

( इति श्रीपतञ्जलिविरचितयोगसूत्रेषु तृतीयो विभूतिपादः ॥ ३ ॥ )

———:०:———

तदेवं विषयैकदेशं विवेकजज्ञानस्य दर्शयित्वा विवेकजं ज्ञानं लक्षयति—**तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम्** । विवेकजं ज्ञानमिति लक्ष्यनिर्देशः । शेषं लक्षणम् । संसारसागरात्तारयतीति तारकम् । पूर्वस्मात्प्रातिभाद्विशेषयति—**सर्वथाविषयमिति** । पर्याया अवान्तरविशेषाः । अत एव विवेकजं ज्ञानं परिपूर्णं नास्य क्वचित्किंचित्कथंचित्कदाचिदगोचर इत्यर्थः । आस्तां तावज्ज्ञानान्तरं संप्रज्ञातोऽपि तावदस्यांशः । तस्मादतः परं किं परिपूर्णमित्याह—**अस्यैवांशो योगप्रदीपः** संप्रज्ञातः । किमुपक्रमः किमवसानश्चासावित्याह—**मधुमतीमिति** । ऋतंभरा प्रज्ञैव मधु । मोदकारणत्वात् । यथोक्तं प्रज्ञाप्रासादमारुह्येति । तद्वती मधुमती धियोऽवस्था । तामुपादाय यावदस्य परिसमाप्तिः सप्तधा प्रान्तभूमिः प्रज्ञा । अत एव विवेकजं ज्ञानं तारकं भवति । तदंशस्य योगप्रदीपस्य तारकत्वादिति ॥ ५४ ॥

तदेवं परम्परया कैवल्यस्य हेतून्सविभूतीन्संयमानुक्त्वा सत्त्वपुरुषान्यताज्ञानं साक्षात्कैवल्यसाधनमित्यत्र सूत्रमवतारयति—**प्राप्तेति** । विवेकजं ज्ञानं भवतु मा वा भूत्सत्त्वपुरुषान्यताख्यातिस्तु कैवल्यप्रयोजिकेत्यर्थः । **सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति** । इतिः सूत्रसमाप्तौ । ईश्वरस्य पूर्वोक्तैः संयमैर्ज्ञानक्रियाशक्तिमतोऽनीश्वरस्य वा समनन्तरोक्तेन संयमेन विवेकजज्ञानभागिन इतरस्य वाऽनुत्पन्नज्ञानस्य न

१ क. ज. °स्य वोत्प° । झ. °स्य चानु° ।

यदा निर्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्यान्यताप्रतीतिमात्राधिकारं दग्धक्लेशबीजं भवति तदा पुरुषस्य शुद्धिसारूप्यमिवाऽऽपन्नं भवति, तदा पुरुषस्योपचरितभोगाभावः शुद्धिः । एतस्यामवस्थायां कैवल्यं भवतीश्वरस्यानीश्वरस्य वा विवेकजज्ञानभागिन इतरस्य वा । नहि दग्धक्लेशबीजस्य ज्ञाने पुनरपेक्षा काचिदस्ति । सत्त्वशुद्धिद्वारेणैतत्समाधिजमैश्वर्यं ज्ञानं चोपक्रान्तम् । परमार्थतस्तु ज्ञानाददर्शनं निवर्तते तस्मिन्निवृत्ते न सन्त्युत्तरे क्लेशाः । क्लेशाभावात्कर्मविपाकाभावः । चरिताधिकाराश्चैतस्यामवस्थायां गुणा न पुरुषस्य पुनर्दृश्यत्वेनोपतिष्ठन्ते । तत्पुरुषस्य कैवल्यं, तदा पुरुषः स्वरूपमात्रज्योतिरमलः केवली भवति ॥ ५५ ॥

इति श्रीपातञ्जले सांख्यप्रवचने योगशास्त्रे व्यासभाष्ये विभूतिपादस्तृतीयः ॥ ३ ॥

---

विभूतिषु काचिदपेक्षाऽस्तीत्याह—न हीति । ननु यद्यनपेक्षिता विभूतयः कैवल्ये, व्यर्थस्तर्हि तासामुपदेश इत्यत आह—सत्त्वशुद्धिद्वारेणेति । इत्थंभूतलक्षणे तृतीया । नात्यन्तमहेतवः कैवल्ये विभूतयः किंतु न साक्षादित्यर्थः । ज्ञानं विवेकजमुपक्रान्तं यच्च पारम्पर्येण कारणं तदौपचारिकं न तु मुख्यं, परमार्थस्तु ख्यातिरेव मुख्यमित्यर्थः । ज्ञानादिति प्रसंख्यानादित्यर्थः ॥ ५५ ॥

अत्रान्तरङ्गाण्यङ्गानि परिणामाः प्रपञ्चिताः ।
संयमाद्भूतसंयोगस्तासु ज्ञानं विवेकजम् ॥ इति (*पदार्थसंग्रहश्लोकः)।

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां तत्त्ववैशारद्यां विभूतिपादस्तृतीयः ॥ ३ ॥

---

* एतच्चिह्नान्तर्गतं ख. पुस्तके नास्ति ।

१ ग. घ. ङ. च. ज. 'प्रत्ययमा' ।

—०—:⊙:—०—

## ( तत्र चतुर्थः कैवल्यपादः ) ।

**जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥**

**देहान्तरिता जन्मना सिद्धिः । ओषधिभिरसुरभवनेषु रसायनेनेत्येवमादिः । मन्त्रैराकाशगमनाणिमादिलाभः । तपसा संकल्पसिद्धिः, कामरूपी यत्र तत्र कामग इत्येवमादि । समाधिजाः सिद्धयो व्याख्याताः ॥ १ ॥**

---

तदेवं प्रथमद्वितीयतृतीयपादैः समाधितत्साधनतद्विभूतयः प्राधान्येन व्युत्पादिताः । इतरत्तु प्रासङ्गिकमौपोद्घातिकं चोक्तमिहेदानीं तद्धेतुकं कैवल्यं व्युत्पादनीयम् । न चैतत्कैवल्यभागीयं चित्तं परलोकं च परलोकिनं विज्ञानातिरिक्तं चित्तकरणकसुखाद्यात्मकशब्दाद्युपभोक्तारमात्मानं च प्रसंख्यानपरमकाष्ठां च विना व्युत्पाद्य शक्यं वक्तुमिति तदेतत्सर्वमत्र पादे व्युत्पादनीयमितरच्च प्रसङ्गादुपोद्घाताद्वा । तत्र प्रथमं सिद्धचित्तेषु कैवल्यभागीयं चित्तं निर्धारयितुकामः पञ्चतयीं सिद्धिमाह—**जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः** । व्याचष्टे—**देहान्तरितेति** । स्वर्गोपभोगभागीयात्कर्मणो मनुष्यजातीयाचरितात्कुतश्चिन्निमित्ताल्लब्धपरिपाकात्क्वचिद्देवनिकाये जातमात्रस्यैव दिव्यदेहान्तरिता सिद्धिरणिमाद्या भवतीति । ओषधिसिद्धिमाह—**असुरभवनेष्विति** । मनुष्यो हि कुतश्चिन्निमित्तादसुरभवनमुपसंप्राप्तः कमनीयाभिरसुरकन्याभिरुपनीतं रसायनमुपयुज्याजरामरणत्वमन्याश्च सिद्धीरासादयति । इहैव वा रसायनोपयोगेन यथा माण्डव्यो मुनी रसोपयोगाद्विन्ध्यवासीति । मन्त्रसिद्धिमाह—**मन्त्रैरिति** । तपःसिद्धिमाह—**तपसेति** । संकल्पसिद्धिमाह—**कामरूपीति** । यदेव कामयतेऽणिमादि तदेकपदेऽस्य भवतीति । यत्र कामयते श्रोतुं वा मन्तुं वा तत्र तदेव शृणोति मनुते वेति । आदिशब्दाद्दर्शनादयः संगृहीता इति ॥ १ ॥

समाधिजाः सिद्धयो व्याख्याता अधस्तने पादे । अथ चतसृषु सिद्धिष्वौषधादिसाधनासु तेषामेव कायेन्द्रियाणां जात्यन्तरपरिणतिरिष्यते । सा पुनर्न तावदुपादानमात्रात् । न हि तावन्मात्रमुपादानं न्यूनाधिकदिव्यादिव्यभावेऽस्य भवति । नो खल्वविलक्षणं कारणं कार्यवैलक्षण्यायालम् । माऽस्यार्थाऽऽकस्मिकत्वं भूदित्याशङ्क्य पूरयित्वा सूत्रं

---

१ क. ख. च. ज. °भ्मासि° । २ क. ख. °दिसिद्धिः । त° । च. ज. °दिलब्धिः । त° । ३ ख. ङ. °मिदा° । ४ ङ. °न्या आक° ।

तत्र कायेन्द्रियाणामन्यजातीयपरिणतानाम्—

**जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥**

पूर्वपरिणामापाय उत्तरपरिणामोपजनस्तेषामपूर्वावयवानुप्रवेशाद्भवति । कायेन्द्रियप्रकृतयश्च स्वं स्वं विकारमनुगृह्णन्त्यापूरेण धर्मादिनिमित्तमपेक्षमाणा इति ॥ २ ॥

**निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥**

न हि धर्मादि निमित्तं तत्प्रयोजकं[2] प्रकृतीनां भवति । न कार्येण कारणं प्रवर्त्यत इति । कथं तर्हि, वरणभेदस्तु ततः क्षेत्रिकवत् । यथा क्षेत्रिकः केदारादपां पूर्णात्केदारान्तरं पिप्लावयिषुः समं निम्नं निम्नतरं वा नापः पाणिनाऽपकर्षत्यावरणं त्वासां भिनत्ति तस्मिन्भिन्ने स्वयमेवाऽऽपः केदारान्तरमाप्लावयन्ति तथा धर्मः प्रकृतीनामावरणधर्मं भिनत्ति तस्मिन्भिन्ने

---

पठति—तत्र कायेन्द्रियाणामन्यजातीयपरिणतानां—**जात्यन्तरपरिणामः प्रकृत्यापूरात्** । मनुष्यजातिपरिणतानां कायेन्द्रियाणां यो देवतिर्यग्जातिपरिणामः[1] स खलु प्रकृत्यापूरात् । कायस्य हि प्रकृतिः पृथिव्यादीनि भूतानि । इन्द्रियाणां च प्रकृतिरस्मिता, तदवयवानुप्रवेश आपूरस्तस्माद्भवति । तदिदमाह—**पूर्वपरिणामेति** । ननु यद्यापूरेणानुग्रहः कस्मात्पुनरसौ न सदातन इत्यत आह—**धर्मादीति** । तदनेन तस्यैव शरीरस्य बाल्यकौमारयौवनवार्धकादीनि च न्यग्रोधधानायां न्यग्रोधतरुभावश्च वह्निकणिकायास्तृणराशिनिवेशिताया वा प्रोद्भवज्ज्वालासहस्रसमालिङ्गितगगनमण्डलत्वं च व्याख्यातम् ॥ २ ॥

प्रकृत्यापूरादित्युक्तं तत्रेदं संदिह्यते—किमापूरः प्रकृतीनां स्वाभाविको धर्मादिनिमित्तो वेति । किं प्राप्तं सतीष्वपि प्रकृतिषु कदाचिदापूराद्धर्मादिनिमित्तश्रवणाच्च तन्निमित्त एवेति प्राप्तम् । एवं प्राप्त आह—**निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्** । सत्यं धर्मादयो निमित्तं न तु प्रयोजकास्तेषामपि प्रकृतिकार्यत्वात् । न च कार्यं कारणं प्रयोजयति । तस्य तदधीनोत्पत्तितया कारणपरतन्त्रत्वात् । स्वतन्त्रस्य च प्रयोजकत्वात् । न खलु कुलालमन्तरेण मृद्दण्डचक्रसलिलादय

---

१ क. ख. च. ज. °जातिप° । २ ग. °त्तं प्रयो° ।

स्वयमेव प्रकृतयः स्वं स्वं विकारमाप्लावयन्ति । यथा वा स एव क्षेत्रिकस्तस्मिन्नेव केदारे न प्रभवत्यौदकान्भौमान्वा रसान्धान्यमूलान्यनुप्रवेशयितुं, किं तर्हि मुद्गगवेधुकश्यामाकादींस्ततोऽपकर्षति । अपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलान्यनुप्रविशन्ति, तथा धर्मो निवृत्तिमात्रे कारणमधर्मस्य, शुद्ध्यशुद्ध्योरत्यन्तविरोधात्, न तु प्रकृतिप्रवृत्तौ धर्मो हेतुर्भवतीति । अत्र नन्दीश्वरादय उदाहार्याः । विपर्ययेणाप्यधर्मो धर्मं बाधते । ततश्चाशुद्धिपरिणाम इति । तत्रापि नहुषाजगरादय उदाहार्याः ॥ ३ ॥

यदा तु योगी बहून्कायान्निर्मिमीते तदा किमेकमनस्कास्ते भवन्त्यथानेकमनस्का इति—

**निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥**

अस्मितामात्रं चित्तकारणमुपादाय निर्माणचित्तानि करोति, ततः सचित्तानि भवन्तीति[1] ॥ ४ ॥

---

उत्पित्सितेनोत्पन्नेन वा घटेन प्रयुज्यन्ते । किंतु स्वतन्त्रेण कुलालेन । न च पुरुषार्थोऽपि प्रवर्तकः । किंतु तदुद्देशेनेश्वरः । उद्देश्यतामात्रेण पुरुषार्थः प्रवर्तक इत्युच्यते । उत्पित्सोस्त्वस्य[2] पुरुषार्थस्याव्यक्तस्य[3] स्थितिकारणत्वं[4] युक्तम् । न चैतावता धर्मादीनामनिमित्तता प्रतिबन्धापनयनमात्रेण क्षेत्रिकवदुपपत्तेरीश्वरस्यापि धर्माधिष्ठानार्थं प्रतिबन्धापनय एव व्यापारो वेदितव्यः । तदेतान्निगदव्याख्यातेन भाष्येणोक्तम् ॥ ३ ॥

प्रकृत्यापूरेण सिद्धीः समर्थ्य सिद्धिविनिर्मितनानाकायवर्तिचित्तैकत्वनानात्वे विचारयति—यदा त्विति । तत्र नानामनस्त्वे कायानां प्रतिचित्तमभिप्रायभेदादेकाभिप्रायानुरोधश्च परस्परप्रतिसंधानं च न स्यातां पुरुषान्तरवत् । तस्मादेकमेव चित्तं प्रदीपवद्विसारितया बहूनपि निर्माणकायान्व्याप्नोतीति प्राप्त आह—**निर्माणचित्तान्यस्मितामात्रात्** । यद्यावज्जीवच्छरीरं तत्सर्वमेकैकासाधारणचित्तान्वितं दृष्टम् । तद्यथा— चैत्रमैत्रादिशरीरम् । तथा च निर्माणकाया इति सिद्धं तेषामपि प्रातिस्विकं मन इत्यभिप्रायेणाऽऽह—**अस्मितामात्रमिति** ॥ ४ ॥

---

१ ग. घ. ङ. भवन्ति । २ ख. °स्त्वपु° । ज. °स्त्वस्या° । ३ क. °र्थस्य व्य° । ४ ज. °णत्वमुक्त° ।

**प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥**

बहूनां चित्तानां कथमेकचित्ताभिप्रायपुरःसरा प्रवृत्तिरिति सर्वचित्तानां प्रयोजकं चित्तमेकं निर्मिमीते, ततः प्रवृत्तिभेदः ॥५॥

**तत्र ध्यानजमनाशयम् ॥ ६ ॥**

पञ्चविधं निर्माणचित्तं जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धय इति । तत्र यदेव ध्यानजं चित्तं तदेवानाशयं तस्यैव नास्त्याशयो रागादिप्रवृत्तिर्नातः पुण्यपापाभिसंबन्धः क्षीणक्लेशत्वाद्योगिन इति । इतरेषां तु विद्यते कर्माशयः ॥ ६ ॥

---

यदुक्तमनेकचित्तत्व एकाभिप्रायानुरोधश्च प्रतिसंधानं च न स्यातामिति तत्रोत्तरं सूत्रम्—प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् । अभविष्यदेष दोषो यदि चित्तमेकं नानाकायवर्ति मनोनायकं न निरमास्यत्, तन्निर्माणे त्वदोषः । न चैकं गृहीत्वा कृतं प्रातिस्विकैर्मनोभिः कृतं वा नायकनिर्माणेन निजस्यैव मनसो नायकत्वादिति वाच्यम् । प्रमाणसिद्धस्य नियोगपर्यनुयोगानुपपत्तेरिति । अत्र पुराणं भवति—

एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः ।
भूत्वा यस्मात्तु बहुधा भवत्येकः पुनस्तु सः ॥
तस्माच्च मनसो भेदा[1] जायन्ते चैत एव हि ॥ ( वायुपु० ६६।१४३)।
एकधा स द्विधा चैव त्रिधा च बहुधा पुनः ।
योगीश्वरः शरीराणि करोति विकरोति च ॥
प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् ।
संहरेच्च पुनस्तानि सूर्यो रश्मिगणानिव ॥ (वायुपु० ६६।१५२) इति ।

तदेतेनाभिप्रायेणाऽऽह—बहूनां चित्तानामिति ॥ ५ ॥

तदेवमुदितेषु पञ्चसु सिद्धचित्तेष्वपवर्गभागीयं चित्तं निर्धारयति—तत्र ध्यानजमनाशयम् । आशेरत इत्याशयाः कर्मवासनाः क्लेशवासनाश्च । त एते न विद्यन्ते यस्मिंस्तदनाशयं चित्तमपवर्गभागीयं भवतीत्यर्थः । यतो रागादिनिबन्धना प्रवृत्तिर्नास्त्यतो नास्ति पुण्यपापाभिसंबन्धः । कस्मात्पुना रागादिजनिता प्रवृत्तिर्नास्तीत्यत आह—क्षीणक्लेशत्वादिति । ध्यानजस्यानाशयस्य मनोन्तरेभ्यो विशेषं दर्शयितुमितरेषामाशयवत्तामाह—इतरेषां त्विति ॥ ६ ॥

---

१ क. ख. ज. °दाज्जाय° ।

यतः—

**कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥**

चतुष्पदी[1] खल्वियं कर्मजातिः । कृष्णा शुक्लकृष्णा शुक्लाऽशुक्लाकृष्णा चेति । तत्र कृष्णा दुरात्मनाम् । शुक्लकृष्णा बहिःसाधनसाध्या । तत्र परपीडानुग्रहद्वारेणैव कर्माशयप्रचयः । शुक्ला तपःस्वाध्याय[2]ध्यानवताम् । सा हि केवले मनस्यायत्त[3]त्वाद्बहिःसाधनाधीना न परान्पीडयित्वा भवति । अशुक्लाकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति । तत्राशुक्लं योगिन एव फलसंन्यासादकृष्णं चानुपादानात् । इतरेषां तु भूतानां पूर्वमेव त्रिविधमिति ॥ ७ ॥

**ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥**

---

तत्रैव च हेतुपरं सूत्रमवतारयति—यत इति । कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् । पदं स्थानम् । चतुर्षु समवेता चतुष्पदी । यद्यद्बहिःसाधनसाध्यं तत्र सर्वत्रास्ति कस्यचित्पीडा । न हि व्रीह्यादिसाधनेऽपि कर्मणि परपीडा नास्त्यवघातादिसमयेऽपि पिपीलिकादिवधसंभवात् । अन्ततो बीजादिवधेन स्तम्बादिभेदोत्पत्तिप्रतिबन्धात् । अनुग्रहश्च दक्षिणादिना ब्राह्मणादेरिति । शुक्ला तपःस्वाध्यायध्यानवतामसंन्यासिनाम् । शुक्लत्वमुपपादयति—सा हीति । अशुक्लाकृष्णा संन्यासिनाम् । संन्यासिनो दर्शयति—क्षीणेति । [4]कर्मासंभवात्[5] । कर्मसंन्यासिनो हि न कचिद्बहिःसाधनसाध्ये कर्मणि प्रवृत्ता इति न चैषामस्ति कृष्णः कर्माशयः । योगानुष्ठानसाध्यस्य कर्माशयफलस्येश्वरे समर्पणान्न शुक्लः कर्माशयः । निरत्ययफलो[6] हि शुक्ल उच्यते । यस्य फलमेव नास्ति कुतस्तस्य निरत्ययफलत्वमित्यर्थः[7] । तदेवं चतुष्टयीं कर्मजातिमुक्त्वा कतमा कस्येत्यवधारयति—तत्राशुक्लमिति ॥ ७ ॥

कर्माशयं विविच्य क्लेशाशयगतिमाह—ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् । यज्जातीयस्य पुण्यजातीयस्यापुण्यजातीयस्य वा कर्मणो यो विपाको दिव्यो वा नारको वा जात्यायुर्भोगस्तस्य विपाकस्यानुगुणाः । ता एवाऽऽह—

---

१ क. ग. ङ. च. ज. °तुष्पात्खल्वि° । २ ख. °यव° । ३ ग. घ. ङ. °यतत्वा° । ४ ज. झ. कर्म° । ५ ख. °त् । सं° । ६ ज. °रवद्यफ° । ७ ज. °रवद्यफ° ।

तत इति त्रिविधात्कर्मणः, तद्विपाकानुगुणानामेवेति यज्जातीयस्य कर्मणो यो विपाकस्तस्यानुगुणा या वासनाः कर्मविपाकमनुशेरते तासामेवाभिव्यक्तिः । न हि दैवं कर्म विपच्यमानं नारकतिर्यङ्मनुष्यवासनाभिव्यक्तिनिमित्तं संभवति । किंतु दैवानुगुणा एवास्य वासना व्यज्यन्ते । नारकतिर्यङ्मनुष्येषु चैवं समानश्चर्चः ॥ ८ ॥

**जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥**

वृषदंशविपाकोदयः स्वव्यञ्जकाञ्जनाभिव्यक्तः । स यदि जातिशतेन वा दूरदेशतया वा कल्पशतेन वा व्यवहितः पुनश्च स्वव्यञ्जकाञ्जन एवोदियाद्द्रागित्येवं पूर्वानुभूतवृषदंशविपाकाभिसंस्कृता वासना उपादाय व्यज्येत । कस्मात् । यतो व्यवहितानामप्यासां सदृशं कर्माभिव्यञ्जकं निमित्तीभूतमित्यानन्तर्यमेव । कुतश्च, स्मृतिसंस्कारयोरेकरूपत्वात् । यथाऽनुभ-

---

या वासनाः कर्मविपाकमनुशेरतेऽनुकुर्वन्ति । दिव्यभोगजनिता हि दिव्यकर्मविपकानुगुणा वासनाः । नहि मनुष्यभोगवासनाभिव्यक्तौ दिव्यकर्मफलोपभोगसंभवः । तस्मात्स्वविपाकानुगुणा एव वासनाः कर्माभिव्यञ्जनीया इति भाष्यार्थः ॥ ८ ॥

स्यादेतत् । मनुष्यस्य प्रायणानन्तरमधिगतमार्जारभावस्यानन्तरतया मनुष्यवासनाया एवाभिव्यक्त्या भवितव्यम् । न खल्वस्ति संभवो यदनन्तरदिवसानुभूतं न स्मर्यते व्यवहितदिवसानुभूतं च स्मर्यत इत्यत आह—**जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्** । भवतु वृषदंशवासनाया जात्यादिव्यवधिस्तथाऽपि तस्याः फलत आनन्तर्यं वृषदंशविपाकेन कर्मणा तस्या एव स्वविपाकानुगुणाया अभिव्यक्तौ तत्स्मरणसमुत्पादादित्याह—**वृषदंशविपाकोदय** इति । उदेत्यस्मादित्युदयः कर्माशयः । पुनश्च स्वव्यञ्जकाञ्जन एवोदियात्, अभिव्यज्येत विपाकारम्भाभिमुखः क्रियेतेत्यर्थः । अभिसंस्कारक्रिया उपादाय गृहीत्वा व्यज्येत । यदि व्यज्येत स्वविपाकानुगुणा एव वासना गृहीत्वा व्यज्येतेत्यर्थः । आनन्तर्यमेव फलतः कारणद्वारकमुपपाद्य कार्यद्वारकमुपपादयति—**कुतश्च स्मृतीति** । एकरूपता सादृश्यम् । तदेवाऽऽह—**यथेति** । नन्वनुभवसरूपाश्चेत्संस्कारास्तथा सत्यनुभवा विशरारव इत्येतेऽपि विशरारवः कथं चिरभाविनेऽनुभवाय कल्पेरन्नि-

---

१ ङ. °यात्तदा द्रा° । २ ग. ङ. °त्येव पू° । ३ ज. °तनृषदंशभा° । ४ क. ख. झ. °वतया सा° ।

वास्तथा संस्काराः। ते च कर्मवासनानुरूपाः। यथा च वासनास्तथा स्मृतिरिति जातिदेशकालव्यवहितेभ्यः संस्कारेभ्यः स्मृतिः। स्मृतेश्च पुनः संस्कारा इत्येवमेते स्मृतिसंस्काराः कर्माशयवृत्तिलाभवशाद्व्यज्यन्ते। अतश्च व्यवहितानामपि निमित्तनैमित्तिकभावानुच्छेदादानन्तर्यमेव सिद्धमिति ॥ ९ ॥

## तासामनादित्वं चाऽऽशिषो नित्यत्वात् ॥ १० ॥

तासां वासनानामाशिषो नित्यत्वादनादित्वम्। येयमात्माशीर्मा न भूवं भूयासमिति सर्वस्य दृश्यते सा न स्वाभाविकी। कस्मात्। जातमात्रस्य जन्तोरननुभूतमरणधर्मकस्य द्वेषदुःखानुस्मृतिनिमित्तो मरणत्रासः कथं भवेत्। न च स्वाभाविकं वस्तु निमित्तमुपादत्ते।

---

त्यत आह—ते च कर्मवासनानुरूपाः। यथाऽपूर्वं स्थायि क्षणिककर्मनिमित्तमप्येवं क्षणिकानुभवनिमित्तोऽपि संस्कारः स्थायी। किंचिद्भेदाधिष्ठानं च सारूप्यम्। अन्यथाऽभेदे तत्त्वेन सादृश्यानुपपत्तेरित्यर्थः। सुगममन्यत् ॥ ९ ॥

स्यादेतत्। व्यज्येरन्पूर्वपूर्वतरजन्माभिसंस्कृता वासनाः। यदि पूर्वपूर्वतरजन्मसद्भावे प्रमाणं स्यात्तदेव तु नास्ति। न च जातमात्रस्य जन्तोर्हर्षशोकदर्शनमात्रं प्रमाणं भवितुमर्हति, पद्मादिसंकोचविकासवत्स्वाभाविकत्वेन तदुपपत्तेरित्यत आह—**तासामनादित्वं चाऽऽशिषो नित्यत्वात्**। तासां वासनानामनादित्वं च न केवलमानन्तर्यमिति चार्थः। आशिषो नित्यत्वात्। आत्माशिषो वासनानामनादित्वे नित्यत्वाव्यभिचारादिति। ननु स्वाभाविकत्वेनाप्युपपत्तेरसिद्धमाशिषो नित्यत्वमित्यत आह—**येयमिति**। नास्तिकः पृच्छति—**कस्मात्**। उत्तरं—**जातमात्रस्य जन्तोरिति**। अत एवैतस्मिञ्जन्मन्यननुभूतमरणधर्मकस्य मरणमेव धर्मः सोऽननुभूतो येन स तथोक्तस्तस्य मातुरङ्कात्प्रस्खलतः कम्पमानस्य माङ्गल्यचक्रादिलाञ्छितं तदुरःसूत्रमतिगाढं पाणिग्राहमवलम्बमानस्य बालकस्य कम्पभेदानुमिता द्वेषानुषक्ते दुःखे या स्मृतिस्तन्निमित्तो मरणत्रासः कथं भवेदिति। ननूक्तं स्वभावादित्यत आह—**न च स्वाभाविकं वस्तु निमित्तमुपादत्ते** गृह्णाति स्वोत्पत्तौ। एतदुक्तं भवति—बालकस्येदृशो दृश्यमानः कम्पो भयनिबन्धन ईदृशकम्पत्वादस्मदादिकम्पवत्। बालकस्य भयं द्वेषदुःखस्मृ-

---

१ क. ख. च. ज. °नारू°। २ ग. घ. ङ. °त्येते। ३ क. च. °ति। वासनाः संस्कारा आशया इत्यर्थः ॥ ९ ॥ ४ ख. झ. °जन्मभिः सं°। ५ झ. °दित्वं नि°।

तस्मादनादिवासनानुविद्धमिदं चित्तं निमित्तवशात्काश्चिदेव वासनाः प्रतिलभ्य पुरुषस्य भोगायोपावर्तत इति ।

घटप्रासादप्रदीपकल्पं संकोचविकासि चित्तं शरीरपरिमाणाकारमात्रमित्यपरे प्रतिपन्नाः । तथा चान्तराभावः संसारश्च युक्त इति ।

---

तिनिमित्तं भयत्वादस्मदादिभयवत् । आगामिप्रत्यवायोत्प्रेक्षालक्षणं च भयं न दुःखस्मृतिमात्राद्भवति, अपि तु यतो[1] बिभेति तस्य[2] प्रत्यवायहेतुभावमनुमाय संप्रत्यपि प्रत्यवायं भयं च विदध्यादिति शङ्कते । तस्मा[3]द्यज्जातीयादनुभूतचराद्द्वेषानुषक्तं दुःखमु[4]पपादितं तस्य स्मरणात्तज्जातीयस्यानुभूयमानस्य तद्दुःखहेतुत्वमनुमाय ततो बिभेति । न च बालकेनास्मिञ्जन्मनि स्खलनस्यान्यत्र दुःखहेतुत्वमवगतम् । न च तादृशं दुःखमुपलब्धम् । तस्मात्प्राग्भवीयोऽनुभवः पारिशिष्यते । तच्चैतदेवं प्रयोगमारोहति—जातमात्रस्य बालस्य स्मृतिः पूर्वानुभवनिबन्धना स्मृतित्वादस्मदादिस्मृतिवदिति । न च पद्मसंकोचविकासावपि स्वाभाविकौ । न हि स्वाभाविकं कारणान्तरमपेक्षते, वह्नेरौष्ण्यं प्रत्यपि कारणान्तरापेक्षाप्रसङ्गात् । तस्मादागन्तुकमरुणकरसंपर्कमात्रमेव कमलिनीविकासकारणम् । संकोचकारणं च संस्कारः स्थितिस्थापक इति । एवं स्मिताद्यनुमितहर्षादयोऽपि प्राचि भवे हेतवो वेदितव्याः । तदास्तां तावत्प्रकृतमुपसंहरति—तस्मादिति । निमित्तं लब्धविपाककालं कर्म । प्रतिलम्भोऽभिव्यक्तिः ।

प्रसङ्गतश्चित्तपरिमाणविप्रतिपत्तिं निराचिकीर्षुर्वि[5]प्रतिपत्तिमाह—घटप्रासादेति । देहप्रदेशवर्तिकार्यदर्शनाद्देहाद्बहिः सद्भावे चित्तस्य न प्रमाणमस्ति । न चैतदणुपरिमाणं दीर्घशष्कुलीभक्षणादावपर्यायेण ज्ञानपञ्चकानुत्पादप्रसङ्गात् । न चाननुभूयमानक्रमकल्पनायां प्रमाणमस्ति । न चैकमणु मनो नानादेशैरिन्द्रियैरपर्यायेण संबन्धुमर्हति । तत्पारिशेष्यात्कायपरिमाणं चित्तं घटप्रासादवर्तिप्रदीपवत् । संकोचविकासौ पुत्तिकाहस्तिदेहयोरस्योत्पत्स्येते । शरीरपरिमाणमेवाऽऽकारः परिमाणं यस्येत्यपरे प्रतिपन्नाः । नन्वेवं कथमस्य क्षेत्रबीजसंयोगः । न खल्वेतदनाश्रयं मृतशरीरान्मातृपितृदेहवर्तिनी लोहितरेतसी प्राप्नोति । परतन्त्रत्वात् । न हि स्थाण्वादिष्वगच्छत्सु तच्छाया गच्छति । न चागच्छति पटे तदाश्रयं चित्रं गच्छति । तथा च न संसारः स्यादित्यत आह—तथा चान्तराभा[6]वः संसारश्च युक्त इति । तथा च शरीरप-

---

१ क. °तो यतो बि° । २ क. °स्य तस्य प्र° । ३ क. °स्मातज्जा° । ४ ज. °मुदपादि तस्मात्स्मर° । ५ ख. ज. °रिणामवि° । ६ क. झ. °वः । अत एव सं° ।

**वृत्तिरेवास्य विभुनश्चित्तस्य संकोचविकासिनीत्याचार्यः । तच्च धर्मादिनिमित्तापेक्षम् । निमित्तं च द्विविधम्—बाह्यमाध्यात्मिकं च । शरीरादिसाधनापेक्षं बाह्यं स्तुतिदानाभिवादनादि, चित्तमात्राधीनं श्रद्धाद्याध्यात्मिकम् । तथा चोक्तम्—ये चैते**

---

रिमाणत्वे देहान्तरप्राप्तये पूर्वदेहत्यागो देहान्तरप्राप्तिश्चान्तराऽस्याऽऽतिवाहिकशरीरसंयोगाद्भवतस्तेन खल्वयं देहान्तरे संचरेत् । तथा च पुराणम्—

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥ ( भार० ३।२९७ । १७ ) इति । सोऽयमन्तराभावः । अत एव संसारश्च युक्त इति ।

तदेतदमृष्यमाणः स्वमतमाह—**वृत्तिरेवास्य विभुनश्चित्तस्य संकोचविकासिनीत्याचार्यः** स्वयंभूः प्रतिपेदे । इदमत्राऽऽकूतं—यद्यनाश्रयं चित्तं न देहान्तरसंचारि कथमेतदातिवाहिकमाश्रयते, तत्रापि देहान्तरकल्पनायामनवस्था । न चास्य देहान्निष्कर्षः सातिवाहिकस्य संभवति । निष्कृष्टस्य चेतसस्तत्संबन्धात् । अस्तु तर्हि सूक्ष्मशरीरमेवाऽऽसर्गादा च महाप्रलयान्नियतं चित्तानामधिष्ठानं षाट्कौशिकशरीरमध्यवर्ति । तेन हि चित्तमा सत्यलोकादा चावीचेस्तत्र तत्र शरीरे संचरति । निष्कर्षश्चास्योपपन्नः षाट्कौशिकात्कायात् । तत्र हि तदन्तराभावस्तस्य नियतत्वात् । न चास्यापि सद्भावे प्रमाणमस्ति । न खल्वेतदध्यक्षगोचरः । न च संसारोऽस्यानुमानम् । आचार्यमतेनाप्युपपत्तेः । आगमस्तु पुरुषस्य निष्कर्षमाह । न च चित्तं वा सूक्ष्मशरीरं वा पुरुषः किंतु चितिशक्तिरप्रतिसंक्रमा । न चास्या निष्कर्षः संभवतीत्यौपचारिको व्याख्येयः । तथा च चितेश्चित्तस्य च तत्र तत्र वृत्त्यभाव एव निष्कर्षार्थः । यच्च स्मृतीतिहासपुराणेषु मरणानन्तरं प्रेतशरीरप्राप्तिस्तद्विमोकश्च सपिण्डीकरणादिभिरित्युक्तं तदनुजानीमः । आतिवाहिकत्वं तस्य न मृष्यामहे । न चात्रास्ति कश्चिदागमः । लब्धशरीर एव च यमपुरुषैरपि पाशबद्धो नीयते । न त्वातिवाहिकशरीरः । तस्मादाहंकारिकत्वाच्चेतसोऽहंकारस्य च गगनमण्डलवत्त्रैलोक्यव्यापित्वाद्विभुत्वं मनसः । एवं चेदस्य वृत्तिरपि विभ्वीति सर्वज्ञतापत्तिरित्यत उक्तं **वृत्तिरेवास्येति** ।

**स्यादेतत्** । चित्तमात्राधीनाया वृत्तेः संकोचविकासौ कुतः कादाचित्काविंत्यत आह—**तच्च** चित्तं धर्मादिनिमित्तापेक्षम् । **वृत्तौ** निमित्तं विभजते—**निमित्तं चेति** । आदिग्रहणेनेन्द्रियधनादयो **गृह्यन्ते** । श्रद्धादीत्यत्रापि वीर्यस्मृत्यादयो गृह्यन्ते । आन्तरत्वे संमतिमाचार्याणामाह—**तथा चोक्तम्** ।

---

१ ग. घ. ङ. च. ज. °भुनः सं° । २ ख. ज. झ. °ष्कर्ष आति° ।

मैत्र्यादयो ध्यायिनां विहारास्ते बाह्यसाधननिरनुग्रहात्मानः प्रकृष्टं धर्ममभिनिर्वर्तयन्ति । तयोर्मानसं बलीयः । कथं, ज्ञानवैराग्ये केनातिशय्येते, दण्डकारण्यं च चित्तबलव्यतिरेकेण शारीरेण कर्मणा शून्यं कः कर्तुमुत्सहेत । समुद्रमगस्त्यवद्वा पिबेत् ॥१०॥

**हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ ११ ॥**

हेतुर्धर्मात्सुखमधर्माद्दुःखं, सुखाद्रागो दुःखाद्द्वेषस्ततश्च प्रयत्नस्तेन मनसा वाचा कायेन वा परिस्पन्दमानः परमनुगृह्णात्युपहन्ति वा ततः पुनर्धर्माधर्मौ सुखदुःखे रागद्वेषाविति प्रवृत्तमिदं षडरं संसारचक्रम् । अस्य च प्रतिक्षणमावर्तमानस्याविद्या नेत्री मूलं सर्वक्लेशानामित्येष हेतुः । फलं तु यमाश्रित्य यस्य प्रत्युत्पन्नता धर्मादेः, न ह्यपूर्वोपजनः । मनस्तु साधिकारमाश्रयो वासनानाम् । न ह्यवसिताधिकारे मनसि निराश्रया वासनाः स्थातुमुत्सहन्ते । यदभिमुखीभूतं वस्तु यां वासनां व्यनक्ति तस्यास्तदालम्बनम् । एवं हेतुफलाश्रयालम्बनैरेतैः संगृहीताः सर्वा वासनाः । एषामभावे तत्संश्रयाणामपि वासनानामभावः ॥ ११ ॥

---

विहारो व्यापारः । प्रकृष्टं शुक्लं, तयोर्बाह्याभ्यन्तरयोर्मध्ये । ज्ञानवैराग्ये तज्जनितो (तौ) धर्मः(र्मौ) केन बाह्यसाध्येन धर्मेणातिश[1]य्येते अभिभू[2]येते । ज्ञानवैराग्यजावेव धर्मौ तमभिभवतः, बीजभावादपनयत इत्यर्थः । अत्रैव सुप्रसिद्धमुदाहरणमाह—दण्डकारण्यमिति ॥ १० ॥

अथैताश्चित्तवृत्तयो वासनाश्चानादयश्चेत्कथमासामुच्छेदः । न खलु चितिशक्तिरनादिरुच्छिद्यत इत्यत आह—हेतुफलाश्रयालम्बनैः **संगृहीतत्वादेषामभावे तदभावः** । अनादेरपि समुच्छेदो दृष्टः । तद्यथाऽनागतत्वस्येति सव्यभिचारत्वादसाधनम् । चितिशक्तिस्तु विनाशकारणाभावान्न विनश्यति, न त्वनादित्वात् । उक्तं च वासनानामनादीनामपि समुच्छेदे कारणं सूत्रेणेति । अनुग्रहोपघातावपि धर्माधर्मादिनिमित्तमुपलक्षयतः । तेन सुरापानादयोऽपि संगृहीता भवन्ति । नेत्री नायिका । अत्रैव हेतुमाह—**मूलमिति** । प्रत्युत्पन्नता वर्तमानता न तु धर्मस्वरूपोत्पादः । अत्रैव हेतुमाह—**न हीति** । यदभिमुखीभूतं वस्तु कामिनीसंपर्कादि । व्यापकाभावे व्याप्यस्याभाव इति सूत्रार्थः ॥ ११ ॥

---

१ ख. °शय्यत । २ ख. °भूयते ।

नास्त्यसतः संभवः, न चास्ति सतो विनाश इति द्रव्यत्वेन संभवन्त्यः कथं निवर्तिष्यन्ते वासना इति—

**अतीतानागतं स्वरूपतोऽस्त्यध्वभेदा-
द्धर्माणाम् ॥ १२ ॥**

भविष्यद्व्यक्तिकमनागतमनुभूतव्यक्तिकमतीतं स्वव्यापारो-पारूढं वर्तमानं, त्रयं चैतद्वस्तु ज्ञानस्य ज्ञेयम् । यदि चैतत्स्व-रूपतो नाभविष्यन्नेदं निर्विषयं ज्ञानमुदपत्स्यत । तस्मादती-तानागतं स्वरूपतोऽस्तीति । किंच भोगभोगीयस्य वाऽपवर्ग-भागीयस्य वा कर्मणः फलमुत्पित्सु यदि निरुपाख्यमिति तदु-द्देशेन तेन निमित्तेन कुशलानुष्ठानं न युज्येत । सतश्च फलस्य निमित्तं वर्तमानीकरणे समर्थं नापूर्वोपजनने । सिद्धं निमित्तं नैमित्तिकस्य विशेषानुग्रहणं कुरुते नापूर्वमुत्पादयतीति ।

---

उत्तरसूत्रमवतारयितुं शङ्कते—नास्तीति । असत इति तु संपातायातं निदर्शनाय वा । अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् । नासतामुत्पादो न सतां विनाशः किंतु सतामेव धर्माणामध्वभेदपरिणाम एवोदयव्ययाविति सूत्रार्थः । अनु-भूता प्राप्ता येन व्यक्तिस्तत्तथा । संप्रति व्यक्तिर्नास्तीति यावत् । इतश्च त्रैकाल्येऽपि धर्माः सन्तीत्याह—यदि चेति । न ह्यसज्ज्ञानविषयः संभवतीति निरुपाख्यत्वाद्विष-यावभासं हि विज्ञानं नासति विषये भवति । त्रैकाल्यविषयं च विज्ञानं योगिनामस्म-दादीनां च विज्ञानमसति विषये नोत्पन्नं स्यात् । उत्पद्यते च । तस्मादतीतानागते सामान्यरूपेण समनुगते स्त इति । एवमनुभवतो ज्ञानं विषयसत्त्वे हेतुरुक्तम् । उद्दे-श्यत्वादप्यनागतस्य विषयत्वेन सत्त्वमेवेत्याह—किंच भोगभागीयस्येति । कुशलो निपुणः । अनुष्ठेयेऽपि च यद्यन्निमित्तं तत्सर्वं नैमित्तिके सत्येव विशेषमाधत्ते । यथा काण्डलाववेदाध्यायादयः । न खल्वेते काण्डलावादयोऽसन्तमुत्पादयन्ति । सत एव तु तत्प्राप्तिविकारं कुर्वन्ति । एवं कुलालादयोऽपि सत एव घटस्य वर्तमानीभावहेतव इत्याह—सतश्चेति ।

यदि तु वर्तमानत्वाभावादतीतानागतयोरसत्त्वं हन्त भो वर्तमानस्याप्यभावोऽती-तानागतत्वाभावात् । अध्वविशिष्टतया तु सत्त्वं त्रयाणामप्यविशिष्टमित्यभिप्राये-

---

१ क. ख. °ग्रहं कु° । २ ग. घ. ङ. °यति । ३ ख. ञ. °मानभा° । ४ ख. ञ. °त् । स्वार्थवि° । ५ क. °ध्वधर्म्यवि° ।

धर्मी चानेकधर्मस्वभावस्तस्य चाध्वभेदेन धर्माः प्रत्यवस्थिताः । न च यथा वर्तमानं व्यक्तिविशेषापन्नं द्रव्यतोऽस्त्येवमतीतमनागतं च[१] । कथं तर्हि, स्वेनैव व्यङ्ग्येन स्वरूपेणानागतमस्ति । स्वेन चानुभूतव्यक्तिकेन स्वरूपेणातीतमिति । वर्तमानस्यैवाध्वनः स्वरूपव्यक्तिरिति न सा भवत्यतीतानागतयोरध्वनोः । एकस्य चाध्वनः समये द्वावध्वानौ धर्मिसमन्वागतौ भवत एवेति नाभूत्वा भावस्त्रयाणामध्वनामिति ॥ १२ ॥

## ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥

ते खल्वमी त्र्यध्वानो धर्मा वर्तमाना व्यक्तात्मानोऽतीतानागताः सूक्ष्मात्मानः[२] षडविशेषरूपाः[३] । सर्वमिदं गुणानां संनिवेशविशेषमात्रमिति परमार्थतो गुणात्मानः । तथा च शास्त्रानुशासनम्—

गुणानां परमं रूपं न दृष्टिपथमृच्छति ।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम् ॥ इति ॥ १३ ॥

---

णाऽऽह—धर्मी चेति । प्रत्येकमवस्थानं प्रत्यवस्थितिरिति । द्रव्यत इति । द्रव्ये धर्मिणि सार्वविभक्तिकस्तसिः । यद्यतीतानागतावतीतानागतत्वे न स्तस्तर्हि वर्तमानसमये तत्त्वाभावान्न स्यातामित्यत आह—एकस्य चेति । प्रकृतमुपसंहरति—इति नाभूत्वा भाव इति ॥ १२ ॥

स्यादेतत् । अयं[४] तु नानाप्रकारो धर्मिधर्मावस्थापरिणामरूपो[५] विश्वभेदप्रपञ्चो न प्रधानादेकस्माद्भवितुमर्हति । न ह्यविलक्षणात्कारणात्कार्यभेदसंभव इत्यत आह—ते व्यक्तसूक्ष्मा गुणात्मानः । ते त्र्यध्वानो धर्मा व्यक्ताश्च सूक्ष्माश्च गुणात्मानो न त्रैगुण्यातिरिक्तमेषामस्ति कारणम् । वैचित्र्यं तु तदाहितानादिक्लेशवासनानुगताद्वैचित्र्यात् । यथोक्तं वायुपुराणे—वैश्वरूप्यात्प्रधानस्य परिणामोऽयमद्भुतः ॥ [५।३।१२०] इति । व्यक्तानां पृथिव्यादीनामेकादशेन्द्रियाणां च वर्तमानानामतीतानागतत्वं[६] षडविशेषा[७]पर्यायीणां भवन्ति । संप्रति विश्वस्य नित्यानित्यरूपे विभजन्नित्यरूपमाह—सर्वमिदमिति । दृश्यमानम् संनिवेशः संस्थानभेदवान्परिणाम इत्यर्थः । अत्रैव षष्टितन्त्रशा-

---

१ ग. वा । २ ग. ङ. °नः । स° । ३ ज. षड्विशे° ।४ ज. °यं त्वन्तर्गणिकप्र° । ५ क. धर्मधर्म्येव° । ६ क. °नाती° । ७ ज. झ. षड्वि° ।

यदा तु सर्वे गुणाः कथमेकः शब्द एकमिन्द्रियमिति—

परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥

प्रख्याक्रियास्थितिशीलानां गुणानां ग्रहणात्मकानां करण-भावेनैकः परिणामः श्रोत्रमिन्द्रियं, ग्राह्यात्मकानां शब्दतन्मात्र-भावेनैकः परिणामः शब्दो विषय इति, शब्दादीनां मूर्तिसमान-जातीयानामेकः परिणामः पृथिवीपरमाणुस्तन्मात्रावयवस्तेषां चैकः परिणामः पृथिवी गौर्वृक्षः पर्वत इत्येवमादिर्भूतान्तरेष्वपि स्नेहौष्ण्यप्रणामित्वावकाशदानान्युपादाय सामान्यमेकविकारा-रम्भः समाधेयः ।

नास्त्यर्थो विज्ञानविसहचरः, अस्ति तु ज्ञानमर्थविसहचरं

---

त्रस्यानुशिष्टिः । मायेव न तु माया । सुतुच्छकं विनाशि । यथा हि मायाऽह्नायैवा-न्यथा भवत्येवं विकारा अप्याविर्भावतिरोभावधर्माणः प्रतिक्षणमन्यथा । प्रकृतिर्नि-त्यतया मायाविधर्मिणी परमार्थेति ॥ १३ ॥

भवतु त्रैगुण्यस्येत्थं परिणामवैचित्र्यमेकस्तु परिणामः पृथिवीति वा तोयमिति वा कुत आत्मन एकत्वविरोधादित्याशङ्क्य सूत्रमवतारयति–**यदा तु सर्वे गुणा इति** । **परिणामैकत्वाद्वस्तुतत्त्वम्** । बहूनामप्येकः परिणामो दृष्टः । तद्यथा–गवाश्वमहिषमा-तङ्गानां रुमानिक्षिप्तानामेको लवणत्वजातीयलक्षणः परिणामो वर्तितैलानलानां च प्रदीप इति । एवं बहुत्वेऽपि गुणानां परिणामैकत्वं, ततस्तन्मात्रभूतभौतिकानां प्रत्येकं तत्त्वमे-कत्वम् । ग्रहणात्मकानां सत्त्वप्रधानतया प्रकाशात्मनामहंकारावान्तरकार्याणां करणभावे-नैकः परिणामः श्रोत्रमिन्द्रियम् । तेषामेव गुणानां तमःप्रधानतया जडत्वेन ग्राह्यात्मकानां शब्दतन्मात्रभावेनैकः परिणामः शब्दो विषयः । शब्द इति शब्दतन्मात्रम् । विषय इति जडत्वमाह न तु तन्मात्रस्य श्रोत्रविषयत्वसंभव इति । शेषं सुगमम् ।

अथ विज्ञानवादिनं वैनाशिकमुत्थापयति—**नास्त्यर्थो विज्ञानविसहचर इति** । यदि हि भूतभौतिकानि विज्ञानमात्राद्भिन्नानि भवेयुस्ततस्तदुत्पत्तिकारणमीदृशं प्रधानं कल्प्येत, न तु तानि विज्ञानातिरिक्तानि सन्ति परमार्थतः । तत्कथं प्रधानकल्पनं कथं च ग्रहणानामिन्द्रियाणामहंकारविकाराणां कल्पनेति । तथा हि–जडस्यार्थस्य स्वयमप्र-काशत्वान्नास्त्यर्थो विज्ञानविसहचरः । साहचर्यं संबन्धः । तदभावो विसहचरत्वम् ।

---

१ ग. घ. ङ. च. ज. °ब्दभा° । २ ख. घ. ङ. च. ज. °दिभूता° । ३ ख. ज. झ. °धर्मेण प° । ४ ज. कुतो नानात्मान ।

**स्वप्नादौ कल्पितमित्यनया दिशा ये वस्तुस्वरूपमपह्नुवते ज्ञानपरिकल्पनामात्रं वस्तु स्वप्नविषयोपमं न परमार्थतोऽस्तीति य आहुस्ते तथेति प्रत्युपस्थितमिदं स्वमाहात्म्येन वस्तु कथमप्रमाणात्मकेन विकल्पज्ञानबलेन वस्तुस्वरूपमुत्सृज्य[1] तदेवापलपन्तः श्रद्धेयवचनाः स्युः ॥ १४ ॥**

---

विरमावार्थः । विज्ञानासंबन्धो नास्ति[2] व्यवहारयोग्य इत्यर्थः । अस्ति तु ज्ञानमर्थविसहचरं तस्य स्वयंप्रकाशत्वेन स्वगोचरास्तिताव्यवहारे कर्तव्ये जडमर्थं प्रत्यपेक्षाभावात् । तदनेन वेद्यत्वसहोपलम्भानियमौ सूचितौ विज्ञानवादिना । तौ चैवं प्रयोगमारोहतः—यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते । यथा ज्ञानस्याऽऽत्मा । वेद्यन्ते च भूतभौतिकानीति विरुद्धव्याप्तोपलब्धिर्निषेध्यभेदाविरुद्धेनाभेदेन व्याप्तं वेद्यत्वं दृश्यमानं[3] स्वव्यापकमभेदमुपस्थापयत्तद्विरुद्धं[4] भेदं प्रतिक्षिपतीति । तथा यद्येन नियतसहोपलम्भं तत्ततो न भिद्यते । यथैकस्माच्चन्द्राद्द्वितीयश्चन्द्रः । नियतसहोपलम्भश्चार्थो ज्ञानेनेति व्यापकविरुद्धोपलब्धिः । निषेध्यभेदव्यापकानियमाविरुद्धो[5] नियमोऽनियमं निवर्तयंस्तद्व्याप्तं भेदं प्रतिक्षिपतीति । स्यादेतत् । अर्थश्चेन्न भिन्नो ज्ञानात्कथं भिन्नवत्प्रतिभासत इत्यत आह—**कल्पितमिति** । यथाऽऽहुर्वैनाशिकाः—

> सहोपलम्भानियमादभेदो नीलतद्धियोः ।
> भेदश्च भ्रान्तिविज्ञानैर्दृश्य इन्दाविवाद्वये ॥ इति ।

कल्पितत्वं विशदयति—**ज्ञानपरिकल्पनेति** । निराकरोति—**न इति** । ते कथं श्रद्धेयवचनाः स्युरिति संबन्धः । प्रतिज्ञानमुपस्थितं प्रत्युपस्थितम् । कथम्—**तथेति** । यथा यथाऽवभासत इदंकारास्पदत्वेन तथा तथा स्वयमुपस्थितं न तु कल्पनोपकल्पितं विज्ञानविषयतापन्नम् । स्वमाहात्म्येनेति[6] विज्ञानकारणत्वमर्थस्य दर्शयति । यस्मादर्थेन स्वकीयया ग्राह्यशक्त्या विज्ञानमजनि तस्मादर्थस्य ग्राहकं तदेवंभूतं वस्तु कथमप्रमाणात्मकेन विकल्पविज्ञानबलेन विकल्पस्याप्रामाणिकत्वात्तद्बलस्यापि तदात्मनोऽप्रमाणात्मकत्वं, तेन वस्तुस्वरूपमुत्सृज्योपप्लुतं कृत्वा । उपगृह्येति[7] क्वचित्पाठः । तत्रापि स एवार्थः । **तदेवापलपन्तः श्रद्धातव्यवचनाः स्युरिति** । इदमत्राऽऽकूतम्—सहोपलम्भनियमश्च वेद्यत्वं च हेतू संदिग्धव्यतिरेकतया नैकान्तिकौ । तथा हि—ज्ञानाकारस्य भूतभौतिकादेर्यदेतद्बाह्यत्वं स्थूलत्वं च भासेते न ते ज्ञाने संभवतः । तथा हि—नानादेशव्यापिता स्थौल्यं विच्छिन्नदेशता च बाह्यत्वम् । न चैकविज्ञानस्य नानादेश-

---

१ च. °मुपभृज्य° । ज. °मुपगृह्य त° । २ ख. ज. नास्तीति । ३ झ. °माने स्व° । ४ ज. मुत्थापयंस्तद्वि° । ५ क. °पकानि° । ६ क झ. °ति कारणत्वं विज्ञानं प्रत्यर्थं° । ख. °ति कारणत्वाविज्ञानं प्रत्यर्थं° । ७ ज. °पगृह्ये°

कुतश्चैतदन्याय्यम्––

**वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः ॥ १५ ॥**

---

व्यापिता विच्छिन्नदेशता चोपपद्यते । तद्देशत्वातद्देशत्वलक्षणविरुद्धधर्मसंसर्गस्यैकत्रासंभवात्संभवे वा त्रैलोक्यस्यैकत्वप्रसङ्गात् । अत एवास्तु विज्ञानभेद इति चेत् । हन्त भोः परमसूक्ष्मगोचराणां प्रत्ययानां परस्परवार्तानभिज्ञानां स्वगोचरमात्रजागरूकाणां कुतस्त्योऽयं स्थूलावभासः । न च विकल्पगोचरोऽभिलापः संसर्गाभावाद्विशदप्रतिभासत्वाच्च । न च स्थूलमालोचितं यतस्तदुपाधिकस्य विशदता भवेत्तत्पृष्ठभाविनः । न चाविकल्पवद्विकल्पोऽपि स्वाकारमात्रगोचरस्तस्य चास्थूलत्वान्न स्थूलगोचरो भवितुमर्हति । तस्माद्बाह्ये च प्रत्यये स्थूलस्य बाह्यस्य चासंभवादलीकमेतदास्थातव्यम् । न चालीकं विज्ञानादभिन्नं विज्ञानस्य तद्वत्तुच्छत्वप्रसङ्गात् । तथा च वेद्यत्वस्याभेदव्याप्यत्वाभावात्कुतो भेदप्रतिपक्षत्वम् । सहोपलम्भानियमश्च सदसतोरिव विज्ञानस्थौल्ययोः सतोरपि स्वभावाद्वा कुतश्चित्प्रतिबन्धाद्वोपपत्स्यते । तस्मादनैकान्तिकत्वादेतौ हेत्वाभासौ विकल्पमात्रमेव बाह्याभावे प्रसुवाते । न च प्रत्यक्षमाहात्म्यं विकल्पमात्रेणापोद्यते । तस्मात्साधूक्तं कथमप्रमाणात्मकेन विकल्पज्ञानबलेनेति । एतेन प्रत्ययत्वमपि स्वप्नादिप्रत्ययदृष्टान्तेन निरालम्बनत्वसाधनमपास्तम् । प्रमेयविकल्पस्त्ववयविव्यवस्थापनेन प्रत्युक्तः । विस्तरस्तु न्यायकणिकायामनुसरणीय इति तदिह कृतं विस्तरेणेति ॥ १४ ॥

तदेवमुत्सूत्रं भाष्यकृद्विज्ञानातिरिक्तस्थापने युक्तिमुक्त्वा सौत्रीं युक्तिमवतारयति– **कुतश्चैतदिति । वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः** । यन्नानात्वे यस्यैकत्वं तत्ततोऽत्यन्तं भिद्यते । यथा चैत्रस्य ज्ञानमेकं भिन्नेभ्यो देवदत्तविष्णुमित्रमैत्रप्रत्ययेभ्यो भिद्यते । ज्ञाननानात्वेऽपि चार्थो न भिद्यत इति भवति विज्ञानेभ्योऽन्यः । अभेदश्चार्थस्य ज्ञानभेदेऽपि प्रमातॄणां परस्परप्रतिसंधानादवसीयते । अस्ति हि रक्तद्विष्टविमूढमध्यस्थानामेकस्यां योषिति प्रतीयमानायां प्रतिसंधानं या त्वया दृश्यते सैव मयाऽपीति । तस्माद्वस्तुसाम्ये चित्तभेदाज्ज्ञानभेदात्तयोरर्थज्ञानयोर्विभक्तः पन्थाः स्वरूपभेदोपायः । सुखज्ञानं कान्तायां कान्तस्य, सपत्नीनां दुःखज्ञानम् । चैत्रस्य तु तामविन्दतो मूढज्ञानं विषादः । स्यादेतत् । य एकस्य चित्तेन परिकल्पितः

---

१ ज. च । २ क. °ष्टसविकल्पस्य भा° । ३ ज. °न्धान्नोप° ।

बहुचित्तालम्बनीभूतमेकं वस्तु साधारणं, तत्खलु नैकचित्तपरिकल्पितं नाप्यनेकचित्तपरिकल्पितं किंतु स्वप्रतिष्ठम्। कथं, वस्तुसाम्ये चित्तभेदात् । धर्मापेक्षं चित्तस्य वस्तुसाम्येऽपि सुखज्ञानं भवत्यधर्मापेक्षं तत एव दुःखज्ञानमविद्यापेक्षं तत एव मूढज्ञानं सम्यग्दर्शनापेक्षं तत एव माध्यस्थ्यज्ञानमिति । कस्य तच्चित्तेन परिकल्पितम् । न चान्यचित्तपरिकल्पितेनार्थेनान्यस्य चित्तोपरागो युक्तः । तस्माद्वस्तुज्ञानयोर्ग्राह्यग्रहणभेदभिन्नयोर्विभक्तः पन्थाः । नानयोः संकरगन्धोऽप्यस्तीति ।

सांख्यपक्षे पुनर्वस्तु त्रिगुणं चलं च गुणवृत्तमिति धर्मादिनिमित्तापेक्षं चित्तैरभिसंबध्यते । निमित्तानुरूपस्य च प्रत्ययस्योत्पद्यमानस्य तेन तेनाऽऽत्मना हेतुर्भवति । केचिदाहुः—ज्ञानसहभूरेवार्थो भोग्यत्वात्सुखादिवदिति । त एतया द्वारा साधारणत्वं बाधमानाः पूर्वोत्तरक्षणेषु वस्तुरूपमेवापह्नुवते ॥ १५ ॥

---

कामिनीलक्षणोऽर्थस्तेनैवान्येषामपि चित्तमुपरज्यत इति साधारणमुपपद्यत इत्यत आह—न चान्येति । तथा सत्येकस्मिन्नीलज्ञानवति सर्व एव नीलज्ञानवन्तः स्युरिति ।

नन्वर्थवादिनामप्येकोऽर्थः कथं सुखादिभेदभिन्नविज्ञानहेतुः । न ह्यविलक्षणात्कारणात्कार्यभेदो युक्त इत्यत आह—सांख्यपक्ष इति । एकस्यैव बाह्यस्य वस्तुनस्त्रैगुण्यपरिणामस्य त्रैरूप्यमुपपन्नम् । एवमपि सर्वेषामविशेषेण सुखदुःखमोहात्मकं विज्ञानं स्यादित्यत आह—धर्मादिनिमित्तापेक्षं रजःसहितं सत्त्वं धर्मापेक्षं सुखज्ञानं जनयति । सत्त्वमेव तु विगलितरजस्कं विद्यापेक्षं माध्यस्थ्यज्ञानमिति । ते च धर्मादयो न सर्वे सर्वत्र पुरुषे सन्ति किंतु कश्चित्कचिदित्युपपन्ना व्यवस्थेति । अत्र केचिदाहुः प्रावादुका ज्ञानसहभूरेवार्थो भोग्यत्वात्सुखादिवदिति । एतदुक्तं भवति—भवत्वर्थो ज्ञानाद्व्यतिरिक्तस्तथाऽप्यसौ जडत्वान्न ज्ञानमन्तरेण शक्यः प्रतिपत्तुम् । ज्ञानेन तु भासनीयः । तथा च ज्ञानसमय एवास्ति नान्यदा प्रमाणाभावादिति । तदेतदुत्सूत्रं तावद्दूषयति भाष्यकारः—त एतया द्वारेति । वस्तु खलु सर्वचित्तसाधारणमनेकक्षणपरम्परोह्यमानं परिणामात्मकमनुभूयते लौकिकपरीक्षकैः । तच्चेद्विज्ञानेन सह भवेन्नूनमेवंविधमेवं चेदिदमंशस्योपरि कोऽयमनुरोधो येन सोऽपि नापह्नूयेतेत्यर्थः ॥ १६ ॥

---

१ ग. घ. ङ. च. ज. °नावल° । २ क. °स्तुस्वरू° । ३ ज. एकैक° । ४ झ. °गत° । ५ ज. विज्ञानवद्दितं मा° ।

**न चैकचित्ततन्त्रं[1] वस्तु तदप्रमाणकं[2] तदा किं स्यात् ॥ १६ ॥**

एकचित्ततन्त्रं चेद्वस्तु स्यात्तदा चित्ते व्यग्रे निरुद्धे वाऽस्वरूपमेव तेनापरामृष्टमन्यस्याविषयीभूतमप्रमाणकमगृहीतस्वभावकं केनचित्तदानीं किं तत्स्यात् । संबध्यमानं च[3] पुनश्चित्तेन कुत उत्पद्येत । ये चास्यानुपस्थिता भागास्ते चास्य न स्युरेवं नास्ति पृष्ठमित्युदरमपि न गृह्येत । तस्मात्स्वतन्त्रोऽर्थः सर्वपुरुषसाधारणः स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्तन्ते । तयोः संबन्धादुपलब्धिः पुरुषस्य भोग इति ॥ १६ ॥

---

मा वा भूदिदमंशस्यापह्नवो ज्ञानसहभूरेवास्त्वर्थस्तत्राप्याह—**न चैकचित्ततन्त्रं[4] वस्तु तदप्रमाणकं[5] तदा किं स्यात्** । यद्धि घटग्राहि चित्तं तद्यदा पटद्रव्यव्यग्रतया न घटे वर्तते । यद्वा विवेकविषयमासीत्तदेव च निरोधं समापद्यते तदा घटज्ञानस्य वा विवेकज्ञानस्य वाऽभावाद्विवेको वा घटो वा ज्ञानभेदमात्रजीवनस्तन्नाशान्नष्ट एव स्यादित्याह—**एकचित्तेति** । किं तत्स्यान्न स्यादित्यर्थः । **संबध्यमानं च चित्तेन** तद्वस्तुविवेको वा घटो वा **कुत उत्पद्येत** । नियतकारणान्वयव्यतिरेकानुविधायिभावानि हि कार्याणि न स्वकारणमतिवर्त्य कारणान्तराद्भवितुमीशते । मा भूदकारणत्वे[6] तेषां कादाचित्कत्वव्याघातः । न च तज्ज्ञानकारणत्वमेव[7] तत्कारणत्वमिति[8] युक्तम् । आशामोदकस्य[9][10] मोदकस्य चोपयुज्यमानस्य रसवीर्यविपाकादिसाम्यप्रसङ्गात् । तस्मात्साधूक्तं **संबध्यमानं वा (च) पुनश्चित्तेनेति** । अपि च यो योऽर्वाग्भागः स सर्वो मध्यपरभागव्याप्तः । ज्ञानाधीने सद्भावे त्वस्याननुभूयमानत्वान्मध्यपरभागौ न स्त इति व्यापकाभावादर्वाग्भागोऽपि न स्यादित्यर्थाभावात्कुतो ज्ञानसहभूरर्थ इत्याह—**ये चास्येति** । अनुपस्थिता अज्ञाताः । उपसंहरति—**तस्मादिति** । सुगमं[11] शेषम् ॥ १६ ॥

---

१ क. ख. °न्त्रं चेद्वस्तु । २ क. ख. च. ज. तत्प्रमा° । ३ क. ख. घ. ङ. च. ज. वा । ४ क. °न्त्रं चेद्वस्तु । ५ क. तत्प्रमा° । ६ ज. °त्वेन ते° । ७ झ. °णमे° । ८ ख. °त्वमि° । ९ झ. °णामि° । १० क. °कस्योपार्जितमो° । ११ ख. ज. °गमम् ।

**तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १७ ॥**

अयस्कान्तमणिकल्पा विषया अयःसधर्मकं चित्तमभिसंबन्ध्योपरञ्जयन्ति । येन च विषयेणोपरक्तं चित्तं स विषयो ज्ञातस्ततोऽन्यः पुनरज्ञातः । वस्तुनो ज्ञाताज्ञातस्वरूपत्वात्परिणामि चित्तम् ॥ १७ ॥

यस्य तु तदेव चित्तं विषयस्तस्य—

**सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥ १८ ॥**

---

स्यादेतत् । अर्थश्चेत्स्वतन्त्रः, स च जडस्वभाव इति न कदाचित्प्रकाशेत । प्रकाशने वा जडत्वमप्यस्यापगतमिति भावोऽप्यपगच्छेत् । न जातु स्वभावमपहाय भावो वर्तितुमर्हति । न चेन्द्रियाद्याधेयो जडस्वभावस्यार्थस्य धर्मः प्रकाशत इति सांप्रतम् । अर्थधर्मत्वे नीलत्वादिवत्सर्वपुरुषसाधारण इत्येकः शास्त्रार्थ[1] इति सर्व एव विद्वांसः प्रसज्जेरन्न[2] जाल्मः कश्चिदस्ति । न चातीतानागतयोर्धर्मः प्रत्युत्पन्नो युक्तः । तस्मात्स्वतन्त्रोऽर्थ उपलम्भविषय इति मनोरथमात्रमेतदित्यत आह—**तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम्** । जडस्वभावोऽप्यर्थ इन्द्रियप्रणाडिकया चित्तमुपरञ्जयति । तदेवंभूतं चित्तदर्पणमुपसंक्रान्तप्रतिबिम्बा चितिशक्तिश्चित्तमर्थोपरक्तं चेतयमानार्थमनुभवति, न त्वर्थे किंचित्प्राकट्यादिकमाधत्ते । नाप्यसंबद्धा चित्तेन तत्प्रतिबिम्बसंक्रान्तेरुक्तत्वादिति । यद्यपि च सर्वगतत्वाच्चित्तस्य चेन्द्रियस्य चाऽऽहंकारिकस्य विषये नास्ति संबन्धस्तथाऽपि यत्र शरीरे वृत्तिमच्चित्तं तेन सह संबन्धो विषयाणामित्ययस्कान्तमणिकल्पा इत्युक्तम् । अयःसधर्मकं चित्तमिति । इन्द्रियप्रणाडिकयाऽभिसंबन्ध्योपरञ्जयन्ति । अत एव चित्तं परिणामीत्याह—**वस्तुन** इति ॥ १७ ॥

तदेवं चित्तव्यतिरेकिणमर्थमवस्थाप्य तेभ्यः परिणामिधर्मकेभ्यो व्यतिरिक्तमात्मानमादर्शयितुं तद्वैधर्म्यमपरिणामित्वमस्य वक्तुं पूरयित्वा सूत्रं पठति—**यस्य तु तदेव चित्तं विषयस्तस्य—सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात्** । क्षिप्तमूढविक्षिप्तैकाग्रतावस्थितं चित्तमा निरोधात्सर्वदा पुरुषेणानुभूयते वृत्तिमत्तत्कस्य हेतोर्यतः पुरुषोऽपरिणामी परिणामित्वे चित्तवत्पुरुषोऽपि ज्ञाताज्ञातवि-

---

१ क. ख. झ. °र्थश्च इ° । २ ख. ज. झ. °सज्येर° ।

यदि चित्तवत्प्रभुरपि पुरुषः परिणमेत[1]ततस्तद्विषयाश्चित्तवृत्तयः शब्दादिविषयवज्ज्ञाताज्ञाताः स्युः । सदाज्ञातत्वं तु मनसस्तत्प्रभोः पुरुषस्यापरिणामित्वमनुमापयति ॥ १८ ॥

स्यादाशङ्का चित्तमेव स्वाभासं विषयाभासं च भविष्यतीत्यग्निवत्—

**न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥**

यथेतराणीन्द्रियाणि शब्दादयश्च दृश्यत्वान्न स्वाभासानि तथा मनोऽपि प्रत्येतव्यम् ।

न चाग्निरत्र दृष्टान्तः । न ह्यग्निरात्मस्वरूपमप्रकाशं प्रकाश-

---

विषयो भवेत् । ज्ञातविषय एव त्वयम् । तस्मादपरिणामी । ततश्च परिणामिभ्योऽतिरिच्यत इति । तदेतदाह—यदि चित्तवदिति । सदा ज्ञातत्वं तु मनसः सवृत्तिकस्य तस्य यः प्रभुः स्वामी भोक्तेति यावत् । तस्य प्रभोः पुरुषस्यापरिणामित्वमनुमापयति । तथा चापरिणामिनस्तस्य पुरुषस्य परिणामिनश्चित्ताद्भेद इति भावः ॥ १८ ॥

अत्र वैनाशिकमुत्थापयति—स्यादाशङ्केति । अयमर्थः—स्यादेतदेवं यदि चित्तमात्मनो विषयः स्यात्[4], अपि तु स्वप्रकाशमेतद्विषयाभासं पूर्वचित्तं प्रतीत्य समुत्पन्नं तत्कुतः पुरुषस्य सदाज्ञातविषयत्वं कुतस्तरां वाऽपरिणामितया परिणामिनश्चित्ताद्भेद इति । न तत्स्वाभासं दृश्यत्वात् । भवेदेतदेवं यदि स्वसंवेदनं चित्तं स्यान्न त्वेतदस्ति । तद्धि परिणामितया नीलादिवदनुभवव्याप्यं यच्चानुभवव्याप्यं न[5] तत्स्वाभासं भवितुमर्हति । स्वात्मनि वृत्तिविरोधात् । न हि तदेव क्रिया च कर्मकारकं च । नहि पाकः पच्यते छिदा वा छिद्यते । पुरुषस्त्वपरिणामी नानुभवकर्मेति नास्मिन्स्वयंप्रकाशता न युज्यते । अपराधीनप्रकाशता ह्यस्य स्वयंप्रकाशता नानुभवकर्मता । तस्माद्दृश्यत्वाद्दर्शनकर्म चित्तं न स्वाभासम् । आत्मप्रकाशप्रतिबिम्ब[7]तयैव चित्तस्य तद्वृत्तिविषयाः प्रकाशन्ते इति भावः ।

ननु दृश्योऽग्निः स्वयंप्रकाशश्च । न हि यथा घटादयोऽग्निना व्यज्यन्त एवमाग्निरन्यन्तरेणेत्यत आह—न चाग्निरत्रेति । कस्मात् । नहीति । मा नामाग्निरन्यन्तरात्प्रकाशि विज्ञानात्तु प्रकाशत इति न स्वयं प्रकाशत इति न व्यभिचार इत्यर्थः ।

---

१ ग. घ. ङ. °मेत तत° । २ क. ध. च वैशेषिकाणां चित्तात्मवादिनां च भ° । झ. ज. वैनाशिकानां चित्तात्मवादिनां भ° ३ ग. घ. ङ. °व्यत्य° । ४ ज. °त्, न त्वेतदस्ति । अ° । ५ ख. झ. °र्भ च का° । ६ ख. °ता यु° । ७ ख. झ. °बिम्बितस्यैव । ८ ज. तथाऽपि चि° । ९ ज. झ. °श इ° ।

यति । प्रकाशश्चायं प्रकाश्यप्रकाशकसंयोगे दृष्टः । न च स्वरूपमात्रेऽस्ति संयोगः । किंच स्वाभासं चित्तमित्यग्राह्यमेव कस्यचिदिति शब्दार्थः । तद्यथा—स्वात्मप्रतिष्ठमाकाशं न परप्रतिष्ठमित्यर्थः । स्वबुद्धिप्रचारप्रतिसंवेदनात्सत्त्वानां प्रवृत्तिर्दृश्यते—क्रुद्धोऽहं भीतोऽहममुत्र मे रागोऽमुत्र मे क्रोध इति । एतत्स्वबुद्धेरग्रहणे न युक्तमिति ॥ १९ ॥

**एकसमये चोभयानवधारणम् ॥ २० ॥**

न चैकस्मिन्क्षणे स्वपररूपावधारणं युक्तं, क्षणिकवादिनो यद्भवनं सैव क्रिया तदेव च कारकमित्यभ्युपगमः ॥ २० ॥

---

**प्रकाशश्चायमिति** । अयमिति पुरुषस्वभावात्प्रकाशाद्व्यवच्छिनत्ति, क्रियारूपः प्रकाश इति यावत् । एतदुक्तं भवति—या या क्रिया सा सा सर्वा कर्तृकरणकर्मसंबन्धेन दृष्टा । यथा पाको दृष्टश्चैत्राग्नितण्डुलसंबन्धेन यथा वा प्रकाशनम् । तथा च प्रकाशोऽपि क्रियेति तयाऽपि तथा भवितव्यम् । संबन्धश्च भेदाश्रयो नाभेदे संभवतीत्यर्थः । **किंच स्वाभासं चित्तमित्यग्राह्यमेव कस्यचिदिति शब्दार्थः** । स्यादेतत् । मा भूद्ग्राह्यं चित्तम् । न हि ग्रहणस्याकारणस्याव्यापकस्य च निवृत्तौ चित्तनिवृत्तिरित्यत आह—**स्वबुद्धीति** । बुद्धिश्चित्तं, प्रचारा व्यापाराः, सत्त्वाः प्राणिनः, चित्तस्य वृत्तिभेदाः क्रोधलोभादयः स्वाश्रयेण चित्तेन स्वविषयेण च सह प्रत्यात्ममनुभूयमानाश्चित्तस्याग्राह्यतां विघटयन्तीत्यर्थः । स्वबुद्धिप्रचारप्रतिसंवेदनमेव विशदयति—क्रुद्धोऽहमिति ॥ १९ ॥

**एकसमये चोभयानवधारणम्** । स्वाभासं विषयाभासं चित्तमिति ब्रुवाणो न तावद्येनैव व्यापारेणाऽऽत्मानमवधारयति तेनैव विषयमपीति वक्तुमर्हति । न ह्यविलक्षणो व्यापारः कार्यभेदाय पर्याप्तस्तस्माद्व्यापारभेदोऽङ्गीकर्तव्यः । न च वैनाशिकानामुत्पत्तिभेदा[2]तिरिक्तोऽस्ति व्यापारः । न चैकस्या एवोत्पत्तेरविलक्षणायाः कार्यवैलक्षण्यसंभवः । तस्याऽऽकास्मिकत्वप्रसङ्गात् । न चैकस्योत्पत्तिद्वयसंभवः । तस्मादर्थस्य च ज्ञानरूपस्य चावधारणं नैकस्मिन्समय इति । तदेतद्भाष्येणोच्यते—**न चैकस्मिन्क्षण इति** । तथा चोक्तं वैनाशिकैः—

भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते ॥ इति ।

तस्माद्दृश्यत्वमे[3]ताश्चित्तस्य सदातनं स्वाभासत्वमपनयद्द्रष्टारं च द्रष्टुरपरिणामित्वं च दर्शयतीति सिद्धम् ॥ २० ॥

---

१ क. ख. °काशमित्यप्रतिष्ठमेवेत्य° । २ क. °भेदोऽति° । ३ ज. °मेव चित्त° ।

स्यान्मतिः स्वरसनिरुद्धं चित्तं चित्तान्तरेण समनन्तरेण गृह्यत इति—

चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृति-संकरश्च ॥ २१ ॥

अथ चित्तं चेच्चित्तान्तरेण गृह्येत बुद्धिबुद्धिः केन गृह्यते, साऽप्यन्यया साऽप्यन्ययेत्यतिप्रसङ्गः। स्मृतिसंकरश्च यावन्तो, बुद्धिबुद्धीनामनुभवास्तावत्यः स्मृतयः प्राप्नुवन्ति। तत्संकराच्चैकस्मृत्यनवधारणं च स्यादित्येवं बुद्धिप्रतिसंवेदिनं पुरुषमपलपद्भिर्वैनाशिकैः सर्वमेवाऽऽकुलीकृतम्। ते तु भोक्तृस्वरूपं यत्र क्वचन कल्पयन्तो न न्यायेन संगच्छन्ते। केचित्तु सत्त्वमात्रमपि परिकल्प्यास्ति स सत्त्वो य एतान्पञ्च स्कन्धान्निक्षिप्यान्यांश्च प्रतिसंदधातीत्युक्त्वा तत एव पुनस्त्रस्यन्ति। तथा स्कन्धानां महन्निर्वेदाय विरागायानुत्पादाय प्रशान्तये गुरोरन्तिके ब्रह्मचर्यं चरिष्यामीत्युक्त्वा सत्त्वस्य पुनः सत्त्वमेवापह्नुवते। सांख्ययोगादयस्तु प्रवादाः स्वशब्देन पुरुषमेव स्वामिनं चित्तस्य भोक्तारमुपयन्तीति ॥ २१ ॥

---

पुनर्वैनाशिकमुत्थापयति—स्यान्मतिः। मा भूद्दृश्यत्वेन स्वसंवेदनम्। एवमप्यात्मा न सिध्यति। स्वसंतानवर्तिना चरमचित्तक्षणेन स्वरसनिरुद्धस्वजनकचित्तक्षणग्रहणादित्यर्थः। समं च तज्ज्ञानत्वेनानन्तरं चाव्यवहितत्वेन समनन्तरं तेन। चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च। बुद्धिरिति चित्तमित्यर्थः। नागृहीता चरमा बुद्धिः पूर्वबुद्धिग्रहणसमर्था। नहि बुद्ध्याऽसंबद्धा पूर्वबुद्धिर्बुद्धा भवितुमर्हति। न ह्यगृहीतदण्डो दण्डिनमवगन्तुमर्हति। तस्मादनवस्थेति। विज्ञानवेदनासंज्ञारूपसंस्काराः स्कन्धाः। सांख्ययोगादयः प्रवादाः सांख्याश्च योगाश्च त एवाऽऽदयो येषां वैशेषिकादिप्रवादानां ते सांख्ययोगादयः प्रवादाः। सुगममन्यत् ॥ २१ ॥

स्यादेतत्। यदि चित्तं न स्वाभासं नापि चित्तान्तरवेद्यमात्मनाऽपि कथं मोक्ष्यते चित्तम्। न खल्वात्मनः स्वयंप्रकाशस्याप्यस्ति काचित्क्रिया। न च तामन्तरेण कर्ता न चासंबद्धश्चित्तेन कर्मणा तस्य भोक्ताऽतिप्रसङ्गादित्याशयवान्पृच्छति—

---

१ ख. ग. °ण गृ°। २ ग. घ. ङ. च. ज. °चित्सत्त्व°। ३ ग. महानिर्वे°। ४ क. °दनं स्वप्रकाशेन। ए°। ५ क. °राः पञ्च स्क°।

कथम्—

**चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥**

अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति । तस्याश्च प्राप्तचैतन्योपग्रहस्वरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिराख्यायते । तथा चोक्तम्—

न पातालं न च विवरं गिरीणां
नैवान्धकारं कुक्षयो नोदधीनाम् ।
गुहा यस्यां निहितं ब्रह्म शाश्वतं
बुद्धिवृत्तिमविशिष्टां कवयो वेदयन्ते ॥ इति ॥ २२ ॥

अतश्चैतदभ्युपगम्यते—

**द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥**

---

कथमिति । सूत्रेणोत्तरमाह—चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् । यत्तदवोचद्वृत्तिसारूप्यमितरत्रेति तदितः समुत्थितम् । चितेः स्वबुद्धिसंवेदनं बुद्धेस्तदाकारापत्तौ चितिप्रतिबिम्बाधारतया तद्रूपतापत्तौ सत्याम् । यथा हि चन्द्रमसः क्रियामन्तरेणापि संक्रान्तचन्द्रप्रतिबिम्बममलं जलमचलं चलमिवाऽऽलक्ष्यमरालमिव[1] चन्द्रमसमवभासयत्येवं विनाऽपि चितिव्यापारमुपसंक्रान्तचितिप्रतिबिम्बं चित्तं स्वगतया क्रियया क्रियावतीमसंगतामपि संगतां चितिशक्तिमवभासयद्भोग्यभावमासादयद्भोक्तृभावमापादयति तस्या इति सूत्रार्थः । भाष्यमप्येतदर्थमसकृत्तत्र तत्र व्याख्यातमिति न व्याख्यातमत्र । बुद्धिवृत्त्यविशिष्टत्वे ज्ञानवृत्तेरागममुदाहरति—तथा चोक्तं—न पातालमिति । शाश्वतस्य शिवस्य ब्रह्मणो विशुद्धस्वभावस्य चितिच्छायापत्तिं मनोवृत्तिमेव चितिच्छायापन्नत्वाच्चितेरप्यविशिष्टां गुहां वेदयन्ते । तस्यामेव गुहायां तद्गुह्यं ब्रह्म तदपनये तु स्वयंप्रकाशमनावरणमनुपसर्गं प्रद्योतते चरमदेहस्य भगवत इति ॥ २२ ॥

तदेवं दृश्यत्वेन चित्तस्य परिणामिनस्तदतिरिक्तः पुमानपरिणतिधर्मोपपादितः संप्रति लोकप्रत्यक्षमप्यत्र प्रमाणयति—अतश्चैतदिति । अवश्यं चैतदित्यर्थः । द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् । यथा हि नीलाद्यनुरक्तं चित्तं नीलाद्यर्थं प्रत्यक्षेणावभा-

---

१ क. ख. च. ज. °वारमा° । २ क. °वालं म° । ३ ख. ज. °पन्नम° ।

मनो हि मन्तव्येनार्थेनोपरक्तं, तत्स्वयं च विषयत्वाद्विषयिणा पुरुषेणाऽऽत्मीयया वृत्त्याऽभिसंबद्धं, तदेतच्चित्तमेव द्रष्टृदृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमप्यविषयात्मकमिवाचेतनं चेतनमिव स्फटिकमणिकल्पं सर्वार्थमित्युच्यते ।

तदनेन चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमित्याहुः । अपरे चित्तमात्रमेवेदं सर्वं नास्ति खल्वयं गवादिर्घटादिश्च सकारणो लोक इति । अनुकम्पनीयास्ते । कस्मात्, अस्ति हि तेषां भ्रान्तिबीजं सर्वरूपाकारनिर्भासं चित्तमिति । समाधिप्रज्ञायां प्रज्ञेयोऽर्थः प्रतिबिम्बीभूतस्तस्याऽऽलम्बनीभूतत्वादन्यः ।

---

स्थापयत्येवं द्रष्टृच्छायापत्त्या तदनुरक्तं चित्तं द्रष्टारमपि प्रत्यक्षेणावस्थापयति अस्ति हि [३]थाकारं ज्ञानं नीलमहं संप्रत्येमीति । तस्माज्ज्ञेयवत्तज्ज्ञाताऽपि प्रत्यक्षसिद्धोऽपि न विविच्यावस्थापितो यथा जले चन्द्रमसो बिम्बम् । न त्वेतावता तदप्रत्यक्षम् । न चास्य जलगतत्वे तदप्रमाणमिति चन्द्ररूपेऽप्यप्रमाणं भवितुमर्हति । तस्माच्चित्तप्रतिबिम्बतया[४] चैतन्यगोचराऽपि चित्तवृत्तिर्न चैतन्यागोचरेति । तदिदं सर्वार्थत्वं चित्तस्येति । तदेतदाह—मनो हीति । न केवलं तदाकारापत्त्या मन्तव्येनार्थेनोपरक्तं मनोऽपि तु स्वयं चेति । चकारो भिन्नक्रमः पुरुषेणेत्यस्यानन्तरं द्रष्टव्यः । तच्छायापात्तिः पुरुषस्य वृत्तिः ।

इयं च चैतन्यच्छायापत्तिश्चित्तस्य वैनाशिकैरभ्युपेतव्या । कथमन्यथा चित्ते चैतन्यमेत आरोपयांबभूवुरित्याह—तदनेनेति । केचिद्वैनाशिका बाह्यार्थवादिनः । अपरे विज्ञानमात्रवादिनः । ननु यदि चित्तमेव द्रष्ट्राकारं दृश्याकारं चानुभूयते हन्त चित्ताद्भिन्नावेवाऽऽस्तां द्रष्टृदृश्यौ । यथाऽऽहुः—

अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ इति ।

तत्कथमेतेऽनुकम्पनीया इत्यत आह—समाधिप्रज्ञायामिति । ते खलूक्ताभिरुपपत्तिभिश्चित्तातिरिक्तं पुरुषमभ्युपगम[६]य्याप्यष्टाङ्गयोगोपदेशेन समाधिप्रज्ञायामात्मगोचरायामवतार्य बोधयितव्याः । तद्यथा—समाधिप्रज्ञायां प्रज्ञेयोऽर्थ आत्मा प्रतिबिम्बीभूतोऽन्यः कस्मात्तस्याऽऽत्मन आलम्बनीभूतत्वात् । अथ चित्तादभिन्नमेव कस्मान्नाऽऽलम्बनं

---

१ ग. ततः स्वयं । २ क. द्रष्ट्याकारं । ३ ख. ज. संवेद्मीति । ४ झ. °बिम्बितत° । ५ ख. °ममुपलभ्याप्य° । ६ क. °गमय्याप्य° ।

स चेदर्थश्चित्तमात्रं स्यात्कथं प्रज्ञयैव प्रज्ञारूपमवधार्येत । तस्मात्प्रतिबिम्बीभूतोऽर्थः प्रज्ञायां येनावधार्यते स पुरुष इति[1] । एवं ग्रहीतृग्रहणग्राह्यस्वरूपचित्तभेदात्त्रयमप्येतज्जातितः प्रविभजन्ते ते सम्यग्दर्शिनस्तैरधिगतः पुरुषः ॥ २३ ॥

कुतश्च—

**तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥ २४ ॥**

तदेतच्चित्तमसंख्येयाभिर्वासनाभिरेव चित्रीकृतमपि परार्थं परस्य भोगापवर्गार्थं न स्वार्थं संहत्यकारित्वाद्गृहवत् । संहत्यकारिणा चित्तेन न स्वार्थेन भवितव्यं, न सुखचित्तं[2] सुखार्थं न ज्ञानं ज्ञानार्थमुभयमप्येतत्परार्थम् । यश्च भोगेनापवर्गेण चार्थे-

---

भवतीति यदि युक्तिबोधितोऽपि वैयात्याद्[3]वदेत्तत्र हेतुमाह—स चेदात्मरूपोऽर्थश्चित्तमात्रं स्यान्न तु ततो व्यतिरिक्तस्ततः **कथं प्रज्ञयैव प्रज्ञारूपमवधार्येत** । स्वात्मनि वृत्तिविरोधात् । उपसंहरति—तस्मादिति । समीचीनोपदेशेनानुकम्पिता भवन्तीत्याह—एवमिति[4] । जातितः स्वभावत इत्यर्थः ॥ २३ ॥

चित्तातिरिक्तात्मसद्भावे हेत्वन्तरमवतारयति—कुतश्चेति[5] । **तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात्** । यद्यप्यसंख्येयाः कर्मवासनाः क्लेशवासनाश्च चित्तमेवाधिशेरते नतु पुरुषम् । तथा च वासनाधीना विपाकाश्चित्ताश्रयतया चित्तस्य भोक्तृतामावहन्ति, भोक्तुरर्थे च भोग्यमिति सर्वं चित्तार्थं प्राप्तं, तथाऽपि तच्चित्तमसंख्येयवासनाविचित्रमपि परार्थम् । कस्मात् । संहत्यकारित्वादिति सूत्रार्थः । व्याचष्टे—तदेतदिति । स्यादेतत् । चित्तं संहत्यापि करिष्यति स्वार्थं च भविष्यति कः खलु विरोध इति यदि कश्चिद्ब्रूयात्तं प्रत्याह—संहत्यकारिणेति । सुखचित्तमिति[6] भोगमुपलक्षयति । तेन दुःखचित्तमपि[7] द्रष्टव्यम् । ज्ञानमित्यपवर्ग उक्तः । एतदुक्तं भवति—सुखदुःखे चित्ते प्रतिकूलानुकूलात्मके नाऽऽत्मनि संभवतः । स्वात्मनि वृत्तिविरोधात् । न चान्योऽपि संहत्यकारी साक्षात्परम्परया वा सुखदुःखे विदधानस्ताभ्यामनुकूलनीयः प्रतिकूलनीयो वा । तस्माद्यः साक्षात्परम्परया वा न सुखदुःखयोर्व्याप्रियते स एवाऽऽभ्यामनुकूलनीयः प्रतिकूलनीयो वा । स च नित्योदासीनः पुरुष

---

१ ग. °रुष इति ॥ २३ ॥ २ क. ख. सुखं चि° । ३ ख. वैधर्म्याद्वैजात्या° । ज. झ. वैजात्या° । ४ ख. ज. झ. °वमेतदिति । ५ ख. इतश्चेति । ६ क ख. सुखं चि° । ७ क. दुःखं चि° ।

नार्थवान्पुरुषः स एव परो न परः सामान्यमात्रम्। यत्तु किंचित्परं सामान्यमात्रं स्वरूपेणोदाहरेद्वैनाशिकस्तत्सर्वं संहत्यकारित्वात्परार्थमेव स्यात्। यस्त्वसौ परो विशेषः स न संहत्यकारी पुरुष इति ॥ २४ ॥

विशेषदर्शिन आत्मभावभावनाविनि-
वृत्तिः ॥ २५ ॥

यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्ताऽनुमीयते तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्माभिनिर्वर्तितमित्यनुमीयते। तस्याऽऽत्मभावभावना स्वाभाविकी प्रवर्तते। यस्याभावादिदमुक्तं स्वभावं मुक्त्वा दोषाद्येषां पूर्वपक्षे रुचिर्भवत्यरुचिश्च निर्णये भवति। तत्राऽऽत्मभावभावना कोऽहमासं कथमहमासं किंस्विदिदं कथंस्विदिदं के भविष्यामः कथं वा भविष्याम इति। सा

---

एवमप्यवृज्यते येन ज्ञानेन तस्यापि ज्ञेयतन्त्रत्वात्स्वात्मनि च वृत्तिविरोधान्न ज्ञानार्थत्वम्। न बाह्यविषयादस्मादपवर्गसंभवो विदेहप्रकृतिलयानामपवर्गासंभवात्। तस्मात्तज्ज्ञानमपि पुरुषार्थमेव न तत्स्वार्थं नापि परमात्रार्थम्। संहतपरार्थत्वे चानवस्थाप्रसङ्गादसंहतपरार्थसिद्धिरिति ॥ २४ ॥

तदेवं कैवल्यमूलबीजं युक्तिमयमात्मदर्शनमुक्त्वा तदुपदेशाधिकृतं पुरुषमनधिकृतपुरुषान्तराद्व्यावृत्तमाह—विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः। यस्याऽऽत्मभावनाऽस्ति तस्याष्टाङ्गयोगोपदेशादनुतिष्ठतो युञ्जानस्य तत्परिपाकाच्चित्तसत्त्वपुरुषयोर्विशेषदर्शनादात्मभावभावना निवर्तते। यस्याऽऽत्मभावभावनैव नास्ति नास्तिकस्य तस्योपदेशानधिकृतस्यापरिनिश्चितात्मतत्परलोकभावस्य नोपदेशो न विशेषदर्शनं नाऽऽत्मभावभावनानिवृत्तिरिति सूत्रार्थः। नन्वात्मभावभावनायाश्चित्तवर्तिन्याः कुतोऽवगम इत्यत आह—यथा प्रावृषीति। प्राग्भवीयं तत्त्वदर्शनबीजमपवर्गभागीयं यत्कर्माष्टाङ्गयोगानुष्ठानं तदेकदेशानुष्ठानं वा तदभिनिर्वर्तितमस्तीत्यनुमीयते। तस्य चाऽऽत्मभावभावनाऽवश्यमेव स्वाभाविकी वस्त्वभ्यासं विनाऽपि प्रवर्तते। अनधिकारिणमागमिनां वचनेन दर्शयति—यस्याभावादिदमिति। पूर्वपक्षो नास्ति कर्मफलं परलोकिनोऽभावात्परलोकाभाव इति, तत्र रुचिररुचिश्च निर्णये पञ्चविंशतितत्त्वविषये।

---

१ ग. च. ज. °नाविनि°। २ ख. झ. न चान्यवि°। ३ ज. °नाविनि°।

तु विशेषदर्शिनो निवर्तते । कुतः । चित्तस्यैवैष विचित्रः परिणामः, पुरुषस्त्वसत्यामविद्यायां शुद्धश्चित्तधर्मैरपरामृष्ट इति । ततोऽस्याऽऽत्मभावभावना कुशलस्य निवर्तत इति ॥ २५ ॥

**तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥**

तदानीं यदस्य चित्तं विषयप्राग्भारमज्ञाननिम्नमासीत्तदस्यान्यथा भवति कैवल्यप्राग्भारं विवेकजज्ञाननिम्नमिति ॥ २६ ॥

**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥**

प्रत्ययविवेकनिम्नस्य सत्त्वपुरुषान्यताख्यातिमात्रप्रवाहिणश्चित्तस्य तच्छिद्रेषु प्रत्ययान्तराण्यस्मीति वा ममेति वा जानामीति वा न जानामीति वा । कुतः, क्षीयमाणबीजेभ्यः पूर्वसंस्कारेभ्य इति ॥ २७ ॥

**हानमेषां क्लेशवदुक्तम् ॥ २८ ॥**

---

आत्मभावभावना प्राग्व्याख्याता । विशेषदर्शिनः परामर्शमाह—**चित्तस्यैवेति** । त(अ)स्य विशेषदर्शनकुशलस्याऽऽत्मभावभावना निवर्तत इति ॥ २५ ॥

अथ विशेषदर्शिनः कीदृशं चित्तमित्यत आह—**तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्** । निगदव्याख्यातम् ॥ २६ ॥

स्यादेतत् । विशेषदर्शनं चेद्विवेकनिष्ठं, न जातु चित्तं व्युत्थितं स्यात् । दृश्यते चास्य भिक्षाटतो व्युत्थितमित्यत आह—**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः** । **प्रत्ययेति** । प्रतीयते येन स प्रत्ययश्चित्तसत्त्वं तस्माद्विवेकश्चितेः । तेन निम्नस्य जानामीति साक्षान्मोक्षो विविच्य दर्शितो न जानामीति मोहस्तन्मूलावहंकारममकारावहमस्तीति वा ममेति वा दर्शितौ । क्षीयमाणानि च तानि बीजानि चेति समासः । पूर्वसंस्कारेभ्यो व्युत्थानसंस्कारेभ्यः ॥ २७ ॥

स्यादेतत् । सत्यपि विवेकविज्ञाने व्युत्थानसंस्कारा यदि प्रत्ययान्तराणि प्रसुवते कस्तर्हि हानहेतुरेतेषां यतः प्रत्ययान्तराणि न पुनः प्रसुवीरन्नित्यत आह—**हानमेषां क्लेशवदुक्तम्** । अपरिपक्वविवेकज्ञानस्याक्षीयमाणा व्युत्थानसंस्काराः प्रत्ययान्तरं प्रसु-

---

१ क. °स्य विनि° । २ ख. °कनि° । ३ च. ज. °भ्यः ॥ २७ ॥ विवेकप्रत्ययनि° । ४ क. ख. च. °वाहारोहि° । ५ क. ख. झ. °ना विनि° । ६ क. ख. °न्मोक्षे वि° । झ. °न्मोक्षेऽवि° । ७ क. दर्शिते ।

यथा क्लेशा दग्धबीजभावा न प्ररोहसमर्था भवन्ति तथा ज्ञानाग्निना दग्धबीजभावः पूर्वसंस्कारो न प्रत्ययप्रसूर्भवति। ज्ञानसंस्कारास्तु चित्ताधिकारसमाप्तिमनुशेरत इति न चिन्त्यन्ते ॥ २८ ॥

**प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः २९ ॥**

यदाऽयं ब्राह्मणः प्रसंख्यानेऽप्यकुसीदस्ततोऽपि न किंचित्प्रार्थयते। तत्रापि विरक्तस्य सर्वथा विवेकख्यातिरेव भवतीति संस्कारबीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते। तदाऽस्य धर्ममेघो नाम समाधिर्भवति ॥ २९ ॥

**ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥**

तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति। कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति। क्लेशकर्मनिवृत्तौ

---

षते न तु परिपक्वविवेकज्ञानस्य क्षीणाः प्रत्ययान्तराणि प्रसोतुमर्हन्ति। यथा विवेकच्छिद्रसमुत्पन्ना अपि क्लेशा न संस्कारान्तरं प्रसुवते तत्कस्य हेतोस्तदेते क्लेशा विवेकज्ञानवह्निदग्धबीजभावा इति। एवं व्युत्थानसंस्कारा अपीति। अथ व्युत्थानसंस्कारा विवेकज्ञानसंस्कारैर्निरोद्धव्या विवेकसंस्काराश्च निरोधसंस्कारैर्निरोधसंस्काराणां त्वबाह्यविषयत्वं दर्शितं निरोधोपायः प्रायश्चिन्तनीय इत्यत आह—ज्ञानसंस्कारास्त्विति। परवैराग्यसंस्कारा इत्यर्थः ॥ २८ ॥

तदेवं सूत्रकारो व्युत्थाननिरोधोपायं प्रसंख्यानमुक्त्वा प्रसंख्याननिरोधोपायमाह—प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः। ततः प्रसंख्यानान्न किंचित्सर्वभावाधिष्ठातृत्वादि प्रार्थयते। प्रत्युत तत्रापि क्लिश्नाति परिणामित्वदोषदर्शनेन विरक्तः सर्वथा विवेकख्यातिरेव भवति। एतदेव विवृणोति—तत्रापीति। यदा व्युत्थानप्रत्यया भवेयुस्तदा नायं ब्राह्मणः सर्वथा विवेकख्यातिर्यतस्तस्य न प्रत्ययान्तराणि भवन्ति ततः सर्वथा विवेकख्यातिरिति। तदाऽस्य धर्ममेघः समाधिर्भवति। एतदुक्तं भवति—प्रसंख्याने विरक्तस्तन्निरोधमिच्छन्धर्ममेघं समाधिमुपासीत। तदुपासने च सर्वथा विवेकख्यातिर्भवति। तथा च तं निरोद्धुं पारयतीति। २९ ॥

तस्य च प्रयोजनमाह—ततः क्लेशकर्मनिवृत्तिः। कामात्पुनर्जीवन्नेव विद्वा-

---

१ क. ख. च. चिन्त्यते। २ ख. °व मु° । ज. झ. °व विमु° ।

